# BIBLIOTHECA INDIC

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE PATRONAGE OF THE
HON. COURT OF DIRECTORS OF THE EAST INDIA COMPANY
AND THE SUPERINTENDENCE OF THE
ASIATIC SOCIETY OF BENGAL
New Series No 17



# THE NARADA PANCHARATRA.

EDITED

BY

Revd K. M. Banerjea

2 Fasciculus I.

CALCUTTA

PRINTED AT BISHOP'S COLLEGE PRESS

1861

# नारदपञ्चरात्रं ॥

## प्रथमोऽध्यायः ॥

ओँ नमो भगवते वासुदेवाय ॥

---

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥

गणेशशेषब्रह्मेशदिनेशप्रमुखाः सुराः ।
कुमाराद्याश्च मुनयः सिद्धाश्च कपिलादयः ॥ १ ॥
लक्ष्मी सरस्वती दुर्गा साविची राधिका पराः ।
भक्त्या नमन्ति यं शश्वत्तं नमामि परात्परं ॥ २ ॥
ध्यायन्ते सन्ततं सन्तो योगिनो वैष्णवाः सदा ।
ज्योतिरभ्यन्तरे रूपमतुलं श्यामसुन्दरं ॥ ३ ॥
ध्याये तं परमं ब्रह्म परमात्मानमीश्वरं ।
निरीहमतिनिर्लिप्तं निर्गुणं प्रकृतेः परं ॥ ४ ॥
सर्व्वेशं सर्वरूपञ्च सर्वकारणकारणं ।
सत्यं नित्यञ्च पुरुषं पुराणं परमव्ययं ॥ ५ ॥
मङ्गल्यं मङ्गलार्हञ्च मङ्गलं मङ्गलालयं ।
स्वेच्छामयं परं धाम भगवन्तं सनातनं ॥ ६ ॥

स्तुवन्ति वेदा यं शश्वन्नान्तं जानन्ति यस्य ते ।
तं स्तौमि परमानन्दं सानन्दं नन्दनन्दनं ॥ ७ ॥
भक्तप्रियञ्च भक्तेशं भक्तानुग्रहविग्रहं ।
श्रीदं श्रीशं श्रीनिवासं श्रीकृष्णं राधिकेश्वरं ॥ ८ ॥
ज्ञानामृतं ज्ञानसिन्धोः संप्राप्य शङ्कराद्गुरोः ।
परावराच्च परमाद्योगीन्द्राणां गुरोर्गुरोः ॥ ९ ॥
वेदेभ्यो दधिसिन्धुभ्यश्चतुर्भ्यः सुमनोहरं ।
तज्ज्ञानमन्थदण्डेन संनिर्मथ्य नवं नवं ॥ १० ॥
नवनीतं समुद्धृत्य नत्वा शम्भोः पदाम्बुजं ।
विधिपुत्रो नारदोऽहं पञ्चरात्रं समारभे ॥ ११ ॥

ओं

नारायणाश्रमे पुण्ये पुण्यक्षेत्रे च भारते ।
सिद्धे नारायणक्षेत्रे वटमूले सुपुण्यदे ॥ १२ ॥
कृष्णांशं कृष्णभक्तञ्च परं कृष्णपरायणं ।
श्रीकृष्णचरणाम्भोजध्यानैकतानमानसं ॥ १३ ॥
जपन्तं परमं ब्रह्म कृष्ण इत्यक्षरद्वयं ।
सुखासने सुखासीनं कृष्णद्वैपायनं मुनिं ॥ १४ ॥
पप्रच्छ शुकदेवश्च सर्व्वज्ञं पितरं मुनिः ।
कारणञ्च पुराणानां पुराणं परमव्ययं ॥ १५ ॥

श्रीशुक उवाच ।

भगवन् सर्व्वतत्त्वज्ञ वेदवेदाङ्गपारग ।
यद्यत्प्रकारं ज्ञानञ्च निगूढं श्रुतिसम्मतं ॥ १६ ॥

तेषु यत् सारभूतञ्चाप्यज्ञानान्धप्रदीपकं ।
तत्तत् सर्व्वं समालोच्य मां बोधयितुमर्हसि ॥ १७ ॥
स पिता ज्ञानदाता यो ज्ञानं तत् कृष्णभक्तिदं ।
सा भक्तिः परमा शुद्धा कृष्णदास्यप्रदा च या ॥ १८ ॥
तदेव दास्यं भक्तं यत् साक्षाच्चरणसेवनं ।
नित्यं गोलोकवासञ्च पुरतः स्तवनं हरेः ॥ १९ ॥
शश्वन्निमेषरहितं तत्पादपद्मदर्शनं ।
शश्वत्तत्साईमालापसेवाकर्म्मनियोजनं ॥ २० ॥
तेन सार्द्धमविच्छेदस्थानं परमशोभनं ।
भक्तानां वाञ्छितं वस्तु सारभूतं श्रुतौ श्रुतं ॥ २१ ॥
पुत्रस्य वचनं श्रुत्वा व्यासदेवो जहास सः ।
विज्ञाय ज्ञानिनं पुत्रं परमाह्लादमाप ह ॥ २२ ॥
पुत्रं शुभाशिषं कृत्वा सर्व्वज्ञः सर्व्वभावनः ।
यथा प्राप्तं गुरुमुखात् प्रवक्तुमुपचक्रमे ॥ २३ ॥

श्रीव्यास उवाच ॥

शुक धन्योऽसि मान्योऽसि पुण्यरूपोऽसि भारते ।
पुत्रेण भवताऽस्माकं कुलं मुक्तञ्च पावनं ॥ २४ ॥
स पुत्रः कृष्णभक्तो यो भारते सुयशस्करः ।
पुनाति पुंसां शतकं जन्ममात्रेण लीलया ॥ २५ ॥
मातामहानां शतकं मातरं मातृमातरं ।
सोदरान् बान्धवांश्चैव भृत्यान् पत्नीं सहात्मजां ॥ २६ ॥
यत्कन्यां प्रतिगृह्णाति तदादिपुरुषत्रयं ।

कन्याप्रदाता श्वशुरो जीवन्मुक्तः सभार्य्यकः ॥ २७ ॥
स्वयं विधाता भगवान् परं कृष्णपरायणः ।
कृष्णभक्तो वशिष्ठस्तु तत्सुतो वैष्णवः स्वयं ॥ २८ ॥
वैष्णवस्तत्सुतः शक्तिः कृष्णध्यानैकमानसः ।
पराशरश्च तत्पुत्रः कृष्णपादाब्जसेवया ॥ २९ ॥
जीवन्मुक्तो महाज्ञानी योगीन्द्राणां गुरोर्गुरुः ।
अहं वेदविभक्ता च श्रीकृष्णपादसेवया ॥ ३० ॥
गुरुर्मे भगवान् साक्षाद्योगीन्द्रो नारदो मुनिः ।
गुरोर्गुरुर्म्मे शम्भुश्च योगीन्द्राणां गुरोर्गुरुः ॥ ३१ ॥
तेषां पुण्येन पुत्रस्त्वं पुण्यराशिश्च मूर्त्तिमान् ।
पद्मानां मम पुंसाञ्च प्रकाशो भास्करः स्वयं ॥ ३२ ॥
श्रीकृष्णचरणाम्भोजं पादाब्जं नारदेशयोः ।
सरस्वतीं नमस्कृत्य ज्ञानं वक्ष्ये सनातनं ॥ ३३ ॥
श्रूयतां पञ्चरात्रञ्च वेदसारमभीप्सितं ।
पञ्चसंवादमिष्टञ्च भक्तानामभिवाञ्छितं ॥ ३४ ॥
प्राणाधिकं प्रियं शुद्धं परं ज्ञानामृतं शुभं ।
पुरा कृष्णो हि गोलोके शतशृङ्गे च पर्व्वते ॥ ३५ ॥
सुपुण्ये विरजातीरे वटमूले मनोहरे ।
पुरतो राधिकायाश्च ब्रह्माणं कमलोद्भवं ॥ ३६ ॥
तमुवाच महाभक्तं स्तुवन्तं प्रणतं सुत ।
पञ्चरात्रमिदं पुण्यं श्रुत्वा च जगतां विधिः ॥ ३७ ॥
प्रणम्य राधिकां कृष्णं प्रययौ शिवमन्दिरं ।

भक्त्या तं पूजयामास शङ्करः परमादरं ॥ ३८ ॥
सुखासने समासीनं स्वस्थं भक्तञ्च पूजितं ।
पप्रच्छ वार्त्तां विनयी विनयेन सुखावहां ॥ ३९ ॥
सर्व्वं तं कथयामास पञ्चरात्रादिकं शुभं ।
वसन्तं वटमूले च स्वर्गे मन्दाकिनीतटे ॥ ४० ॥
योगीन्द्रैरपि सिद्धेन्द्रैर्मुनीन्द्रैश्च स्तुतं प्रभुं ।
ज्ञानास्तं तमुक्त्वा स ब्रह्मलोकं जगाम ह ॥ ४१ ॥
शम्भुश्च कथयामास स्वशिष्यं नारदं मुनिं ।
नारदः कथयामास पुष्करे सूर्य्यपर्व्वणि ॥ ४२ ॥
मां भक्तमनुरक्तञ्च पुण्याहे मुनिसंसदि ।
पञ्चरात्रमिदं शुद्धं भ्रमान्धध्वंसदीपकं ॥ ४३ ॥
रात्रञ्च ज्ञानवचनं ज्ञानं पञ्चविधं स्मृतं ।
तेनेदं पञ्चरात्रञ्च प्रवदन्ति मनीषिणः ॥ ४४ ॥
ज्ञानं परमतत्त्वञ्च जन्ममृत्युजरापहं ।
ततो मृत्युञ्जयः शम्भुः संप्राप कृष्णवक्त्रतः ॥ ४५ ॥
ज्ञानं द्वितीयं परमं मुमुक्षूणाञ्च वाञ्छितं ।
परं मुक्तिप्रदं शुद्धं यतो लीनं हरेः पदे ॥ ४६ ॥
ज्ञानं शुद्धं तृतीयञ्च मङ्गलं कृष्णभक्तिदं ।
तद्दास्यदमभीष्टञ्च यतो दास्यं लभेद्धरेः ॥ ४७ ॥
चतुर्थं यौगिकं ज्ञानं सर्व्वसिद्धिप्रदं परं ।
सर्व्वस्वं योगिनां पुत्र सिद्धानाञ्च सुखप्रदं ॥ ४८ ॥
अणिमा लघिमा व्याप्तिः प्राकाम्यं महिमा तथा ।

ईशित्वञ्च वशित्वञ्च तथाकामावशायिता ॥ ४९ ॥
सार्व्वज्ञं दूरश्रवणं परकायप्रवेशनं ।
कायव्यूहं जीवदानं परजीवहरं परं ॥ ५० ॥
सर्गकर्तृत्वशिल्पञ्च सर्गसंहारकारणं ।
सिद्धञ्च षोडशविधं ज्ञानिनाञ्च यतो भवेत् ॥ ५१ ॥
ज्ञानञ्च परमं प्रोक्तं तद्दै वैषयिकं न्टणां ।
यदीष्टदेवी माया सा परं सम्मोहकारणं ॥ ५२ ॥
विषये बद्धचित्तञ्च सर्व्वमिन्द्रियसेवनं ।
पोषणं स्वकुटम्बानां स्वात्मनश्च निरन्तरं ॥ ५३ ॥
प्रथमं सात्त्विकं ज्ञानं द्वितीयञ्च तदेव च ।
नैर्गुण्यञ्च तृतीयञ्च ज्ञानञ्च सर्व्वतः परं ॥ ५४ ॥
चतुर्थञ्च राजसिकं भक्तस्तन्नाभिवाञ्छति ।
पञ्चमं तामसं ज्ञानं विद्वांस्तन्नाभिवाञ्छति ॥ ५५ ॥
ज्ञानं पञ्चविधं प्रोक्तं पञ्चरात्रं विदुर्बुधाः ।
पञ्चरात्रं सप्तविधं ज्ञानिनां ज्ञानदं परं ॥ ५६ ॥
ब्राह्मं शैवञ्च कौमारं वासिष्ठं कापिलं परं ।
गौतमीयं नारदीयमिदं सप्तविधं स्मृतं ॥ ५७ ॥
षट्_पञ्चरात्रं वेदांश्च पुराणानि च सर्व्वशः ।
इतिहास धर्मशास्त्रं शास्त्रञ्च सिद्धियोगजं ॥ ५८ ॥
दृष्ट्वा सर्व्वं समालोक्य ज्ञानं संप्राप्य शङ्करात् ।
ज्ञानामृतं पञ्चरात्रं चकार नारदो मुनिः ॥ ५९ ॥
पुण्यञ्च पापविघ्नघ्नं भक्तिदास्यप्रदं हरेः ।

सर्व्वस्वं[1] वैष्णवानाञ्च प्रियं प्राणाधिकं सत ॥ ६० ॥
सारभूतञ्च सर्व्वेषां वेदानां परमाद्भुतं ।
नारदीयं पञ्चरात्रं पुराणेषु सुदुर्लभं ॥ ६१ ॥
सर्व्वान्तरात्मा भगवान् ब्रह्मज्योतिः सनातनं ।
परिपूर्णतमः श्रीमान् यथा कृष्णः सुरेषु च ॥ ६२ ॥
यथा देवीषु पुज्या सा मूलप्रकृतिरीश्वरी ।
वैष्णवानाञ्च सिद्धानां ज्ञानिनां योगिनां शिवः ॥ ६३ ॥
विश्वस्तानामिन्द्रियाणां मनश्च शीघ्रगामिनां ।
ब्रह्मा च वेदविदुषां पूज्यानाञ्च गणेश्वरः ॥ ६४ ॥
सनत्कुमारो भगवान् मुनीनां प्रवरो यथा ।
बृहस्पतिर्बुद्धिमतां सिद्धानां कपिलो यथा[2] ॥ ६५ ॥
योगीन्द्राणां सतां शुद्ध ऋषिर्नारायणो यथा ।
कवीनाञ्च यथा शुक्रः पण्डितानां बृहस्पतिः[3] ॥ ६६ ॥
सरिताञ्च यथा गङ्गा समुद्राणां जलार्णवः ।
वृन्दावनं वनानाञ्च वर्षाणां भारतं यथा ॥ ६७ ॥
पुष्करं तत्र[4] तीर्थानां पूज्यानां वैष्णवो यथा ।
आत्माकाशो यथात्मानां यथा काशी पुरीषु च ॥ ६८ ॥
वृक्षाणां कल्पवृक्षश्च सुरभी कामधेनुषु ।
पुष्पाणां पारिजातश्च पत्राणां तुलसी यथा ॥ ६९ ॥
मन्त्राणां कृष्णमन्त्रश्च यथा विद्या धनेष्वपि ।

---

[1] सर्वंच MSS T., and M.

[2] This verse is wanting in T.

[3] सरस्वती MSS. A., T., and M

[4] सतुष्कारच A , and T.

यथा तेजस्विनां सूर्यो मिष्टानाममृतं यथा ॥ ७० ॥
आधाराणाञ्च स्थूलानां महाविष्णुर्यथा सुत ।
सूक्ष्माणां परमाणुश्च गुरूणां मन्त्रतन्त्रदः ॥ ७१ ॥
पुत्रश्च स्नेहपात्राणां नक्षत्राणां यथा शशी ।
यथा घृतञ्च गव्यानां शस्यानां धान्यमीप्सितं ॥ ७२ ॥
शास्त्राणाञ्च यथा वेदाः साश्रमाणां यथा द्विजः ।
तैजसानां यथा रत्नं मुक्तामाणिक्यहीरकं ॥ ७३ ॥
यथा छन्दसि गायत्री दुर्गा शक्तिमतीष्वपि ।
पतिव्रतासु लक्ष्मीश्च क्षमाशीलासु मेदिनी ॥ ७४ ॥
सौभाग्यासु सुन्दरीषु राधा कृष्णप्रियासु च ।
हनूमान् वानराणाञ्च पक्षिणां गरुडो यथा ॥ ७५ ॥
वाहनानां बलवतां शङ्करस्य यथा वृषः ।
शालग्रामश्च यन्त्राणां पूजासु कृष्णपूजनं ॥ ७६ ॥
एकादशी व्रतानाञ्च तपःस्वनशनं यथा ।
यज्ञानां जपयज्ञश्च सत्यं धर्मेषु पुत्रक ॥ ७७ ॥
सुशीलञ्च गुणानाञ्च पुण्येषु कृष्णकीर्त्तनं ।
शोभासु सुखदृश्येषु प्रभा तेजःसु सर्वतः ॥ ७८ ॥
पोष्ट्रीणा[1]मुपकर्तॄणां मित्राणां जननी यथा ।
लोकानामपि लोकेशः शेषो नागेषु पूजितः ॥ ७९ ॥
सुदर्शनञ्च शस्त्राणां विश्वकर्म्मा च शिल्पिनां ।

---

[1] पोष्टॄणां T.

धर्म्मिष्ठेषु दयावत्सु देवर्षिषु महत्सु च ॥ ८० ॥
विष्णुभक्तेषु विज्ञेषु यथैव नारदो मुनिः ।
एवञ्च सर्वशास्त्रेषु पञ्चरात्रञ्च पूजितं ॥ ८१ ॥
यथा निपीय पीयूषं न स्पृहा चान्यवस्तुषु ।
पञ्चरात्रमभिज्ञाय नान्येषु च स्पृहा सतां ॥ ८२ ॥
सर्वार्थज्ञानवीजञ्चाप्यज्ञानान्धप्रदीपकं ।
वेदसारोद्धृतं तत्त्वं सर्व्वेषां समभीप्सितं ॥ ८३ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे प्रथमैकरात्रे व्यासदेवशुकदेव संवादे ग्रन्थप्रशंसनं नाम प्रथमोऽध्यायः ॥ १ ॥

---

द्वितीयोऽध्यायः ॥



शुक उवाच ॥

कुत्र वा पञ्चरात्रञ्च नारदाय च धीमते ।
प्रदत्तं शम्भुना तात तन्मे व्याख्यातुमर्हसि ॥ १ ॥

व्यास उवाच ॥

अधीत्य सर्व्वान् वेदांश्च वेदाङ्गान् पितुरन्तिके ।
जगाम तीर्थं केदारं सुप्रशस्तञ्च भारते ॥ २ ॥
[1]हिमालयस्य पूर्व्वे च गङ्गातीरे मनोहरे ।
सिद्धे नारायणक्षेत्रे सर्व्वेषामभिवाञ्छिते ॥ ३ ॥

---

[1] मध्यमस्य हि T. M. and Pa.

तपश्चकार स मुनिर्दिव्यं वर्षसहस्रकं ।
पित्रोक्तेनैव विधिना सततं संयतः शुचिः ॥ ४ ॥
शुश्रावाकाशवाणीञ्च तपसोऽन्ते महामुनिः[1] ।
स्वल्पाक्षराञ्च बह्वर्थां परिणामसुखावहां ॥ ५ ॥

अशरीरिण्युवाच ।

आराधितो यदि हरिस्तपसा ततः किं
नाराधितो यदि हरिस्तपसा ततः किं ।
अन्तर्बहिर्यदि हरिस्तपसा ततः किं
नान्तर्बहिर्यदि हरिस्तपसा ततः किं ॥ ६ ॥
विरम विरम ब्रह्मन् किं तपस्यासु वत्स
व्रज व्रज द्विज शीघ्रं शङ्करं ज्ञानसिन्धुं ।
लभ लभ हरिभक्तिं वैष्णवोक्तां सुपक्वां
भवनिगडनिबन्धच्छेदनीं कर्त्तनीञ्च ॥ ७ ॥

इति श्रुत्वा च स मुनिर्विमनाः स्वर्णदीतटे ।
धकारार्थानुसन्धानं न प्रसन्नञ्च तन्मनः ॥ ८ ॥
करोद् स्वर्णदीतीरे स्मारं स्मारं हरेः पदं ।
ददर्श पुरतस्तातं ब्रह्माणं सकुमारकं[2] ॥ ९ ॥
ननाम सहसा[3] मूर्ध्ना पितरं तं सहोदरं ।
पाद्यमर्घ्यञ्च प्रददौ जयेन सादरं मुनिः ॥ १० ॥
लोकदयार्थं पप्रच्छ कुमारं जगतां विधिं ।

---

[1] सो मुनिः P.　[2] कुमारकं T　[3] शिरसा T

सुखासीनं सुस्थिरञ्च सस्मितञ्च गतश्रमं ॥ ११ ॥
स्वात्मारामं पूर्णकामं ज्ञानिनाञ्च गुरोर्गुरुं ।
साश्रुनेत्रः पुलकितो भक्त्या प्रणतकन्धरः ॥ १२ ॥
नारदस्य वचः श्रुत्वा दृष्ट्वा तं कातरं विधिः ।
पुत्रेण सार्द्धमालोच्य[5] व्याख्यां कर्त्तुं समारभे ॥ १३ ॥

ब्रह्मोवाच ।

हे वत्स पूर्व्वश्लोकार्थं निगूढं श्रुतिसम्मतं ।
वेदार्थं द्विविधं गुह्यं व्याख्यां कुर्व्वन्ति वैदिकाः ॥ १४ ॥
आराधितो यदि हरिर्येन पुंसा स्वभक्तितः ।
किं तस्य तपसा व्यर्थं तीर्थपूतस्य नारद ॥ १५ ॥
कृष्णमन्त्रोपासकस्य जीवन्मुक्तस्य भारते ।
[6]तपश्चोपहासबीजं यथा चर्व्वितचर्व्वणं[7] ॥ १६ ॥
मन्त्रग्रहणमात्रेण पूरुषाणां शतं सुत ।
पुनाति स्वस्वभक्तश्च बान्धवांश्चावलीलया ॥ १७ ॥
न हि धर्मो न हि तपः [8]श्रीकृष्णसेवनात् परं ।
परिश्रमश्च विफलं तपसा वैष्णवस्य च ॥ १८ ॥
[9]कृष्णमन्त्रोपासकस्य तीर्थपूतस्य पुत्रक ।
तीर्थस्नानमनशनं वेदेषु च विडम्बनं ॥ १९ ॥
पूर्व्वकर्मानुरोधेन यत्पापं वैष्णवस्य च ।
मन्त्रग्रहणमात्रेण नष्टं वह्नौ यथा तृणं ॥ २० ॥

---

[5] व्यालोक्य Pb T M.    [6] तपश्चोपहास T.    [7] धा A.
[8] कृष्णस्य T    [9] विष्णु

पवित्रः परमो वह्निः [10]पवित्रं चामलं जलं।
पवित्रं भारतं वर्षं तीर्थं यत्तुलसीदलं ॥ २१ ॥
पुनाति लीलयैतानि शुद्धः कृष्णपरायणः।
उपस्पर्शञ्च भक्तस्याप्येते वाञ्छन्ति सादरं ॥ २२ ॥
भक्तस्य पादरजसा सद्यः पूता वसुन्धरा।
न हि पूतस्त्रिभुवने श्रीकृष्णसेवकात् परः ॥ २३ ॥
शालग्रामशिलाचक्रे करोति [11]कृष्णपूजनं।
तत्पादोदकनैवेद्यं नित्यं भुंक्ते च यः पुमान् ॥ २४ ॥
स वैष्णवो महापूतस्तन्मन्त्रोपासकः शुचिः।
पुनाति पुंसां शतकं जन्ममात्रात् सबान्धवं ॥ २५ ॥
वत्स श्लोकस्यैकपादं व्याख्यातञ्च यथागमं।
व्याख्यां करोम्यन्यपादं यथाज्ञानं निशामय ॥ २६ ॥
नाराधितो यदि हरिर्येन पुंसाधमेन च।
किं तस्य तपसा व्यर्थं निष्फलं तत्परिश्रमं ॥ २७ ॥
व्रतान्येव हि दानानि तपांस्यनशनानि च।
वेदोपयुक्ता यज्ञाश्च कर्माणि च शुभानि च ॥
न निष्पुनात्यभक्तञ्च सुराकुम्भमिवापगा ॥ २८ ॥
अभक्तस्पर्शमात्रेण तीर्थानि कम्पितानि च।
अभक्तभारदुःखेन कम्पिता सा वसुन्धरा ॥ २९ ॥
श्लोकार्धं कथितं वत्स किञ्चिदेव यथागमं।

---

[10] सुपवित्र जलमथा Pa [11] विष्णु Pa

तस्यार्द्धस्यापि व्याख्यानं करोमीति निशामय ॥ ३० ॥
[12]वेदसारं कृष्णमतं ममापि नहि कल्पना ।
अन्तर्बहिर्यदि हरिर्येषां पुंसां महात्मनां ॥ ३१ ॥
स्वप्ने जागरणे शश्वत्तपस्तेषां च निष्फलं ।
स एव विष्णुतुल्यो हि तदंशो भारते मुने ॥ ३२ ॥
तस्य रक्षानिबन्धेन तदभ्यासे सुदर्शनं ।
ध्यानमात्रेण निष्पापः पुनाति भुवनत्रयं ॥ ३३ ॥
दत्त्वा चक्रञ्च रक्षार्थं न निश्चिन्तो जनार्द्दनः ।
स्वयं तन्निकटं याति तं द्रष्टुं रक्षणाय च ॥ ३४ ॥
तत्परो हि प्रियो नास्ति कृष्णस्य परमात्मनः ।
न हि भक्तात् परश्चात्मा प्राणाश्चावयवादयः ॥
न लक्ष्मी राधिका [13]वाणी स्वयम्भुः शम्भुरेव च ॥ ३५ ॥
भक्तप्राणो हि कृष्णश्च कृष्णप्राणा हि वैष्णवाः ।
ध्यायन्ते वैष्णवाः कृष्णं कृष्णश्च वैष्णवांस्तथा ॥ ३६ ॥
व्याख्यातञ्च त्रिपादञ्च हे मुनीन्द्र यथागमं ।
शेषपादस्य व्याख्यानं करोमीति निशामय ॥ ३७ ॥
नान्तर्बहिर्यदि हरिर्येषां पुंसाञ्च नारद ।
तेषामपि तपो व्यर्थमन्तर्मलिनचेतसां ॥ ३८ ॥
किं तज्ज्ञानेन तपसा व्रतेन नियमेन च ।
तीर्थस्नानेन पुण्येनाप्यभक्तमूढचेतसां ॥ ३९ ॥

---

[12] वेदस्यार्थम् Pa.

[13] राधी T.

कृष्णभक्तिविहीनेभ्यो द्विजेभ्यः श्वपचो महान् ।
शूकरो म्लेच्छनिवहः स्वधर्माचरणेन च ॥ ४० ॥
स्वधर्महीना विप्राश्चाप्यभक्ष्यभक्षणेन च ।
नित्यं नित्यं विधर्मेण पतितः श्वपचाधमः ॥ ४१ ॥
ब्राह्मणानां स्वधर्मश्च सन्ततं कृष्णसेवनं ।
नित्यं ते भुञ्जते सन्तस्तन्नैवेद्यं पदोदकं ॥ ४२ ॥
न दत्वा हरये यत्तु यदि भुङ्क्ते [14]द्विजाधमः ।
अन्नं विष्ठासमं मूत्रसमं तोयं विदुर्बुधाः ॥ ४३ ॥
भुङ्क्ते स्वभक्ष्यं कोलश्च म्लेच्छश्च श्वपचाधमः ।
विप्रो नित्यमभक्ष्यञ्च भुङ्क्ते च पतितस्ततः ॥ ४४ ॥
[15]श्लोकमेकञ्च व्याख्यातं यथाज्ञानञ्च नारद ।
सन्निबोध परस्यार्थं व्याख्यानञ्च यथोचितं ॥ ४५ ॥
तपसो विरम ब्रह्मन् व्यर्थं भक्त तपो ध्रुवं ।
शङ्करञ्च गुरुं कृत्वा हरिभक्तिं लभाचिरं ॥ ४६ ॥
सुपक्का हरिभक्तिश्च तरणी भवतारणे ।
गुरुरेव परं ब्रह्म कर्णधारस्वरूपकः ॥ ४७ ॥
इत्येवमुक्त्वा त्वां[16] देवी प्रजगाम सरस्वती ।
व्याख्यातस्तदभिप्रायः किं भूयः कथयामि ते[17] ॥ ४८ ॥

---

[14] नराधमः Pa A.

[15] श्लोकपादम् Pb पूर्वश्लोक Pc इति श्लोकश्च M छल श्लोकस्य व्याख्यानं T

[16] सा T

[17] श्रोतुमिच्छसि Pa

ब्रह्मणश्च वचः श्रुत्वा जहास योगिनां गुरुः ।
सनत्कुमारो भगवानुवाच पितरं शुक ॥ ४९ ॥

सनत्कुमार उवाच ।

पूर्व्वश्लोकस्य व्याख्यानं न वृद्धं शिशुना मया ।
पुत्रं शिष्यमबोधञ्च युक्तं बोधयितुं पुनः ॥ ५० ॥
आराधितो हरिर्येन तस्य व्यर्थं तपो यदि ।
नाराधितो हरिर्येन तस्य व्यर्थं तपो यदि ॥
तस्मारहितौ तौ द्वौ तपसश्च स्थलं कुतः ॥ ५१ ॥
तपः कुर्व्वन्ति ये तात त्वं मां[18] बोधय बालकं ॥ ५२ ॥
पुत्रस्य वचनं श्रुत्वा सन्दिग्धो जगतां गुरुः ।
दध्यौ कृष्णपदाम्भोजं परं कल्पतरुं शुक ॥ ५३ ॥
क्षणं सञ्चिन्त्य पादाब्जं प्राप राद्धान्तमीप्सितं ।
व्याख्यां कर्त्तुं समारेभे विधाता जगतामपि ॥ ५४ ॥

ब्रह्मोवाच ।

धन्योऽहं भवतः पश्चात् ज्ञानिनाञ्च गुरोर्गुरोः ।
[19]विष्णुभक्ताच्च धर्म्मिष्ठात् सत्पुत्राच्च पिता सुखी ॥ ५५ ॥
धन्योऽसि पण्डितोऽसि त्वं हरिभक्तोऽसि पुत्रक ।
ममापि सफलं जन्म जीवनञ्च त्वया बुध ॥ ५६ ॥
निबोध पूर्व्वश्लोकार्थं पुनर्व्याख्यां करोमि च ।
तथापि चेन्न सन्तोषो भवान् व्याख्यां करिष्यति ॥ ५७ ॥

---

[18] तन्मे Pa.

[19] This and the next two verses are wanting in T

आशब्दः सम्यगर्थे च राधितः प्राप्तवाचकः ।
संप्राप्तश्च हरिर्येन व्यर्थस्तस्य [20]तपःश्रमः ॥ ५८ ॥
येन सम्यक्प्रकारेण संप्राप्तो[21] हरिरीश्वरः ।
स्वप्ने ज्ञाने नच ज्ञातस्तेषां व्यर्थस्तपःश्रमः ॥ ५९ ॥
श्रीकृष्णविमुखं मूढं द्विजमेव नराधमं ।
तीर्थं दानं तपः पुण्यं व्रतं नैव पुनाति तं ॥ ६० ॥
यश्च मूढतमो लोके यश्च भक्तिं परां गतः ।
तावुभौ सुखमेधेते तपः कुर्व्वन्ति मध्यमाः ॥ ६१ ॥
देवानन्यांश्च भजते हरिं जानाति [22]तत्परः ।
तपः करोति तं प्राप्तुमाकाङ्क्षन्मध्यमो जनः ॥ ६२ ॥
प्राक्तनादनुरागी[23] च गृही संसारसंवृतः ।
तपःकरोति श्रीकृष्णपादपद्मार्थमीप्सितं ॥ ६३ ॥
परं श्रीकृष्णभजनं ध्यानं तन्नामकीर्त्तनं ।
तत्पादोदकनैवेद्यभक्षणं सर्व्ववाञ्छितं ॥ ६४ ॥
अतीव मूढो विप्रश्च प्राक्तनात्कुदोषतः ।
तामसो हि न जानाति श्रीकृष्णं त्रिगुणात् परं ॥ ६५ ॥
अज्ञानादथ वा ज्ञानात् सत्सङ्गादेव प्राक्तनात् ।
भुंक्ते नैवेद्यमीशस्य कृष्णस्य परमात्मनः ॥ ६६ ॥
स च मुक्तो भवेत् पुत्र मुच्यते सर्व्वपातकात् ।
स याति दिव्ययानेन गोलोकं लोकमुत्तमं ॥ ६७ ॥

---

[20] परिश्रमम् Pa
[21] प्राप्तो यो M
[22] तत्परम् Pb
[23] भोक्तवादानुवादी T. M

शृणु वत्स प्रवक्ष्यामि पूर्व्वाख्यानं पुरातनं ।
अतीव सुश्रवं चारु मधुरं मुक्तिदं परं ॥ ६८ ॥
कान्यकुब्जः सुचुन्द्रश्च ब्राह्मणो ग्रामयाजकः ।
देवलो वृषवाहश्च महामूढश्च पातकी ॥ ६९ ॥
स्वप्ने ज्ञाने न जानाति पुण्यं वा कृष्णपूजनं ।
कृष्णभक्तसहालापदर्शनस्पर्शनं शुभं ॥ ७० ॥
बभूव प्राक्तनात्तस्य चणमात्रं सुदर्लभं ।
तेन पुण्येन नैवेद्यं लेभे कृष्णस्य ब्राह्मणः ॥ ७१ ॥
पितुः पुण्येन पुत्रश्च मार्गे पतितमल्पकं ।
स्वयं भुक्तावशेषञ्च पतितं वैष्णवाज्जनात् ॥ ७२ ॥
सुस्निग्धाच्चतजीर्णञ्च रंजसा मिश्रितं परं ।
गच्छतस्तत्र विप्रस्य पतितं भच्यवस्तु च ॥ ७३ ॥
नैवेद्योपरि कृष्णस्य त्वरायुक्तस्य पुत्रक ।
तद्वस्तु भुक्तं विप्रेण कृष्णनैवेद्यमिश्रितं ॥ ७४ ॥
सपुत्रेण क्षुधार्त्तेन भुक्ता तौ ययतुर्गृहं ।
विप्रोच्छिष्टञ्च बुभुजे तस्य पत्नी पतिव्रता ॥ ७५ ॥
परम्परानुसम्बन्धात् पवित्रा सा बभूव ह ।
जीवन्मुक्तो ब्राह्मणश्च बभूव च सपुत्रकः ॥ ७६ ॥
कालेन तेन पुण्येन व्याघ्रभुक्तश्च कानने ।
सार्द्धञ्च व्याघ्रपुत्राभ्यां गोलकं प्रययौ द्विजः ॥
पतिव्रता सहमृता भर्त्रा सार्द्धं जगाम सा ॥ ७७ ॥
इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे प्रथमैकरात्रे ब्रह्मसनत्कुमारसंवादे

तृतीयोऽध्यायः ॥



सनत्कुमार उवाच ॥

अहो तात किमाश्चर्य्यं कृष्णस्य परमात्मनः ।
परं नैवेद्यमाहात्म्यं विस्तराद्वद साम्प्रतं ॥ १ ॥

ब्रह्मोवाच ॥

एकदा ब्राह्मणो हृष्टः प्रफुल्लवदनेक्षणः ।
पुत्रेण सार्द्धं प्रययौ बान्धवस्य गृहं मुदा ॥ २ ॥
निमन्त्रितो विवाहेन महासंभारसंभृतः ।
भुक्त्वा पीत्वा च तद्गेहे स्वगृहं प्रययौ मुदा ॥ ३ ॥
सपुत्रो ब्राह्मणो मार्गे क्षुत्पिपासार्दितः सुतः ।
ददर्श चन्द्रभागां तां नदीमतिमनोहरां ॥ ४ ॥
उवाच पुत्रः पितरं स्नात्वा भोक्ष्यामि चेति भोः ।
क्षुत्पिपासा बलवती वर्द्धते तात वर्त्मनि ॥ ५ ॥
पुत्रस्य वचनं श्रुत्वा तमुवाच द्विजः स्वयं ।
भयङ्करं वनमिदं समीपे सरितः सुत ॥ ६ ॥
सुशीघ्रं गच्छ ग्रामान्तं पुरो रम्यसरोवरं ।
तत्र स्नात्वा च भोक्ष्यावो गच्छ वत्स यथासुखं ॥ ७ ॥
तातस्य वचनं श्रुत्वा जहास च चकोप ह ।
पितरं वक्तुमारेभे रक्तपङ्कजलोचनः ॥ ८ ॥

शिशुरुवाच।

बालोऽहं दशवर्षीयस्त्वञ्च वृद्धश्च ज्ञानदः।
पिता ददाति पुत्राय ज्ञानं सर्व्वत्र भूतले॥ ९॥
अहो दुरत्ययः कालो वृद्धो वदति बालवत्।
कथं प्राक्तनमुल्लङ्घ्य ब्रूहि तात दुरत्ययं॥ १०॥
प्राक्तनात् सुखदुःखञ्च रोगं शोकं भयं पितः।
सुमृत्युरपमृत्युर्वा चिरायूरल्पजीवनः॥ ११॥
यत्र काले च यन्मृत्युर्भवनं शुभकर्म च।
न्यूनाधिकं क्षणं नास्ति निषेकः केन वार्य्यते॥ १२॥
यस्य हस्ते च यन्मृत्युर्व्विधात्रा लिखितः पुरा।
न च तं खण्डितं शक्तः स्वयं विष्णुश्च शङ्करः॥ १३॥
तात व्यर्थमधीतं ते दुर्बुद्धेर्जन्म निष्फलं।
सुबुद्धेःसफलं जन्म तत्क्षणं जीवनं सुखं॥ १४॥
येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः।
मयूराश्चित्रिता येन स मे रक्षां करिष्यति॥ १५॥
येन कृष्णेन विश्वानि चासंख्यानि कृतानि च।
चराचरञ्च यो रक्षेत् स मे रक्षां करिष्यति॥ १६॥
घोरारण्ये सुखं शेते यो हि कृष्णेन रक्षितः।
निर्वन्धोऽपि स्थितो यस्य मरणं तस्य मन्दिरे॥ १७॥
यः शेते नागशय्यासु प्राक्तनान्मङ्गलान्वितः।
यो नागभक्षितो भोगात् स मृतो गरुडान्तिके॥ १८॥
न समुद्रे च म्रियते नाग्निराशौ विषानले।

न शस्त्रेण नचास्त्रेण आयुर्मर्माणि रक्षति ॥ १९ ॥
नाप्राप्तकालो म्रियते विद्धः शरशतैरपि ।
तृणाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ २० ॥
कश्चिद्गर्भे च म्रियते कश्चिद्भूमिष्ठमात्रतः ।
कश्चिद्यौवनकाले च कश्चिदेव हि वार्द्धके ॥ २१ ॥
कश्चिच्चिरायू रोगी चाप्यरोगी चापि कश्चनः ।
कश्चिद्धनी दरिद्रश्च कश्चिदेव हि कर्मणा ॥ २२ ॥
कश्चित्कल्पान्तजीवी च चिरजीवी च कश्चनः ।
प्राक्तनादमरः कश्चिन्निमेषो बलवत्तरः ॥ २३ ॥
कश्चिद्याति च राजेन्द्रो दिव्ययानेन कर्मणा ।
कश्चित्कीटपतङ्गेषु कश्चित्पश्वादियोनिषु ॥ २४ ॥
कश्चिदेव हि सन्यासी कश्चिच्च नरघातकः ।
कश्चिद्गजेन्द्रगामी च पशुयायी च कश्चनः ॥ २५ ॥
कश्चिद्ददाति रत्नञ्च कश्चिद्भिक्षां करोति च ।
कश्चित्सूक्ष्मांशुकाधारी कश्चिज्जीर्णपटी जनः ॥ २६ ॥
कश्चिन्नग्नोऽप्यनाहारी सुधाभोजी च कश्चन ।
कश्चिच्च सुन्दरः श्रीमान् गलत्कुष्ठी च कश्चनः ॥ २७ ॥
कश्चित्कुब्जश्चाङ्गहीनो बधिरः काण एव च ।
कश्चिद्दीर्घो मध्यमश्च कश्चित्खञ्जश्च वामनः ॥ २८ ॥
कश्चित्कृष्णश्च गौरश्च श्यामलश्च स्वकर्मणा ।
कश्चिद्भक्त्या च प्राप्नोति कृष्णदास्यं सुदुर्लभ ॥ २९ ॥
ब्रह्मणः परमं स्थानं जन्ममृत्युजराहर ।

कश्चित् प्राप्नोति परमं ब्रह्मलोकं निरामयं ॥ ३० ॥
कश्चित् स्वर्गमिन्द्रपदं शिवलोकं स्वकर्मणा ।
कश्चित् स्वर्गमिन्द्रलोकं यमलोकञ्च कश्चन ॥ ३१ ॥
कश्चिच्च नरके घोरे प्राप्नोति क्लेशमुल्वनं ।
ताडितो यमदूतेन क्षुधितस्तृषितः सदा ॥ ३२ ॥
भुङ्क्ते विण्मूत्रकीटं तन्मलं श्लेष्मां गरं वसां ।
क्षुरधारे तप्ततैले वह्नौ शीते जले स्थले ॥ ३३ ॥
प्राप्नोति दारुणं दुःखमाकल्पं पातकी पितः ।
ततो भोगावशेषे च लब्ध्वा जन्म स्वकर्मणा ॥ ३४ ॥
व्याधियुक्तः प्रमुच्येत तया चेदीश्वरेच्छया ।
यद्भयाद्वाति वातोऽयं सूर्य्यस्तपति यद्भयात् ॥ ३५ ॥
वर्षतीन्द्रो दहत्यग्निर्मृत्युश्चरति जन्तुषु ।
यस्याज्ञया सृष्टिविधौ कूर्मोऽनन्तं दधाति च ॥ ३६ ॥
स च सर्व्वञ्च ब्रह्माण्डं लीलया चेश्वरेच्छया ।
यस्याज्ञया महाभीता सर्व्वाधारा वसुन्धरा ॥ ३७ ॥
धरा सा सर्व्वसस्याढ्या रत्नवांश्च हिमालयः ।
स्वयं विधाता भगवान् ध्यायते यमहर्निशं ॥ ३८ ॥
यं ध्यायते च भजते स्वयं मृत्युञ्जयः शिवः ।
सहस्रवक्त्रो यं स्तौति ध्यायते भजते सदा ॥ ३९ ॥
स्वयं सरस्वती स्तौति यमीश्वरमभीप्सितं ।
सेवते पादपद्मञ्च स्वयं पद्मालया पितः ॥ ४० ॥
माया भीता च यं स्तौति दुर्गा दुर्गतिनाशिनी ।

स्तुवन्ति वेदाः सततं सावित्री वेदमातृका ॥ ४१ ॥
सिद्धेन्द्राश्च मुनीन्द्राश्च योगीन्द्राः सनकादयः ।
राजेन्द्राश्चासुरेन्द्राश्च सुरेन्द्रा मनवस्तथा ॥ ४२ ॥
ध्यायन्ते च भजन्ते च भक्ताः सन्तो हि सन्ततं ।
केचिद्वदन्ति यं ब्रह्म भगवन्तं सनातनं ॥ ४३ ॥
केचित् प्रधानं सर्व्वाद्यं केचिच्च ज्योतिरीश्वरं ।
केचिच्च सर्व्वरूपञ्च सर्व्वकारणकारणं ॥ ४४ ॥
केचित् स्वेच्छामयं रूपं भक्तानुग्रहविग्रहं ।
केचित्सुरुचिरं श्यामसुन्दरं सुमनोहरं ॥ ४५ ॥
सानन्दं परमानन्दं गोविन्दं नन्दनन्दनं ।
भज तात परं ब्रह्म स्मर शश्वत् सुरेश्वरं ॥ ४६ ॥
इत्येवमुक्त्वा पितरं चन्द्रभागानदीजले ।
स्नात्वा पपौ जलं स्वच्छं बुभुजे मिष्टमोदकं ॥ ४७ ॥
पिता तद्वचनं श्रुत्वा सानन्दाश्रु मुमोच सः ।
चुचुम्ब गण्डं पुत्रस्य समाश्लेषणपूर्व्वकं ॥ ४८ ॥
पिता स्नात्वा समारेभे सन्ध्यां कर्त्तुञ्च पूजनं ।
सुस्नातं पितरं दृष्ट्वा पुत्रः स प्रययौ वनं ॥ ४९ ॥
पत्रं भोजनपात्रार्थमाहर्त्तुं चञ्चलः शिशु[1] ।
चकार चयनं तूर्णं प्रशस्तं पत्रपञ्चकं ॥ ५० ॥
सुन्दरं कुसुमं वन्यं[2] पूजनार्थं पितुस्तथा ।

---

[1] शिशवश्चञ्चलाः T [2] रम्यं M.

ददर्श पुरतो बालः सुपक्वं बदरीफलं ॥ ५१ ॥
चकार चयनं तानि फलानि शोभनानि च ।
धात्रीफलं सुपक्वञ्च पक्वमाम्रातकं तथा ॥ ५२ ॥
सुपक्वञ्च कदम्बञ्च चकार चयनं पुनः ।
सुपक्वं सुन्दरं रम्यं दाडिम्बं श्रीफलं तथा ॥ ५३ ॥
रम्यं जम्बुफलं चैव खर्जूरं सुमनोहरं ।
करञ्जकञ्च जाम्बीरं सुन्दरं चिक्कुरं तथा ॥ ५४ ॥
तत्सर्व्वं चयनं कृत्वा ददर्श पुरतः सरः ।
सुनिर्मलं जलं स्वच्छं श्वेतपद्मं मनोहरं ॥ ५५ ॥
रुचिरं रक्तकह्लारं प्रस्फुटञ्च जलान्तिके ।
[3]विहाय तानि सर्व्वाणि सरःशिरसि सुस्थले ॥ ५६ ॥
पपौ सरःस्वच्छतोयं जहार पद्मसुल्वनं ।
किञ्चित्सुरक्तकह्लारं पर्णं पद्मफलं तथा ॥ ५७ ॥
सर्व्वमाहरणं कृत्वा पितरं गन्तुमुद्यतः ।
प्रफुल्लवदनः श्रीमान् सस्मितो द्विजबालकः ॥ ५८ ॥
प्रफुल्लचम्पकतरुं ददर्श पुरतः शिशुः ।
मल्लिकामालतीकुन्दयूथिकामाधवीलताः ॥ ५९ ॥
चकार चयनं स्फीतः पुष्पाणि सुन्दराणि च ।
पुष्पेण फलपात्रेण तस्य भारो बभूव ह ॥ ६० ॥
बालो वोढुमशक्तश्च ययौ गमनमन्थरः ।

---

[3] धर्मं स्नित्वा च तथासौ T.

न फलं बुभुजे सोऽपि धर्माधर्मभयेन च ॥ ६१ ॥
पुरो ददर्श स शिशुर्घोरं व्याघ्रालयं भिया।
तात तातेति शब्दञ्च चकार ह पुनः पुनः ॥ ६२ ॥
न ददर्श च तातञ्च शार्दूलञ्च ददर्श सः।
भिया सस्मार गोविन्दपादारविन्दमीप्सितं ॥ ६३ ॥
हरिं नरहरिं रामं कृष्णं विष्णुञ्च माधवं।
दामोदरं हृषीकेशं मुकुन्दं मधुसूदनं ॥ ६४ ॥
एतानि दश नामानि जपन् विप्रशिशुर्भिया।
प्रययौ पुरतः शीघ्रं पुनरेव सरोवरं ॥ ६५ ॥
सरसो निर्मले तोये पुष्पाणि च फलानि च।
ददौ भक्त्या भगवते कृष्णाय परमात्मने ॥ ६६ ॥
श्रीकृष्णपूजां कुर्व्वन्तं ध्यायमानं पदाम्बुजं।
निकटं न ययौ व्याघ्रो दृष्ट्वा बालञ्च दूरतः ॥ ६७ ॥
व्याघ्रं ददर्श बालश्च प्रकटास्यं भयानकं।
विकृताकारदशनं विकटाक्षं महोदरं ॥ ६८ ॥
दृष्ट्वा च दूरतो व्याघ्रमुवास सरसस्तटे।
दध्यौ कृष्णपदाम्भोजं जन्ममृत्युजराहरं* ॥ ६९ ॥
मूलाधारं स्वाधिष्ठानं मणिपूरमनाहतं।
विशुद्धञ्च तथाज्ञाख्यं षट्चक्रञ्च विभाव्य च ॥ ७० ॥
कुण्डलिन्या स्वशक्त्या च सहितं परमेश्वरं।

---

* जरापहं T

सहस्रदलपद्मस्थं हृदये स्वात्मनः प्रभुं ॥ ७१ ॥
ददर्श द्विभुजं कृष्णं पीतकौशेयवाससं ।
सस्मितं सुन्दरं शुद्धं नवीनजलदप्रभं ॥ ७२ ॥
कोटिकन्दर्पसौन्दर्य्यलीलाधाममनोहरं ।
कोटिपार्व्वणपूर्णेन्दुप्रभाजुष्टञ्च सुन्दरं ॥ ७३ ॥
सुखदृश्यं सुरूपञ्च भक्तानुग्रहकारकं ।
[5]चन्दनोक्षितसर्व्वाङ्गं रत्नभूषणभूषितं ॥ ७४ ॥
प्रफुल्लपद्मनयनं राधावक्षःस्थलस्थितं ।
मालतीमाल्यसम्बद्धचूडाचारुसुशोभनं ॥ ७५ ॥
धृतरत्नं रत्नपद्मं दक्षिणेन करेण च ।
वामेन मणिनिर्म्माणदीप्तदर्पणमुज्ज्वलं ॥ ७६ ॥
रत्नकुण्डलयुग्मेन गण्डस्थलविराजितं ।
कौस्तुभेन मणीन्द्रेण चारुवक्षःस्थलोज्ज्वलं ॥ ७७ ॥
मुक्ताराजिविनिन्द्यैकदन्तराजिविराजितं ।
आजानुमालतीमालावनमालाविभूषितं ॥ ७८ ॥
[6]वेदाननसंरस्वत्या स्तुतं ब्रह्मेशवन्दितं ।
पद्मापद्मालयामायासंसेवितपदाम्बुजं ॥ ७९ ॥
परिपूर्णतमं ब्रह्म परमात्मानमीश्वरं ।
निर्लिप्तं साक्षिभूतञ्च भगवन्तं सनातनं ॥ ८० ॥
सर्व्वेशं सर्व्वरूपञ्च सर्व्वकारणकारणं ।

---

[5] चन्दनाक्तित T

[6] वेदातच P

पुरुषं परमात्मैकं परेशं प्रकृतेः परं ॥ ८१ ॥
एवम्भूतं विभुं दृष्ट्वा मनसा प्रणनाम तं ।
तुष्टाव परया भक्त्या तमीशं संपुटाञ्जलिः ॥ ८२ ॥

श्रीसुभद्र उवाच ।

हे नाथ दर्शनं देहि मां भक्तं शरणागतं ।
श्रीद श्रीश श्रीनिवास श्रीनिधे श्रीनिकेतन ॥ ८३ ॥
श्रिया सेवितपादाब्ज श्रीसमुत्पत्तिकारण ।
वेदानिर्वचनीयेश निरीह निर्गुणाधिप ॥ ८४ ॥
सर्व्वाद्य सर्वनिलय सर्ववीज सनातन ।
शान्त सरस्वतीकान्त नितान्त सर्वकर्मसु[1] ॥ ८५ ॥
सर्व्वाधार निराधार कामपूर[2] परात्पर ।
दुष्पारासारसंसारकर्णधार नमोऽस्तु ते ॥ ८६ ॥
इत्येवमुक्त्वा स शिशू रुरोद च पुनः पुनः ।
ध्यानेन तत्पदाम्भोजं शरणञ्च चकार सः ॥ ८७ ॥
इति विप्रकृतं स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः ।
मुच्यते सर्व्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ८८ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे प्रथमैकरात्रे ब्रह्मसनत्कुमारसंवादे श्रीकृष्णमहिमोपलम्भनं नाम तृतीयोऽध्यायः ॥ ३ ॥

---

[1] सर्वकर्मकः T. [2] कामदद T.

चतुर्थोऽध्यायः ॥



ब्रह्मोवाच ॥

ब्राह्मणस्य स्तवं श्रुत्वा परितुष्टो जनार्द्दनः ।
कृपाञ्चकार भगवान् भक्तेशो भक्तवत्सलः ॥ १ ॥
एतस्मिन्नन्तरे तत्र भगवान्[1]नन्दनन्दनः ।
नारायणर्षिः कृपया चाजगाम सरोवरं ॥ २ ॥
ददर्श ब्राह्मणवटुं तमेव मुनिपुङ्गवं[2] ।
तेजसा सुखदृश्येन सुन्दरं सुमनोहरं ॥ ३ ॥
पीतवस्त्रपरीधानं नवीनजलदप्रभं ।
चन्दनोच्चितसर्व्वाङ्गं वनमालाविभूषितं ॥ ४ ॥
प्रसन्नवदनं शुद्धं सस्मितं सर्व्वपूजितं ।
बिभ्रान्तञ्च जपन्तञ्च शुद्धस्फटिकमालया ॥ ५ ॥
दृष्ट्वा ननाम सहसा शिरसा विप्रपुङ्गवः ।
शुभाशिषं ददौ तस्मै दत्वा शिरसि हस्तकं ॥ ६ ॥
तमुवाच मुनिश्रेष्ठः कृपया दीनवत्सलः ।
हितं तथ्यं नीतिसारं परिणामसुखावहं ॥ ७ ॥

श्रीनारायणर्षिरुवाच ।

अये विप्र महाभाग सफलं जीवनं तव ।

---

[1] धर्मनन्दनः M and T

[2] मुद्गयः M and T

यस्मिन् कुले च जातोऽसि तद्धन्यं सुप्रशंसितं ॥ ८ ॥
भज त्वं परमानन्दं सानन्दं नन्दनन्दनं ।
ध्रुवं यास्यसि गोलोकं परमानन्दमीप्सितं ॥ ९ ॥
तत्कुलं पावनं [3]धन्यं यशस्यं च निरापदं ।
यस्मिन् स्वयं भवान् जातः पुण्यः कृष्णपरायणः ॥ १० ॥
नैवेद्यं पतितं मार्गे जीर्णं श्वापदभक्षितं ।
भुक्ता तवैषा बुद्धिश्च कृष्णभक्तिर्बभूव च ॥ ११ ॥
कृष्णनैवेद्यमाहात्म्यं को वक्ता कथितुं क्षमः ।
यद्वक्तुं न हि शक्ताश्च वेदाश्चत्वार एव च ॥ १२ ॥
वरं वृणुष्व भद्रन्ते सुभद्र द्विजपुङ्गव ।
सर्व्वं दातुमहं शक्तो यत्ते मनसि वाञ्छितं ॥ १३ ॥
नारायणवचःश्रुत्वा तमुवाच शिशुः स्वयं ।
पुनः कम्पितसर्व्वाङ्गः साश्रुनेत्रः पुटाञ्जलिः ॥ १४ ॥

सुभद्र उवाच ।

देहि मे कृष्ण पादाब्जे दृढां भक्तिं सुदुर्लभां ।
तद्दास्यं तत्पदे वासं जरामृत्युहरं परं ॥ १५ ॥
अन्यं वरं न गृह्णामि न मे किञ्चित् प्रयोजनं ।
नाहं वरार्थी[4] कामी च रागी [5]वेतनभुग्यथा ॥ १६ ॥

नारायणऋषिरुवाच ।

श्रीकृष्णे यस्य भक्तिश्च तस्याथ किं सुदुर्लभं ।

---

[3] मान्यं T [4] वरार्थं M [5] वैभव T

अणिमादिकद्वात्रिंशत् सिद्धिः करतले परा ॥ १७ ॥
निर्व्विकल्पो ददात्यस्य नैव गृह्णाति वैष्णवः ।
अनिमित्तां हरेर्भक्तिं भक्ता वाञ्छन्ति सन्ततं ॥ १८ ॥
गृहाण मन्त्रं कृष्णस्य परं कल्पतरुं वरं ।
भक्तिदं दास्यदं शुद्धं कर्ममूलनिकृन्तनं ॥ १९ ॥
लक्ष्मीमायाकामबीजं ङेऽन्तं कृष्णपदं तथा ।
वह्निजायान्तमन्त्रञ्च मन्त्रराजं मनोहरं ॥ २० ॥
इत्येवमुक्का तत्कर्णे कथयामास दक्षिणे ।
वारत्रयं मुनिश्रेष्ठः शुद्धभावेन पञ्चक ॥ २१ ॥
येन स्तोत्रेण तुष्टाव सुभद्रः परमेश्वरं ।
आज्ञां चकार स ऋषिस्तदेव पठितुं मुदा ॥ २२ ॥
कवचं च ददौ तस्मै जगन्मङ्गलमङ्गलं ।
ध्यानञ्च सामवेदोक्तं सर्व्वपूजाविधिक्रमं ॥ २३ ॥
हरेर्दास्यञ्च तद्भक्तिं गोलोकवासमीप्सितं ।
जन्मद्वयान्तरे चैव कर्मभोगक्षये सति ॥ २४ ॥

सुभद्र उवाच ।

सत्यं कुरु महाभाग वरं मे यदि दास्यसि ।
वरं वृणोमि तत्पश्चात् यन्मे मनसि वाञ्छितं ॥ २५ ॥

नारायण उवाच ।

ओं सत्यं वत्स *दास्यामि वरं वृणु यथेप्सितं ।

---

* प्रदास्यामि T.

ममाशक्यं नास्ति किञ्चित् दाताहं सर्व्वसम्पदां ॥ २६ ॥

सुभद्र उवाच ।

कण्ठे ते किञ्च कवचं कस्य वा सर्व्वपूजितं[7] ।
अमूल्यरत्नगुटिकायुक्तञ्च सुमनोहरं ॥ २७ ॥
कवचं देहि मे देव स्वसत्यं रक्षणं कुरु ।
विप्रस्य वचनं श्रुत्वा शुष्ककण्ठौष्ठतालुकः ॥ २८ ॥
वक्तुं न शक्तस्तद्वाक्यं दध्यौ कृष्णपदाम्बुजं ।
प्रददौ गुटिकां तस्मै नोवाच कवचं मुनिः ॥ २९ ॥
तमुवाच महर्षिश्च वितुष्टश्चोन्मनाः[8] सुत ।
वत्स क्रोधो हि देवस्य वरं तुल्यञ्च वाञ्छितं ॥ ३० ॥

नारायणर्षिरुवाच ।

त्रिंशत्सहस्रवर्षञ्च भुङ्क्ष्व राज्यं सुदुर्लभं ।
लभस्व दुर्लभां लक्ष्मीं मायया मोहितो भव ॥ ३१ ॥
मदिष्टदेवकवचं गृहीतं येन हेतुना ।
सप्तकल्पान्तजीवित्वं परच च भविष्यति ॥ ३२ ॥
सुचिरेणैव कालेन गोलोकञ्च प्रयास्यसि ।
परे मृकण्डुपुत्रस्त्वं मार्कण्डेयो भविष्यसि ॥ ३३ ॥
मया दत्तञ्च कवचं त्वां च रक्षति पुत्रक ।
तव कण्ठे स्थितिश्चास्य प्रतिजन्मनि जन्मनि ॥ ३४ ॥
पुनश्च गुटिकायुक्तं कृत्वा च कवचं मुनिः ।

---

[7] पूजन T　　[8] चात्मना M T.

गले दधार भक्त्या च तद्भक्तो धर्मनन्दनः ॥ ३५ ॥
वरं[9] दत्वा च स मुनिर्ययौ गेहं स उन्मनाः ।
विप्राय कवचं दत्वा नष्टवत्सा च गौर्यथा ॥ ३६ ॥
भ्राता नरेण पित्रा च धर्मेण च महात्मना ।
माता मूर्त्त्या[10] च पत्न्या च शान्त्या च भर्त्सितो मुनिः॥३७॥
विप्रः संप्राप्य कवचं मन्त्रं कल्पतरुं परं ।
सरोवरात् समुत्थाय प्रज्वलन् ब्रह्मतेजसा ॥ ३८ ॥
स्थाणुं तस्थौ सरस्तीरे वटमूले मनोहरे ।
जजाप परमं मन्त्रं संपूज्य जगदीश्वरं ॥ ३९ ॥
अथ तत्तातविप्रो हि समन्विष्य सुतं चिरं ।
गत्वा च स्वगृहं दुःखी शोकार्त्तः स रुरोद च ॥ ४० ॥
समुद्यता तनुं त्यक्तुं तन्माता पुत्रवार्त्तया ।
न तत्याज तनुं विप्रो दृष्ट्वा सुस्वप्नमुत्तमं ॥ ४१ ॥
विप्रो विप्रा गृहं त्यक्त्वा पुत्रान्वेषणपूर्व्वकं ।
प्रययौ काननं घोरं सर्व्वैश्च बान्धवैः सह ॥ ४२ ॥
सर्व्वं वनं समन्विष्य प्रययुस्ते सरोवरं ।
ददृशुस्ते शिशुं [11]गुह्यं सूर्य्याभं वटमूलके ॥ ४३ ॥
चुचुम्ब गण्डं पुत्रस्य विप्रो विप्रा च सादरं ।
आश्लिष्य क्रमेणैव माता तातः पुनः पुनः ॥ ४४ ॥
पुत्रश्च सर्व्ववृत्तान्तं कथयामास सादरं ।

---

[9] धर्मं T. [10] पित्रा । [11] गुप्तम् P.

श्रुत्वा पुत्त्रस्य विप्रस्य विप्रा च बान्धवास्तथा ॥ ४५ ॥
ययुः सर्व्वे स्वदेशञ्च परमाह्लादमानसाः ।
चन्द्रभागां समुत्तीर्य्य विवेश नगरं परं ॥ ४६ ॥
नगरस्थो नृपेन्द्रश्च दृष्ट्वा तेजस्विनं शिशुं ।
ददौ तस्मै स्वकन्याञ्च रत्नालङ्कारभूषितां ॥ ४७ ॥
युवतीं सुन्दरीं श्यामां तप्तकाञ्चनसन्निभां ।
पतिव्रतां महाभागां सुन्दरींक्कमलाकलां ॥ ४८ ॥
गजेन्द्राणां सहस्रञ्च प्रददौ यौतुकं मुदा ।
अश्वानां दशलक्षञ्च रत्नानाञ्च सहस्रकं ॥ ४९ ॥
दासीनां निष्ककण्ठीनां सुन्दरीणां सहस्रकं ।
वस्त्ररत्नसहस्रञ्च बहुमूल्यं सुदुर्लभं ॥ ५० ॥
दासानाञ्च सहस्रञ्च पदातीनां त्रिलक्षकं ।
दशलक्षं सुवर्णं च रत्नमालां सुदुर्लभां ॥ ५१ ॥
दत्वा तस्मै च कन्यां च रुरोद च सभार्य्यकः ।
राजा च कन्यया सार्द्धं प्रययौ विप्रमन्दिरं ॥ ५२ ॥
गत्वा चापि कियद्दूरं ददर्श नगरं नृपः ।
अतीव सुन्दरं रम्यं विजित्य चामरावतीं ॥ ५३ ॥
शुद्धस्फटिकसङ्काशं रत्नसारविनिर्म्मितं ।
त्रिकोट्यट्टालिकागेहं नवकोटिसुमन्दिरं ॥ ५४ ॥
सप्तप्राकारयुक्तञ्च परिखात्रयसंयुतं ।
दुर्लङ्घ्यमतिदुर्गम्यं रिपूणामपि दुःखकं ॥ ५५ ॥
शिशोश्च स्वाश्रमं रम्यं सद्रत्नसारनिर्म्मितं ।

स्फुरत्वज्रकपाटञ्च रत्नेन्द्रकलसान्वितं ॥ ५६ ॥
सद्रत्नदर्पणैर्दीप्तं रत्नकुम्भैर्विराजितं ।
प्राङ्गणं रत्नसाराढ्यं रत्नसोपानशोभितं ॥ ५७ ॥
मनोहरं राजमार्गं सिन्दूरादिपरिष्कृतं ।
प्राकारं मणिभूपाढ्यमुच्चैराकाशस्पर्शि च ॥ ५८ ॥
जगाम विस्मयं राजा दृष्ट्वा नगरमुत्तमं ।
पिता माता सह शिशुर्विस्मयञ्च ययौ मुदा ॥ ५९ ॥
गजेन्द्राणां विलक्षञ्च अश्वानां शतलक्षकं ।
चतुर्गुणं पदातीनामाययुस्तेऽप्यनुव्रजं ॥ ६० ॥
वारणेन्द्रं पुरस्कृत्य वेश्याश्च नर्त्तकं तथा ।
द्विजांश्च पूर्णकुम्भांश्च पतिपुत्रवतीं सतीं ॥ ६१ ॥
महायाचः शिशुं दृष्ट्वा गजेन्द्रोपरिसंस्थितं ।
मूर्ध्ना ननाम वेगेनाप्यवरुह्य गजादपि ॥ ६२ ॥
शिशुं प्रवेशयामास रत्ननिर्माणमन्दिरं ।
[12]रत्नसिंहासनं तस्मै प्रददौ सादरं मुदा ॥ ६३ ॥
कन्यादात्रे च पित्रे च मात्रे च सादरं मुदा ।
रत्नसिंहासनं रम्यं प्रददौ पात्र एव च ॥ ६४ ॥
शिशुं सिषेव[13] याचश्च स्वयञ्च श्वेतचामरैः ।
दधार रत्नछत्रञ्च हीराहारपरिष्कृतं ॥ ६५ ॥
उवास स सभायाञ्च सुधर्मायां महेन्द्रवत् ।

[12] This and the following verse are wanting in T and M
[13] सिषेवे M and T.

श्वशुरस्य ययौ गेहं शिशुना च पुरस्कृतः ॥ ६६ ॥
विंशत्सहस्रवर्षञ्च राजा राज्यं चकार सः।
कालान्तरे तत्पिता च वने व्याघ्रेण भक्षितः ॥ ६७ ॥
पतिव्रता महाभागा माला सहमृता सुत।
रत्नयानेन रम्येण सस्त्रीकः कृष्णमन्दिरं ॥ ६८ ॥
प्रययौ सादरं विप्रः कृष्णनैवेद्यभक्षणात्।
तदस्थि भुक्त्वा व्याघ्रस्य पूतः सद्यश्च साम्प्रतं ॥ ५९ ॥
ताभ्यां सार्द्धञ्च प्रययौ गोलोकं सुमनोहरं।
शिशुर्देहं परित्यज्य हिमाद्रौ स्वर्णदीतटे ॥ ७० ॥
दत्वा पुत्राय राज्यञ्च स्वर्गादपि सुदुर्लभं।
मृकण्डुपत्नीगर्भे च लेभे जन्म स्वकर्मणा ॥ ७१ ॥
मार्कण्डेयो मुनिश्रेष्ठो बभूव परजन्मनि।
सप्तकल्पान्तजीवी च नारायणवरेण सः ॥ ७२ ॥
बभूव साम्प्रतं विप्रः कृष्णनैवेद्यभक्षणात्।
श्वभक्षितञ्च नैवेद्यं भुक्त्वा चेदीदृशी गतिः ॥ ७३ ॥
अकामतश्चाप्यज्ञातो जीर्णं मार्गस्थितं सुत।
यो भक्षेत् कामतो ज्ञातो नित्यं नैवेद्यमीप्सितं ॥ ७४ ॥
न जानन्ति गतिन्तस्य वेदाश्चत्वार एव च।
इति ते कथितं ब्रह्मन्नितिहासं पुरातनं ॥
आश्चर्यं मधुरं रम्यं किं भूयः श्रोतुमिच्छसि ॥ ७५ ॥

श्रीनारद उवाच।

श्रुतं नैवेद्यमाहात्म्यं अतीव सुमनोहरं।

ईश्वरस्यापि हे तात कृष्णस्य परमात्मनः ॥ ७६ ॥
अधुना श्रोतुमिच्छामि स्वात्मसन्देहभञ्जनं ।
[14]नारायणर्षेः कण्ठे च कवचं तस्य तद्वद ॥ ७७ ॥

सनत्कुमार उवाच ।

भ्रमाप्यस्तीति सन्देहो वचने प्रपितामह ।
कस्य तत् कवचं ब्रह्मन्निदं वक्तुं त्वमर्हसि ॥ ७८ ॥
स पिता स गुरुः स्वच्छः करोति भ्रमभञ्जनं ।
शीघ्रं ब्रूहि महाभाग नारदं मां सुतप्रिय ॥ ७९ ॥
पुत्रयोश्च वचः श्रुत्वा शुष्ककण्ठौष्ठतालुकः ।
उवाच वचनं ब्रह्मा स्मरन् कृष्णपदाम्बुजं ॥ ८० ॥

ब्रह्मोवाच ।

नारायणेन मुनिना जगन्मङ्गलमङ्गलं ।
विप्राय कवचं दत्तं ध्यानञ्च परमात्मनः ॥ ८१ ॥
तद्ब्रवीमि महाभाग त्वामेव नारदं प्रति ।
कण्ठस्थं कवचं वक्तुं नैव शक्नोमि साम्प्रतं ॥ ८२ ॥
मत्कण्ठे कवचं यस्य गोपनीयं सुदुर्लभं ।
नारायणर्षिकण्ठे च तदेव परमाद्भुतं ॥ ८३ ॥
तदेव धर्मकण्ठे च नरस्य च महात्मनः ।
अगस्त्यस्य च कण्ठे च लोमशस्य महामुनेः ॥ ८४ ॥
तुलस्याश्चापि संज्ञायाः सावित्र्याश्चापि पुत्रक ।
अन्येषां च भाग्यवतां भारते च सुदुर्लभं ॥ ८५ ॥

---

[14] This and the following eleven verses are wanting in T and M.

नारद उवाच ॥

पश्चात् श्रोष्यामि कवचं जगन्मङ्गलमङ्गलं ।
ध्यानं पूजां विधानञ्च कृष्णस्य परमात्मनः ॥ ८६ ॥
आदौ कथय भद्रन्ते परं परमभद्रकं[15] ।
सुभद्रप्राप्तं कवचं माहात्म्यं यस्य दुर्लभं । ८७ ॥

ब्रह्मोवाच ॥

सुभद्रप्राप्तं कवचं पश्चात् श्रोष्यसि पुत्रक ।
शङ्करस्य मुखाद्विप्र स्वगुरोर्ज्ञानिनस्तथा ॥ ८८ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे ब्रह्मनारदसंवादे प्रथमैकरात्रे कवचप्रश्नोनाम चतुर्थोऽध्यायः ॥ ४ ॥

---

पञ्चमोऽध्याय ॥

श्रीसनत्कुमार उवाच ॥

तवच्छा यत्र कवचे ध्याने तद्वद् साम्प्रतं ।
यच्छृणोमि[1] शुभं तत्र केन श्रेयसि तृप्यते[2] ॥ १ ॥

ब्रह्मोवाच ॥

ध्यानञ्च सामवेदोक्तं दत्तं नारायणेन वै ।
कवचं च सुभद्राय धर्मिष्ठाय[3] महात्मने ॥ २ ॥

---

[15] भद्रदं M

[1] शृणोमि A. P. and M.

[2] तृप्यते M.

[3] सुधर्माय T.

नवीनजलदश्यामं पीतकौपेयवाससं ।
[1]चन्दनोक्षितसर्व्वाङ्गं सस्मितं श्यामसुन्दरं ॥ ३ ॥
मालतीमाल्यभूषाढ्यं रत्नभूषणभूषितं ।
मुनीन्द्रैश्च सुसिद्धेशब्रह्मेशशेषवन्दितं ॥ ४ ॥
सर्व्वस्वरूपं सर्व्वेशं सर्व्वबीजं सनातनं ।
सर्व्वाधमपि सर्व्वज्ञं पुरुषं प्रकृतेः परं ॥ ५ ॥
निर्गुणं च निरीहञ्च निर्लिप्तमीश्वरं भजे ।
ध्यात्वा मूलेन तस्मै च दद्यात् पाद्यादिकं मुदा ॥ ६ ॥
ततः स्तोत्रञ्च कवचं भक्त्या च प्रपठेत्वरः ।
जप्त्वा च मन्त्रं भक्त्या च दण्डवत् प्रणमेद्भुवि ॥
इति ते कथितं वत्स किं भूयः श्रोतुमिच्छसि ॥ ७ ॥

श्रीसनत्कुमार उवाच ॥

ब्रूहि मे कवचं ब्रह्मन् जगन्मङ्गलमङ्गलं ।
पूज्यं पुण्यस्वरूपञ्च कृष्णस्य परमात्मनः ॥ ८ ॥

ब्रह्मोवाच ॥

शृणु वक्ष्यामि विप्रेन्द्र कवचं परमाद्भुतं ।
श्रीकृष्णेनैव कथितं मह्यञ्च कृपया पुरा ॥ ९ ॥
मया दत्तञ्च धर्माय तेन नारायणर्षये ।
ऋषिणा तेन तद्दत्तं सुभद्राय महात्मने[2] ॥ १० ॥
अतिगुह्यतमं गुह्यं परं स्नेहाद्ददाम्यहं ।

---

[1] चन्दनाक्षित T.    [2] महीतले M.

यद्धृत्वा पठनात् सिद्धाः सिद्धानि प्राप्नुवन्ति च ॥ ११ ॥
एवमिन्द्रादयः सर्व्वे सर्व्वैश्वर्य्यमवाप्नुयुः ।
ऋषिश्छन्दश्च सावित्री देवो नारायणः स्वयं ॥ १२ ॥
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः[6] ।

ओं

[7]राधेशो मे शिरः पातु कण्ठं राधेश्वरः स्वयं ॥ १३ ॥
गोपीशश्चक्षुषी पातु तालुञ्च भगवान् स्वयं ।
गण्डयुग्मञ्च गोविन्दः कर्णयुग्मञ्च केशवः ॥ १४ ॥
गलं गदाधरः पातु स्कन्धं कृष्णः स्वयं प्रभुः ।
वक्षःस्थलं वासुदेवश्चोदरं चापि सोऽच्युतः ॥ १५ ॥
नाभिं पातु पद्मनाभः कङ्कालं कंससूदनः ।
पुरुषोत्तमः पातु पृष्ठं नित्यानन्दो नितम्बकं ॥ १६ ॥
पुण्डरीकः पादयुग्मं हस्तयुग्मं हरिः स्वयं ।
नासाञ्च नखरं पातु नरसिंहः स्वय प्रभुः ॥ १७ ॥
सर्व्वेश्वरश्च सर्व्वाङ्गं सततं मधुसूदनः ।
प्राच्यां पातु च रामश्च वह्नौ वंशीधरः स्वयं ॥ १८ ॥
पातु दामोदरो दक्षे नैर्ऋते च नरोत्तमः ।
पश्चिमे पुण्डरीकाक्षो वायव्यां वामनः स्वयं ॥ १९ ॥
अनन्तश्चोत्तरे पातु ऐशान्यामीश्वरः स्वयं ।
जले स्थले चान्तरीक्षे स्वप्ने जागरणे तथा ॥ २० ॥

---

[6] Wanting in A T and M    [7] ॐ राधा मे P राधे मम T C M

पातु वृन्दावनेशश्च मां भक्तं शरणागतं ।
इति ते कथितं वत्स कवचं परमाद्भुतं ॥ २१ ॥
सुखदं मोक्षदं सारं सर्वसिद्धिप्रदं सतां ।
इदं कवचमिष्टञ्च पूजाकाले च यः पठेत् ॥
हरिदास्यमवाप्नोति गोलोके वासमुत्तमं ।
इहैव हरिभक्तिञ्च जीवन्मुक्तो भवेन्नरः ॥ २२ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे प्रथमैकरात्रे ब्रह्मनारदसंवादे जगन्मङ्गलं नाम कवचं समाप्तं ॥

नारद उवाच ॥

नारायणर्षिणा दत्तं कवचं यत् सुदुर्लभं ।
सुभद्राय ब्राह्मणाय तन्मे[8] वक्तुमिहार्हसि ॥ २३ ॥

ब्रह्मोवाच ॥

मदीष्टदेव्याः कवचं कथं तत्कथयामि ते ।
मत्कण्ठे पश्य कवचं [9]सद्रत्नगुटिकान्वितं ॥ २४ ॥
नारायणर्षिणा दत्तं कवचं गुटिकान्वितं ।
तथापीदं न कथितं निषिद्धं हरिणा स्मृतं ॥ २५ ॥
तस्यर्षेश्चेष्टदेव्याश्च नोक्तं तेनेदमीप्सितं ।
मह्यं न दत्ता गुटिका बान्धवैर्भर्त्सितेन च ॥ २६ ॥
आत्मनः कवचं मन्त्रं स्वयं दातुं न चार्हति ।
प्राणा नष्टाश्च दानेन चेति वेदविदो विदुः ॥ २७ ॥

---

[8] मा T. and M.

[9] य M

शङ्करं गच्छ भगवन् जन्मान्तरगुरुं तव ।
स एव तुभ्यं कवचं दास्यत्येव न संशयः ॥ २८ ॥
त्वत्प्राक्तनेन विप्रेन्द्र सत्वरेण शुभेन च ।
ध्रुवं प्राप्स्यसि त्वं वत्स कवचं तत् सुदुर्लभं ॥ २९ ॥
कुमार गच्छ वैकुण्ठं स्वगुरुं पश्य सत्वरं ।
नारायणश्च कवचं तुभ्यं दास्यति निश्चितं ॥ ३० ॥
सनत्कुमारो भगवान् गत्वा वैकुण्ठमीप्सितं ।
संप्राप्य कवचं वत्स कवचं तत् सुदुर्लभं ॥ ३१ ॥
आज्ञया ब्रह्मणश्चापि नारदो गन्तुमुद्यतः ।
ब्रह्मा ययौ ब्रह्मलोकं जन्ममृत्युजरापहं[10] ॥ ३२ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे प्रथमैकरात्रे पञ्चमोऽध्यायः ॥ ५ ॥

---

षष्ठोऽध्यायः ॥



श्रीशुक उवाच ॥

सनत्कुमारो वैकुण्ठं ब्रह्मलोकञ्च ब्रह्मणि ।
गते ब्रह्मन् किं चकार भगवान्नारदो मुनिः ॥ १ ॥

व्यास उवाच ॥

मुनिस्तयोश्च गतयोः स करोट सरित्तटे ।
इतस्ततश्च बभ्राम मद्वियोगगुणास्पदः ॥ २ ॥

---

[10] हर M

स्वमानसे समालोक्य मुनिश्रेष्ठः स उन्मनाः ।
ध्यायमानो हरिपदं शिवं द्रष्टुं समुत्सुकः ॥ ३ ॥
प्रणम्य पितरं भक्त्या कुमारं भ्रातरं ततः ।
जगाम तपसःस्थानात् कैलासाभिमुखो मुनिः ॥ ४ ॥
स्नात्वा च कृतमालायां सम्पूज्य परमेश्वरं ।
भुक्त्वा फलं जलं पीत्वा प्रययौ गन्धमादनं ॥ ५ ॥
ददर्श ब्राह्मणं तत्र वटमूले मनोहरे ।
कटमस्तं ध्यायमानं श्रीकृष्णचरणाम्बुजं ॥ ६ ॥
दीर्घं नग्नञ्च गौराङ्गं दीर्घलोमभिरावृतं ।
निमीलिताक्षं सानन्दं सानन्दाश्रुसमन्वितं ॥ ७ ॥
पाद्मे पद्मभवेशादिसुरपूजितवन्दिते ।
श्रीपादपद्मे शोभाढ्ये शश्वत्संन्यस्तमानसं ॥ ८ ॥
बाह्यज्ञानपरित्यक्तं योगज्ञानविशारदं ।
शिवस्य शिष्यं सद्भक्तं योगीन्द्राणां गुरोर्गुरोः ॥ ९ ॥
हृत्पद्मे पद्मनाभञ्च परमात्मानमीश्वरं ।
प्रदीपकलिकाकारं ब्रह्मज्योतिः सनातनं ॥ १० ॥
साक्षिस्वरूपं परमं भगवन्तमधोक्षजं ।
पश्यन्तं सस्मितं कृष्णं पुलकाङ्कितविग्रहं ॥ ११ ॥
[1]सद्भावोद्रिक्तचित्तञ्च सद्भावं पुरुषोत्तमे ।
दृष्ट्वा महर्षिप्रवरं देवर्षिर्विस्मयं ययौ ॥ १२ ॥

---

[1] यद्भावत्यक्तचित्तञ्च यद्भक्तं पुरुषोत्तमे । A T M

इतस्ततश्च बभ्राम ददर्श स्वाश्रमं मुनेः ।
अतीव सुरहःस्थानं रम्यं रम्यं नवं नवं ॥ १३ ॥
सुस्निग्धं सुन्दरं शुद्धं परं स्वच्छं सरोवरं ।
श्वेतरक्तोत्पलदलैः कमलैः कमनीयकं ॥ १४ ॥
*गुञ्जदिन्दिन्दिरवरैर्मकरन्दोदरैस्तथा ।
व्याकुलैः संकुलैः शश्वद्राजितैश्च विराजितं ॥ १५ ॥
वन्यैर्वृक्षैर्बहुविधैः फलशाखासुशोभितैः ।
करञ्जकैश्च करजैर्बिम्बैः साकोटकैस्तथा ॥ १६ ॥
तिन्तिडीभिः कपित्थैश्च वटशिंशपचन्दनैः ।
मन्दारैश्च सिन्धुरावै ताडिपवैः सुशोभनैः ॥ १७ ॥
गुवाकैर्नारिकेलैश्च खर्जूरैः पनसैस्तथा ।
तालैः शालैः पियालैश्च हिन्तालैर्नकुचैरपि ॥ १८ ॥
आम्रैराम्रातकैश्चैव जम्बीरैर्दाडिमैस्तथा ।
श्रीफलैर्बदरीभिश्च जम्बुभिर्नागरङ्गकैः ॥ १९ ॥
सुपक्वफलशोभाढ्यैः सुस्निग्धैः सुमनोहरैः ।
तरुणैस्तरराजैश्च नानाजातिभिरीप्सित ॥ २० ॥
मल्लिकामालतीकुन्दकेतकीकुसुमैः शुभैः ।
माधवीनां लताजालैश्चर्चितश्चारुचम्पकैः ॥ २१ ॥
कदम्बानां कदम्बैश्च स्वच्छैः श्वेतैश्च पुष्पितैः ।
नागेश्वराणां वृन्दैश्च दीप्तं मन्दारकेशरैः ॥ २२ ॥

* गुञ्जद्विरेफमधरैर्मकरन्दधरैस्तथा । T M

हंसकारण्डवकुलैः पुंस्कोकिलकुलैस्तथा ।
सन्ततं कूजितं शुद्धं सुव्यक्तं सुमनोहरं ॥ २३ ॥
शार्दूलैः शरभैः सिंहैर्गण्डकैर्महिषैः परं ।
मनोहरैः कृष्णसारैश्चमरीभिर्विभूषितं ॥ २४ ॥
महामुनिप्रभावेन हिंसादोषविवर्जितं ।
दस्युचौरहिंस्रजन्तुभयशोकविवर्जितं ॥ २५ ॥
सुपुण्यदं तीर्थवरं भारते सुप्रशंसितं ।
सिद्धस्थलं सिद्धिदं तं मन्त्रसिद्धिकरं परं ॥ २६ ॥
दृष्ट्वाश्रमं मुनिश्रेष्ठो जगाम मुनिसंसदि ।
आसने च समासीनं ध्यानहीनं ददर्श तं ॥ २७ ॥
समुत्तस्थौ स वेगेन दृष्ट्वा देवर्षिपुङ्गवं ।
दत्त्वाऽमलं फलं मूलं सम्भाषां स चकार ह ॥ २८ ॥
प्रश्नञ्चकार स मुनिर्वीणापाणिञ्च नारदं ।
सस्मितः सस्मितं शुद्धं शुद्धवंशसमुद्भवं ॥ २९ ॥
सद्भाग्योपस्थितं दीप्तं ज्वलन्तं ब्रह्मतेजसा ।
अतिथिं ब्राह्मणवरं ब्रह्मपुत्रञ्च पूजितं ॥ ३० ॥

मुनिरुवाच ।

किं नाम भवतो विप्र क्व यासीति क्व चागतः ।
क्व ते पिता स को वापि क्व वासः कुत्रसम्भवः ॥ ३१ ।
मां वा ममाश्रमं वापि पूतं कर्त्तुमिहागतः ।
मूर्त्तिमद्ब्रह्मतेजो हि मम भाग्यादुपस्थितः ॥ ३२ ॥
न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।

ते पुनन्त्युरुकालेन वैष्णवो दर्शनेन च ॥ ३३ ॥
सद्यः पूतानि तीर्थानि सद्यः पूताससागरा।
सशैलकाननद्वीपा पादस्पर्शाद्वसुन्धरा ॥ ३४ ॥
धन्योऽहं कृतकृत्योऽहं सफलं मम जीवनं।
सहसोपस्थितो गेहे ब्राह्मणो वैष्णवोऽतिथिः ॥ ३५ ॥
पूजितो वैष्णवो येन विश्वञ्च तेन पूजितं।
आश्रमं वस्तुसहितं सर्व्वं तुभ्यं निवेदितं ॥ ३६ ॥
फलानि च सुपक्कानि भुङ्क्ष्व भोगानि साम्प्रतं।
सुवासितं पिब स्वादु शीतलं निर्मलं जलं ॥ ३७ ॥
दुग्धञ्च सुरभीदत्तं रम्यं मधुरितं मधु।
परिपक्कं फलरसं पिब स्वादु मुहुर्मुहुः ॥ ३८ ॥
सुखवीज्ये[3] सुतल्पे च शयनं कुरु सुन्दरे।
सुशीतवातसौगन्ध्यपूतेन सुरभीकृते ॥ ३९ ॥
अतिथिर्यस्य तुष्टो हि तस्य तुष्टो हरिः स्वयं।
हरौ तुष्टे गुरुस्तुष्टो गुरौ तुष्टे जगत्त्रयं ॥ ४० ॥
अधिष्ठाताऽतिथिर्गेहे सन्ततं सर्व्वदेवताः।
तीर्थान्येतानि सर्व्वाणि पुण्यानि च व्रतानि च ॥ ४१ ॥
तपांसि यज्ञाः सत्यञ्च शीलं धर्मः सुकर्म च।
अपूजितैरतिथिभिः सार्द्धं सर्व्वे प्रयान्ति ते ॥ ४२ ॥
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्त्तते।

---

[3] सुशीते च P

पितरस्तस्य देवाश्च पुण्यं धर्मव्रताशनाः ॥ ४३ ॥
यमः प्रतिष्ठा लक्ष्मीश्चाभीष्टदेवो गुरुस्तथा ।
निराशाः प्रतिगच्छन्ति त्यक्त्वा पापञ्च पूरुषं ॥ ४४ ॥
स्त्रीघ्नैश्चैव कृतघ्नैश्च ब्रह्मघ्नैर्गुरुतल्पगैः ।
विश्वासघातिभिर्दुष्टैर्मित्रद्रोहिभिरेव च ॥ ४५ ॥
सत्यघ्नैश्च कृतघ्नैश्च पापिभिः स्थापिभिस्तथा ।
दानापहारिभिश्चैव कन्याविक्रयिभिस्तथा ॥ ४६ ॥
सीमापहारिभिश्चैव मिथ्यासाक्षिप्रदातृभिः ।
ब्रह्मस्वहारिभिश्चैव तथा स्थाप्यस्वहारिभिः ॥ ४७ ॥
हयवाहैर्देवलैश्च तथैव ग्रामयाजिभिः ।
शूद्रान्नभोजिभिश्चैव शूद्रश्राद्धान्नभोजिभिः ॥ ४८ ॥
श्रीकृष्णविमुखैर्विप्रैर्हिंस्रैर्नरविघातिभिः ।
[4]गुरावभक्तैरोगार्त्तैः शश्वन्मिथ्याप्रवादिभिः ॥ ४९ ॥
विप्रस्त्रीगामिभिः शूद्रैर्मातृगामिभिरेव च ।
अश्वत्थघातिभिश्चैव पत्नीभिः पतिघातिभिः ॥ ५० ॥
पितृमातृघातिभिश्च शरणागतघातिभिः ।
ब्राह्मणक्षत्रविट्शूद्रैः शिलास्वर्णापहारिभिः ॥ ५१ ॥
तुल्यो भवति विप्रेन्द्रातिथिरेव त्वनर्चितः ।
इत्येवमुक्त्वा स मुनिः पूजयामास नारद ॥
मिष्टञ्च भोजयामास शाययामास[5] भक्तितः ॥ ५२ ॥

---

[4] ऋणभुक्तैश्च T M

[5] पाययामास T. M

श्रीनारद उवाच ।

नारदोऽहं मुनिश्रेष्ठ ब्राह्मणो ब्रह्मणः सुतः ।
तपःस्थलादागतोऽहं यामि कैलासमीप्सितं ॥ ५३ ॥
आत्मानं पावनं कर्त्तुं त्वाञ्च द्रष्टुमिहागतः ।
पुनन्ति प्राणिनः सर्व्वे विष्णुभक्तप्रदर्शनात् ॥ ५४ ॥
को भवान् ध्यानपूतश्च नग्नश्च कटमस्तकः ।
त्वत्कण्ठे कवचं कस्य सद्रत्नगुटिकान्वितं ॥
किं ध्यायसे महाभाग श्रेष्ठदेवश्च को गुरुः ॥ ५५ ॥

मुनिरुवाच ।

जीवन्मुक्तो भवानेव पुनासि भुवनत्रयं ।
यस्य यत्र कुले जन्म तस्य तत्तद्वचोमनः ॥ ५६ ॥
पुत्रे यशसि तोये च कवित्वेन च विद्यया ।
प्रतिष्ठायाञ्च चायेत सर्व्वेषां मानसं त्वया ॥ ५७ ॥
विधाता जगतां ब्रह्मा [6]ब्रह्मैकतानमानसः ।
तत्पुत्रोऽसि महाख्यातो देवर्षिप्रवरो महान् ॥ ५८ ॥
लोमशोऽहं महाभाग जगत्पावनपावन ।
नग्नोऽल्पायुर्विवेकी च वाससा किं प्रयोजनं ॥ ५९ ॥
[7]वृक्षमूले निवासो मे छत्रेण किं गृहेण च ।
रौद्रवृष्टिवारणार्थं साम्प्रतं कटमस्तक ॥ ६० ॥
जलबुद्बुदविद्युद्वत्त्रैलोक्यं क्षणिमं द्विज ।

---

[6] श्रेष्ठैकतानमानसः Pa कृष्णैकध्यानमानसः Pb

[7] मुने वृक्षे P T M

ब्रह्मादितृणपर्य्यन्तं[8] सर्वं मिथ्यैव स्वप्नवत् ॥ ६१ ॥
किं कलत्रेण पुत्रेण धनेन सम्पदा श्रिया ।
किं वित्तेन च रूपेण जीवनाल्पायुषा मुने ॥ ६२ ॥
इन्द्रस्य पतनेनैव लोमैकोत्पाटनं मम ।
मनोश्च पतनं तत्र मायया किं प्रयोजनं ॥ ६३ ॥
सर्व्वलोमोत्पाटनेन केशौघोत्पाटनेन च ।
अल्पायुषो मम मुने मरणं निश्चितं भवेत् ॥ ६४ ॥
ध्याये श्रीपादपद्मं तत् पाद्मपद्मोद्भवन्दितं ।
परस्य प्रकृतेस्तस्य कृष्णस्य[9] परमात्मनः ॥ ६५ ॥
तस्य मेऽभीष्टदेवस्य सर्व्वेषां कारणस्य च ।
गुरुर्मे जगतां नाथो योगीन्द्राणां गुरुः शिवः ॥ ६६ ॥
मत्कण्ठे कवचं यस्य मद्गुरुः कथयिष्यति ।
गुरोर्निषेधो यत्रास्ति तद्वक्तुं कः क्षमो भुवि ॥ ६७ ॥
गुरोश्च वचनं यो हि पालनं न करोति च ।
गुरूक्तमुक्त्वा पापी स ब्रह्महत्यां लभेत् ध्रुवं ॥ ६८ ॥
स्वगुरुं शिवरूपञ्च तद्भिन्नं मन्यते हि यः ।
ब्रह्महत्यां लभेत् सोऽपि विघ्नस्तस्य पदे पदे ॥ ६९ ॥
अकर्त्तव्यन्तु कर्त्तव्यं पालनीयं गुरोर्व्वचः ।
अपालने सर्व्वविघ्नं लभते नात्र संशयः ॥ ७० ॥
आशिषा पादरजसा चोच्छिष्टालिङ्गनेन च ।

---

[8] स्तम्बपर्य्यन्तं T.

[9] देवस्य T. M.

अहो देवर्षिप्रवरो दीप्तिमान् ब्रह्मतेजसा ।
क्व यासि कुत आयासि किन्ते मनसि वर्त्तते ॥ ७ ॥
मानसं प्राणिनामेव सर्व्वकर्मैककारणं ।
मनोऽनुरूपं वाक्यञ्च वाक्येन प्रस्फुटं मनः ॥ ८ ॥
मुनेश्च वचनं श्रुत्वा वीणापाणिः स्वमीप्सितं ।
उवाच सस्मितं शान्तं वचः सत्यं सुधोपमं ॥ ९ ॥

नारद[*]उवाच ।

हे बन्धो यामि कैलासं ज्ञानार्थं ज्ञानिनां वरं ।
द्रष्टुं प्रष्टुं महादेवं प्रणामं कर्त्तुमीश्वरं ॥ १० ॥
पूजां गृहीत्वा चेत्युक्ता प्रययौ नारदो मुनिः ।
मार्कण्डेयस्य शोकार्त्तः सद्विच्छेदः मुदाक्षणः ॥ ११ ॥
हिमालयञ्च दुर्लङ्घ्यं विलङ्घ्य चावलीलया ।
स्वर्गमन्दाकिनीतीरं कैलासं प्रययौ मुनिः ॥ १२ ॥
ददर्श वटवृक्षञ्च योजनायतमुच्छ्रितं ।
शोभितं शतकैः स्कन्धैरक्तपक्कफलान्वितैः ॥ १३ ॥
सुस्निग्धैः सुन्दरै रम्यै रम्यपक्षीन्द्रसंकुलैः ।
सिद्धेन्द्रैश्च मुनीन्द्रैश्च योगीन्द्रैः परिशोभितं ॥ १४ ॥
प्रणतांस्तांश्च संभाष्य पार्व्वतीकाननं ययौ ।
सुन्दरं [1]वर्त्तुलाकारं चतुर्योजनमीप्सितं ॥ १५ ॥
शोभितं सुन्दरै रम्यैः सप्तभिश्च सरोवरैः ।

---

[1] वर्त्तुलाकारं T M P

गुञ्जन्मधुकरा[2]सक्तपद्मराजिविराजितैः ॥ १६ ॥
नीलरक्तोत्पलदलपटलैः परिशोभितैः ।
पुष्पोद्यानैश्च शतकैः पुष्पितैः सुमनोहरैः ॥ १७ ॥
मल्लिकामालतीकुन्दयूथिकामाधवीलता ।
केतकीचम्पकाशोकमन्दारबकराजिका ॥ १८ ॥
नागपुन्नागकुटजपाटलाभिरिटिभिञ्भिका ।
विष्णुकान्ता च तुलसी शेफाली सप्तला तथा ॥ १९ ॥
एतेषाञ्च समूहैश्च पुष्पवल्लीविराजितैः ।
आम्रैराम्रातकैस्तालनारिकेलैः पियालकैः ॥ २० ॥
खर्जूरैश्च गुवाकैश्च पलाशैर्जम्बुभिस्तथा ।
दाडिम्बैश्चापि जम्बीरै[3]र्निम्बैश्चैव वटैस्तथा ॥ २१ ॥
करञ्जैर्बदरीभिश्च परितः श्रीफलोज्ज्वलैः ।
कदम्बानां कदम्बैश्च [4]तिन्तिडीनां कदम्बकैः[5] ॥ २२ ॥
अश्वत्थैः सरलैः शालैः शाल्मलीनां समूहकैः ।
वटशाकोटकैः कुन्दैः शङ्कुभिः सप्तपर्णकैः ॥ २३ ॥
पिच्छिलैः पर्णशालैश्च गम्भारिभिश्च वल्गुकैः ।
[6]हिङ्गुलैरञ्जनैर्वल्कैर्भूर्जपत्रैः सपत्रकैः ॥ २४ ॥
अन्यैश्च दुर्लभैर्वन्यैः[7] पुष्पपत्रैर्विराजितं ।
कल्पवृक्षैः पारिजातैश्चारुचन्दनपल्लवैः ॥ २५ ॥

---

[2] वायुसक्तेति R. T. M.　[3] नारङ्गैर्मकुटैरिति R.
[4] तिन्तिडीनां च पुष्पकैरिति P.　[5] च पुष्पकैः T. M.
[6] हिङ्गुलैर्वज्जलैरिति R. हिङ्गुलैर्मधुकैः T. M.　[7] रम्यैः P.

स्निग्धस्थलपद्मैश्च चित्रितैर्भूमिचम्पकैः ।
अन्यैश्च दुर्लभैर्वन्यैः पुष्पपत्रैर्विभूषितं ॥ २६ ॥
सिंहेन्द्रैः शरभेन्द्रैश्च गजेन्द्रैर्गण्डकेन्द्रकैः ।
शार्दूलेन्द्रैश्च महिषैरश्वैश्च वन्यशूकरैः ॥ २७ ॥
भल्लकैर्भल्लकैर्मर्कैः [8]कूटैश्च शशकैः शकैः ।
कृष्णसारैश्च हरिणैश्चमरीचामरोज्ज्वलं ॥ २८ ॥
पुंस्कोकिलकुलानाञ्च गानैश्चैव विराजितं ।
मत्तानां पल्लवस्थानां माधवेषु मनोहरं ॥ २९ ॥
शुकानां राजहंसानां मयूराणां च पुच्छकैः ।
क्षेमंकरीखञ्जनानां राजिभिश्च मनोहरं ॥ ३० ॥
हरित्पीतरक्तकृष्ण[9]सुपक्वफलपत्रकैः ।
सुस्निग्धाक्षतपत्रैश्च नूतनैरभिभूषितं ॥ ३१ ॥
हिंसाभयादिरहितं सर्वेषां पशुपक्षिणां ।
परस्परञ्च सुप्रीतं हिंस्राणां क्षुद्रजन्तुभिः ॥ ३२ ॥
तत्र क्रीडास्थलं रम्यं पार्वतीपरमेशयोः ।
मणीन्द्रैरिन्द्रनीलैश्च पद्मरागैः परिष्कृतं ॥ ३३ ॥
[10]क्रोशायतं परिमितं वर्तुलं चन्द्रबिम्बवत् ।
अम्लानरम्भास्तम्भानां लक्षलक्षैश्च वेष्टितं ॥ ३४ ॥
चित्रितं सूक्ष्मसूत्राक्तैर्नूतनैरभिभूषितं[11] ।

---

[8] नकुलैः शशकैः शकैः H.
[9] उत्पन्नफलपत्रकैः P. T. M.
[10] क्रोशयातं P. क्रोशमात्रं T. M.
[11] स्निग्ध चन्दन पल्लवैः T. M.

नूतनाम्रतपत्रैश्च [12]ललितैःपरिशोभितं ॥ ३५ ॥
रक्तपीतासितैः स्निग्धैरम्लानैः सुमनोहरैः ।
परितः परितः शश्वन्मालाजालैर्विभूषितं ॥ ३६ ॥
शय्याभूतं सुतल्पैश्च स्निग्धचम्पकचन्दनैः ।
पुष्पचन्दनयुक्तेन वायुना सुरभीकृतं ॥ ३७ ॥
कस्तूरीकुङ्कुमासक्तसुगन्धि चन्दनैः सितैः ।
मार्जितं चित्रितं चित्रैः परितो रत्नवस्तुभिः ॥ ३८ ॥
दृष्ट्वा तदद्भुतं शीघ्रं[13] प्रययौ स्वर्णदीं मुनिः ।
शुद्धस्फटिकसङ्काशां सर्व्वपापविनाशिनीं ॥ ३९ ॥
भवाब्धिघोरतरणे तरणीं नित्यनूतनां ।
कृष्णपादप्रसूताञ्च जगत्पूज्यां पतिव्रतां ॥ ४० ॥
स्नात्वा कृष्णञ्च सम्पूज्य परमात्मानमीश्वरं ।
प्रकृतेः परमिष्टञ्च निर्लिप्तं निर्गुणं परं ॥ ४१ ॥
साक्षिणं कर्म्मणामेव ब्रह्म ज्योतिः सनातनं ।
प्रययौ पुरतो रम्यं राजमार्गं ददर्श सः ॥ ४२ ॥
मणिभिःस्फटिकाकारैरमलैर्ब्बहुमूल्यकैः ।
परिष्कृतञ्च सर्व्वत्र निर्म्मितं विश्वकर्म्मणा ॥ ४३ ॥
सतां पुण्यवतां दृष्टमदृष्टं कृतपापिनां ।
धनुःशतं परिमितं चित्रराजिविराजितं ॥ ४४ ॥
दैर्घ्यं सर्व्वाश्रमान्तञ्च प्रस्थात् कोटिगुणोत्तरं ।

---

[12] वरितः T M

[13] चिरं T M

रथं ददर्श पुरतो मनोयायि मनोहरं ॥ ४५ ॥
अमूल्यरत्ननिर्माणविमानसारसुन्दरं ।
धनुर्लक्षं परिमितं परितो वर्तुलाकृतं ॥ ४६ ॥
ऊर्द्ध्वस्थितमूर्द्धगञ्च सहस्रचक्रसंयुतं ।
धनुर्लक्षेऽपि सूतञ्च वह्निशुद्धांशुकान्वितं ॥ ४७ ॥
क्षीरासारविनिर्माणं सुचारुकलसोज्ज्वलं ।
रत्नप्रदीपदीप्ताढ्यं रत्नदर्पणभूषितं ॥ ४८ ॥
मुक्तासुक्तिनिबद्धैश्च शोभितं श्वेतचामरैः ।
माणिक्यसारहारेण मणिराजैर्विराजितं ॥ ४९ ॥
पारिजातप्रसूनानां मालाजालैः परिष्कृतं ।
ग्रीष्ममध्याह्नमार्त्तण्डसहस्र[14]सदृशोज्ज्वलं ॥ ५० ॥
ईश्वरेच्छाविनिर्माणं कामपूरञ्च [15]कामिनां ।
सर्व्वभोगसमाविष्टं कल्पवृक्षपरं वरं ॥ ५१ ॥
संसक्तचित्रितैरम्यैरतिमन्दिरसुन्दरैः ।
गोलोकादागतं पूर्व्वं [16]क्रीडार्थं शङ्करस्य च ॥ ५२ ॥
विवाहे परिनिष्पन्ने पार्व्वतीपरमेशयोः ।
रथं दृष्ट्वा च प्रययौ कियद्दूरं महामुनिः ॥ ५३ ॥
अतीव रम्यं रुचिरं ददर्श शङ्कराश्रमं ।
रत्नेन्द्रसारनिर्माणं शिविरैः शतकोटिभिः ॥ ५४ ॥
मितैस्तस्मात् शतगुणैस्तच सुन्दरमन्दिरैः ।

[14] सदृशो M. T.
[15] कामगमिति R.
[16] क्रीडायामिति R.

युक्तं रत्नकपाटैश्च रत्नधातुविचित्रितैः ॥ ५५ ॥
परमस्तम्भसोपानैर्वज्रमिश्रैर्विभूषितं ।
ददर्श शिबिरं शम्भोः परिखाभिस्त्रिभिर्युतं ॥ ५६ ॥
दुर्लङ्घ्याभिरमित्राणां सुगम्याभिः सतामहो ।
प्राकारैश्च त्रिभिर्युक्तं धनुर्लक्षोच्छ्रितं सुत ॥ ५७ ॥
सम्मितं सप्तभिर्द्वारैः नानारक्षकरक्षितैः ।
धनुःशतसहस्रञ्च चतुरस्रञ्च सम्मितं ॥ ५८ ॥
अमूल्यरत्ननिर्माणं चतुःशालाशतैर्युतं ।
अतीवरम्यं पुरतो पुरद्वारं ददर्श सः ॥ ५९ ॥
पुरतो रत्नभित्तौ च रुचिमञ्च सुशोभितं ।
पुण्यं वृन्दावनं रम्यं तन्मध्ये रासमण्डलं ॥ ६० ॥
सर्व्वत्र राधाकृष्णञ्च प्रत्येकं रतिमन्दिरे ।
रम्यं कुञ्जकुटीराणां सहस्रं सुमनोहरं ॥ ६१ ॥
सुगन्धि पुष्पशय्यानां सहस्रं चन्दनोचितं ।
द्वारपालञ्च तत्रैव मनिभद्रं भयङ्करं ॥ ६२ ॥
त्रिशूलपट्टिशधरं व्याघ्रचर्माम्बरं परं ।
तं संभाष्य विलोक्यैवं द्वितीयद्वारमीप्सितं ॥ ६३ ॥
जगाम च मुनिश्रेष्ठो ददर्श चित्रमुत्तमं ।
कदम्बानां समूहञ्च तन्मूलञ्च मनोहरं ॥ ६४ ॥
रत्नभित्तिसमायुक्तं कालिन्दीकूलमुत्तमं ।
स्नातं गोपीसमूहञ्च [17]नग्नसर्व्वाङ्गमद्भुतं ॥ ६५ ॥

---

[17] नग्न दुर्गावतीयत्नमिति II

कदम्बाग्रे च श्रीकृष्णं वस्त्रपुञ्जकरं परं ।
तत्रैव शूलहस्तञ्च महाकालं ददर्श च ॥ ६६ ॥
कृपालुं द्वारपालं [18]तं संभाष्य नारदो मुनिः ।
प्रययौ [19]शीघ्रगामी स तृतीयद्वारमुत्तमं ॥ ६७ ॥
ददर्श तत्र पुरतः कृत्रिमं वटमूलकं ।
गोपानाञ्च समूहञ्च पीताम्बरधरं परं[20] ॥ ६८ ॥
वालक्रीडाञ्च कुर्व्वन्तं तन्मध्ये कृष्णमुत्तमं ।
ब्राह्मणीभिः प्रदत्तञ्च भुक्तवन्तं सुपायसं ॥ ६९ ॥
कुर्व्वन्तञ्च समाधानं मुने वामकरेण च ।
गृहीत्वा तदनुज्ञाञ्च चतुर्थं द्वारमीप्सितं ॥ ७० ॥
प्रययौ ब्रह्मपुत्रश्च ददर्श चित्रमुत्तमं ।
गोवर्द्धनं पर्व्वतञ्च [21]तत्र कृष्णकरस्थितं ॥ ७१ ॥
गोकुलं गोकुलस्थानां गोपीनां चैव रक्षणं[22] ।
व्याकुलं गोकुलं भीतं शक्रवृष्टिभयेन च ॥ ७२ ॥
अभयं दत्तवन्तञ्च कृष्णं दक्षकरेण च ।
नन्दिनं द्वारपालञ्च शूलहस्तञ्च सस्मितं ॥ ७३ ॥
विलोक्य प्रययौ विप्रः पञ्चमं द्वारमुत्तमं ।
नानाकृत्रिमचित्राढ्यं वीरभद्रान्वितं परं ॥ ७४ ॥
तत्रैव नीपमूलञ्च यमुनाकूलमेव च ।
कालीयदमनं तत्र कृत्रिमं च ददर्श ह ॥ ७५ ॥

---

[18] च M T
[19] शिष्यामूर्खं P M T
[20] तदा M. T.
[21] कृष्णवामकरस्थितमिति R
[22] रङ्कणं P.

तद्दृष्ट्वा सस्मितस्तुष्टः षष्ठद्वारं जगाम सः ।
द्वारे नियुक्तं बालञ्च शूलहस्तं चतुर्भुजं ॥ ७६ ॥
रत्नसिंहासनस्थञ्च सस्मितं स्वगणाधिपं ।
ददर्श चित्रं तत्रैव मथुरागमनं हरेः ॥ ७७ ॥
गोपिकानां विलापञ्च यशोदानन्दयोस्तथा ।
व्याकुलं गोकुलं चापि रथस्थं शरणं[23] हरिं ॥ ७८ ॥
अक्रूरञ्च तथा नन्दं निरानन्दं सुचाकुलं ।
तद्दृष्ट्वा सप्तमद्वारं द्वारपालं ददर्श सः ॥ ७९ ॥
चित्रकौतुकयुक्तञ्च मथुरायाः प्रवेशनं ।
सबलं गोपसहितं श्रीकृष्णं प्रकृतेः परं ॥ ८० ॥
मथुरानागरीभिश्च बालकैर्वा[24]निरर्गलैः ।
वीक्षन्तं सादरं सर्व्वैर्नगरस्थैर्मनोहरं ॥ ८१ ॥
धनुर्भङ्गं तथा शम्भोः कंसादिनिधनादिकं ।
सभार्य्यं वसुदेवञ्च निगडान्मुक्तमीप्सितं ॥ ८२ ॥
द्वारे नियुक्तं देवेशं गणेशं गणसंयुतं ।
ध्यानस्थञ्च विभान्तञ्च शुद्धस्फटिकमालया ॥ ८३ ॥
जपन्तं परमं शुद्धं ब्रह्म ज्योतिः सनातनं ।
निर्लिप्तं निर्गुणं कृष्णं परमं प्रकृतेः परं ॥ ८४ ॥
दृष्ट्वा तञ्च सुरश्रेष्ठं मुनिश्रेष्ठोऽपि नारदः ।
सामवेदोक्तस्तोत्रेण तुष्टाव परमेश्वरं ॥

---

[23] सबलं M. T

[24] माणिक्यागर्बैः T. M

साश्रुनेत्रः पुलकितो भक्तिनम्रात्मकन्धरः ॥ ८५ ॥

नारद उवाच ॥

भो गणेश सुरश्रेष्ठ लम्बोदर परात्पर ।
हेरम्ब मङ्गलारम्भ गजवक्त्र त्रिलोचन ॥ ८६ ॥
मुक्तिद शुभद श्रीद श्रीधरस्मरणे रत ।
परमानन्द परम पार्व्वतीनन्दन स्वयं ॥ ८७ ॥
सर्व्वत्र पूज्य सर्व्वेश जगत्पूज्य महामते ।
जगद्गुरो जगन्नाथ जगदीश नमोऽस्तु ते ॥ ८८ ॥
यत्पूजा सर्व्वपुरतो यः स्तुतः सर्व्वयोगिभिः ।
यः पूजितः सुरेन्द्रैश्च मुनीन्द्रैस्तं नमाम्यहं ॥ ८९ ॥
परमाराधनेनैव कृष्णस्य परमात्मनः ।
पुण्यकेन व्रतेनैव यं प्राप पार्व्वती सती ॥ ९० ॥
तं नमामि सुरश्रेष्ठं सर्व्वश्रेष्ठं गरीष्ठकं ।
ज्ञानिश्रेष्ठं वरीष्ठञ्च तं नमामि गणेश्वरं ॥ ९१ ॥
इत्येवमुक्त्वा देवर्षिस्तत्रैवान्तर्दधे विभुः ।
नारदः प्रययौ शीघ्रमीश्वराभ्यन्तरं मुदा ॥ ९२ ॥
इदं लम्बोदरस्तोत्रं नारदेन कृतं पुरा ।
पूजाकाले पठेन्नित्यं जयं तस्य पदे पदे ॥ ९३ ॥
सङ्कल्पितं पठेद्योहि वर्षमेकं सुसंयतः ।
विशिष्टपुत्रं लभते परं कृष्णपरायणं ॥ ९४ ॥
यशस्विनञ्च विद्वांसं धनिनं चिरजीविनं ।

विघ्ननाशो भवेत्तस्य महैश्वर्यं यशोऽमलं ॥
इहैव च सुखं भक्त्या अन्ते याति हरेः पदं ॥ ९५ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे प्रथमैकरात्रे गणपतिस्तोत्रं नाम सप्तमोऽध्याय ॥ ७ ॥

---

अष्टमोऽध्याय ॥

श्रीव्यास उवाच ।

अथ चाभ्यन्तरं गत्वा नारदो [1]हृष्टमानसः ।
ददर्श स्वाश्रमं रम्यमतीव सुमनोहरं ॥ १ ॥
पयःफेननिभाशय्यासहितं रत्नमन्दिरं ।
साक्षाद्गोरोचनाभैश्च मणिस्तम्भैर्विभूषितं ॥ २ ॥
मणीन्द्रसारसोपानैः कपाटैश्च परिष्कृतं ।
मुक्तामाणिक्यहीराणां मालाराजिविराजितं ॥ ३ ॥
[1]शुद्धस्फटिकसङ्काशं प्राङ्गणं मणिसंस्कृतं ।
सुन्दरं मन्दिरचयं सद्रत्नकलसोज्ज्वलं ॥ ४ ॥
रत्नपत्रपटाकीर्णं वह्निशुद्धांशुकान्वितं ।
सुधानाञ्च मधूनाञ्च पूर्णकुम्भं शतं शतं ॥ ५ ॥
दासदासीसमूहैश्च रत्नालङ्कारभूषितैः ।
पार्वतीप्रियसङ्घैश्च स्वकर्माकुलसङ्कुलं ॥ ६ ॥

---

[1] श्रेष्ठेति॰ T 31

तद्दृष्ट्वा च मुनिश्रेष्ठस्त्वत्पराभ्यन्तरं ययौ ।
रत्नसिंहासनस्थञ्च शङ्करञ्च ददर्श सः ॥ ७ ॥
व्याघ्रचर्माम्बरधरं सस्मितं चन्द्रशेखरं ।
प्रसन्नवदनं स्वच्छं शान्तं श्रीमन्तमीश्वरं ॥ ८ ॥
विभूतिभूषिताङ्गञ्च परं गङ्गाजटाधरं ।
भक्तप्रियञ्च भक्तेशं ज्वलन्तं ब्रह्मतेजसा ॥ ९ ॥
त्रिनेत्रं पञ्चवक्त्रञ्च कोटिचन्द्रसमप्रभं ।
जपन्तं परमात्मानं ब्रह्म ज्योतिःसनातनं ॥ १० ॥
निर्लिप्तञ्च निरीहञ्च दातारं सर्व्वसम्पदां ।
स्वेच्छामयं सर्व्वबीजं श्रीकृष्णं प्रकृतेः परं ॥ ११ ॥
सिद्धेन्द्रैश्च मुनीन्द्रैश्च देवेन्द्रैः परिसेवितं ।
पार्षदप्रवरश्रेष्ठसेवितं श्वेतचामरैः ॥ १२ ॥
दुर्गासेवितपादाब्जं भद्रकालीपरिष्टुतं[2] ।
पुरतो हि वसन्तं तं स्कन्दं गणपतिं तथा ॥ १३ ॥
गले बद्धा च वसनं भक्तिनम्रात्मकन्धरः ।
योगीन्द्रं स्वगुरुं शम्भुं शिरसा प्रणनाम सः ॥ १४ ॥
तुष्टाव परया भक्त्या देवर्षिर्जगतां पतिं ।
स्वगुरुञ्च पशुपतिं वेदोक्तेन स्तवेन च ॥ १५ ॥

नारद उवाच ।

नमस्तुभ्यं जगन्नाथ मम नाथ मम प्रभो ।

---

[2] परिष्कृतं T. M

भवरूपतरोर्वीज फलरूप फलप्रद ॥ १६ ॥
अवीजाज प्रज प्राज सर्व्ववीज नमोऽस्तु ते ।
सद्भाव परमाभाव विभाव भावनाश्रय ॥ १७ ॥
भवेश भवबन्धेश भवाब्धिनाविनाविक ।
सर्व्वाधार निराधार साधार धरणीधर ॥ १८ ॥
वेदविद्याधराधार गङ्गाधर नमोऽस्तु ते ।
जयेश विजयाधार जयवीज जयात्मक ॥ १९ ॥
जगदादि जयानन्द सर्व्वानन्द नमोऽस्तु ते ।
इत्येवमुक्का देवर्षिः शम्भोश्च पुरतः स्थितः ॥
प्रसन्नवदनः श्रीमान् भगवांस्तमुवाच सः ॥ २० ॥

श्रीमहादेव उवाच ॥

वरं वृणु महाभाग यत्ते मनसि वर्त्तते ।
दास्यामि त्वां ध्रुवं पुत्र दाताहं सर्व्वसम्पदां ॥ २१ ॥
सुखं मुक्तिं हरेर्भक्तिं निश्चलामविनाशिनीं ।
हरेः पादश्च तद्दास्यं सालोक्यादिचतुष्टयं ॥ २२ ॥
इन्द्रत्वममरत्वं वा [3]यमत्वमानिलेश्वरं ।
प्रजापतित्वं ब्रह्मात्वं [4]सिद्धत्वं सिद्धिसाधनं ॥ २३ ॥
सिद्धैश्वर्य्यं सिद्धिवीजं वेदविद्याधिपं परं ।
अणिमादिकसिद्धिञ्च मनोयायित्वमीप्सितं ॥ २४ ॥
हरेः [5]पदञ्च गमनं सशरीरेण लीलया ।

[3] मघत्वं T. M    [4] सिद्धित्वं सिद्धिसाधनं F R T. M.
[5] पदेऽपि M T

एतेषु वाञ्छितार्थेषु किंवा ते वाञ्छितं सुत ॥ २५ ॥
तन्मे ब्रूहि मुनिश्रेष्ठ सर्व्वं दातुमहं क्षमः ।
शङ्करस्य वचः श्रुत्वा तमुवाच महामुनिः ॥ २६ ॥

श्रीनारद उवाच ॥

देहि मे हरिभक्तिञ्च तन्नामसेवने रुचिः ।
अतितृष्णा गुणाख्याने नित्यमस्तु ममेश्वर ॥ २७ ॥
नारदस्य वचः श्रुत्वा जहास शङ्करः स्वयं ।
पार्व्वती भद्रकाली च कार्त्तिकेयो गणेश्वरः ॥ २८ ॥
सर्व्वं ददौ महादेवो नारदाय च धीमते ।
सर्व्वप्रदस्तु सर्व्वेशः सर्व्वकारणकारणः ॥ २९ ॥
नारदेन कृतं स्तोत्रं [6]नित्यं यः प्रपठेत् शुचिः ।
हरिभक्तिर्भवेत्तस्य तन्नाम्नि गुणतो रुचिः ॥ ३० ॥
[7]दशवारजपेनैव स्तोत्रसिद्धिर्भवेन्नृणां ।
सर्व्वसिद्धिर्भवेत्तस्य सिद्धस्तोत्रो भवेद्यदि ॥ ३१ ॥
इह प्राप्नोति लक्ष्मीञ्च निश्चलां स्वचपौरुषीं ।
परिपूर्णमहैश्वर्य्यमन्ते याति हरेः पदं ॥ ३२ ॥
पुत्रं विशिष्टं लभते हरिभक्तं जितेन्द्रियं ।
सुसाध्वीं सुविनीतां तां सुव्रताञ्च पतिव्रतां ॥ ३३ ॥
प्रजां भूमिं यशः कीर्त्तिं विद्यां सकवितां लभेत् ।
प्रसूयते महावन्ध्या वर्षमेकं शृणोति चेत् ॥ ३४ ॥

---

[6] स्तौति M T

[7] दशसत्येति R

गलत्कोष्ठी महारोगी सद्यो रोगात् प्रमुच्यते ।
धनी महादरिद्रश्च कृपणः सत्यवान् भवेत् ॥
विपद्ग्रस्तो राजबद्धो मुच्यते नात्र संशयः ॥ ३५ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे प्रथमैकरात्रेऽष्टमोऽध्यायः ॥ ८ ॥

नवमोऽध्यायः ॥



श्रीव्यास उवाच ॥

वरं दत्वा महादेवो भक्त्या तं ब्राह्मणातिथिं ।
पूजां चकार वेदोक्तां स्वयं वेदविदां वरः ॥ १ ॥
भुक्त्वा पीत्वा मुनिश्रेष्ठो महादेवस्य मन्दिरे ।
तिष्ठन्नुपासनां चक्रे पार्व्वतीपरमेशयोः ॥ २ ॥
एकदा चिरकालान्ते तमुवाच महामुनिं ।
महादेवः सभामध्ये कृपया च कृपानिधिः ॥ ३ ॥

श्रीमहादेव उवाच ॥

किंवा ते वाञ्छितं वत्स ब्रूहि मां यदि रोचते ।
वरो दत्तः किमपरं यत्ते मनसि वर्त्तते ॥ ४ ॥
महादेववचः श्रुत्वा तमुवाच महामनिः ।
कैलासे च सभामध्ये यत्तन्मनसि वाञ्छितं ॥ ५ ॥

श्रीनारद उवाच ।

ज्ञानमाध्यात्मिकं नाम वेदसारं मनोहरं ।

हरिभक्तिप्रदं ज्ञानं मुक्तिदं ज्ञानमीप्सितं ॥ ६ ॥
योगयुक्तं च यज्ज्ञानं ज्ञानं यत्सिद्धिदं तथा ।
संसारविषयज्ञानमेव पञ्चविधं स्मृतं ॥ ७ ॥
आश्रमाणां समाचारं तेषां धर्मपरिष्कृतं ।
विधवानाञ्च भिक्षूणां यतीनां ब्रह्मचारिणां ॥ ८ ॥
पूजाविधानं कृष्णस्य तत्स्तोत्रं कवचं मनुं ।
पुरश्चर्याविधानञ्च सर्व्वाह्निकमभीप्सितं ॥ ९ ॥
जीवकर्मविपाकञ्च कर्ममूलनिकृन्तनं ।
संसारवासनां कां वा लक्षणं प्रकृतीशयोः ॥ १० ॥
तयोः परं वा किं वस्तु तस्यावतारवर्णनं ।
को वा तदंशः कः पूर्णः परिपूर्णतमश्च कः ॥ ११ ॥
नारायणर्षिकवचं सुभद्रप्रवराय च ।
यद्दत्तं किं तद्देवेश तदाराध्यं प्रयत्नतः ॥ १२ ॥
[1]मया ज्ञानमनापृष्टं यद्यदस्ति सुरोत्तम ।
तन्मे कथय तत्त्वेन मामेवानुग्रहं कुरु ॥ १३ ॥
गुरोश्च ज्ञानोक्तिरणात् ज्ञानं स्यान्मन्त्रतन्त्रयोः ।
तत्तन्त्रं स च मन्त्रः स्याद्यतो भक्तिरधोक्षजे ॥ १४ ॥
ज्ञानं स्याद्विदुषां किञ्चित् वेदव्याख्यानचिन्तया ।
स्वयं भवान् वेदकर्त्ता ज्ञानाधिष्ठातृदेवता ॥ १५ ॥
नारदस्य वचः श्रुत्वा सस्मितः पर्व्वतीपतिः ।

---

[1] मयाज्ञानादपृष्टं यत् T M

निरीक्ष्य पार्व्वतीवक्त्रं गजवक्त्रमुवाच सः ॥ १६ ॥

श्रीमहादेव उवाच ॥

अहो अनन्तदासानां माहात्म्यं परमाद्भुतं ।
कुर्व्वन्त्यहैतुकीं भक्तिं ये च मध्वद्विषः पदे ॥ १७ ॥
पद्मनाभपादपद्मं पद्मापाङ्गेश्वरार्च्चितं ।
दिवानिशं ये ध्यायन्ते शेषादिसुरवन्दितं ॥ १८ ॥
आलापं गात्रसंस्पर्शं पादरेणुमभीप्सितं ।
वाञ्छन्त्येव हि तीर्थानि वसुधाचात्मशुद्धये ॥ १९ ॥
कृष्णमन्त्रोपासकानां शुद्धं पादोदकं सुत[2] ।
पुनाति सर्वतीर्थानि वसुधामपि पार्व्वति ॥ २० ॥
कृष्णमन्त्रो द्विजमुखाद्यस्य कर्णं प्रयाति च ।
तं वैष्णवं जगत्पूतं प्रवदन्ति पुराविदः ॥ २१ ॥
मन्त्रग्रहणमात्रेण नरो नारायणात्मकः ।
पुनाति लीलामात्रेण पुरुषाणां शतं शतं ॥ २२ ॥
यज्जन्ममात्रात् पूतश्च तत्पितॄणां शतं शतं ।
प्रयाति सद्यो गोलोकं कर्मभोगात् प्रमुच्यते ॥ २३ ॥
मातामहादिकान् सप्त जन्ममात्रात् समुद्धरेत् ।
यत्कन्यां प्रतिगृह्णाति तस्य सप्तावलीलया ॥ २४ ॥
मातरं तत्प्रसूं भार्य्यां पुत्रांश्च[3] सप्तपूरुषं ।
भ्रातरं भगिनीं कन्यां कृष्णभक्तः समुद्धरेत् ॥ २५ ॥

---

[2] सुतं T.   [3] पुत्री च T. M.

स स्नातः सर्व्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
फलं स लेभे पूजानां व्रती सर्वव्रतेषु च ॥ २६ ॥
विष्णुमन्त्रं यो लभेच्च वैष्णवाच्च द्विजोत्तमात् ।
कोटिजन्मार्जितात् पापान्मुच्यते नात्र संशयः ॥ २७ ॥
कृष्णमन्त्रोपासकानां सद्यो दर्शनमात्रतः ।
शतजन्मार्जितात् पापान्मुच्यते नात्र संशयः ॥ २८ ॥
*वैष्णवाद्दर्शनेनैव स्पर्शनेन च पार्वति ।
सद्यः पूतं जलं वह्निर्जगत्पूतः समीरणः ॥ २९ ॥
दर्शनं वैष्णवानाञ्च देवा वाञ्छन्ति नित्यशः ।
न वैष्णवात् परः पूतो विश्वेषु निखिलेषु च ॥ ३० ॥
इत्युक्त्वा शङ्करः शीघ्रं नारदेन सहात्मजः ।
ययौ मन्दाकिनीतीरं नीरं क्षीरोपमं परं ॥ ३१ ॥
तत्र स्नातो महादेवो नारदश्च महामुनिः ।
समाचान्तः शुचिस्तत्र धृत्वा धौतेच वाससी ॥ ३२ ॥
कृष्णमन्त्रं ददौ तस्मै नारदाय महेश्वरः ।
परं कल्पतरुवरं सर्व्वसिद्धिप्रदं शुभं ॥ ३३ ॥
लक्ष्मीर्मायाकामबीजं ङेन्तं कृष्णपदं ततः ।
जगत्पतिप्रियान्तञ्च मन्त्रराजं प्रकीर्त्तितं ॥ ३४ ॥
मन्त्रं गृहीत्वा स मुनिः शिवं कृत्वा प्रदक्षिणं ।
सप्त वारान् नमस्कृत्य स्वात्मानं दक्षिणां ददौ ॥ ३५ ॥

---

* वैष्णवस्य ।

तत्पादपद्मे विक्रीतमाजन्म [5]मस्तकं परं ।
मुनिना भक्तियुक्तेन स्वर्गमन्दाकिनीतटे ॥ ३६ ॥
एतस्मिन्नन्तरे वत्स पुष्पवृष्टिर्बभूव ह ।
नारदोपरि तत्रैव सुश्राव दुन्दुभिं मुनिः ॥ ३७ ॥
ननर्त्त ब्रह्मणः पुत्रो ब्रह्मलोके निरामये ।
ब्रह्मा जगाम तत्रैव सुप्रसन्नश्च सस्मितः ॥ ३८ ॥
पुत्रं शुभाशिषं कृत्वा तुष्टाव चन्द्रशेखरं ।
शम्भुश्च पूजयामास ब्रह्माणमतिथिं तथा ॥
शम्भुं शुभाशिषं कृत्वा ब्रह्मलोकं ययौ विधिः ॥ ३९ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे प्रथमैकरात्रे नारदोपदेशप्रश्न नाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

---

श्रीशुक उवाच ।

नारदो हि महाज्ञानी देवर्षिर्ब्रह्मणः सुतः ।
सर्व्ववेदविदां श्रेष्ठो [1]गरिष्ठश्च वरिष्ठकः ॥ १ ॥
कथं स नोपदिष्टश्च ज्ञानहीनो महामुनिः ।
एतन्मां बोधय विभो सन्देहभञ्जनं कुरु ॥ २ ॥

---

[5] मस्तक T M
[1] गरिष्ठाना M T

श्रीव्यास उवाच ।

नारदो ब्रह्मणः पुत्रः पराकल्पे बभूव सः ।
*सर्व्वज्ञानं ददौ तस्मै विधाता जगतामपि ॥ ३ ॥
वेदांश्च पाठयामास वेदाङ्गानपि सुव्रत ।
सिद्धविद्यां शिल्पविद्यां योगशास्त्रं पुराणकं ॥ ४ ॥
भगवानेकदा पुत्रं कथयामास संसदि ।
सृष्टिं कुरु महाभाग कृत्वा•दारपरिग्रहं ॥ ५ ॥
ब्रह्मणश्च वचः श्रुत्वा कोपरक्तास्यलोचनः ।
उवाच पितरं कोपात् परं कृष्णपरायणः ॥ ६ ॥

श्रीनारद उवाच ।

सर्व्वेषामपि वन्द्यानां पिता चैव महागुरुः ।
ज्ञानदातुः परो वन्द्यो न भूतो न भविष्यति ॥ ७ ॥
स्तनदात्री गर्भधात्री स्नेहकर्त्री सदाम्बिका ।
जन्मदातान्नदाता स्यात् स्नेहकर्त्ता पिता सदा ॥ ८ ॥
न क्षमौ तौ च पितरौ पुत्रस्य कर्म खण्डितुं ।
करोति सद्गुरुः शिष्यकर्ममूलनिकृन्तनं ॥ ९ ॥
गुरुश्च ज्ञानोद्गिरणात् ज्ञानं स्यान्मन्त्रतन्त्रयोः ।
तत्तन्त्रं स च मन्त्रश्च कृष्णभक्तिर्यतो भवेत् ॥ १० ॥
श्रीकृष्णविमुखो भूत्वा विषये यस्य मानसं ।
विषमत्त्यमृतं त्यक्ता स च मूढो नराधमः ॥ ११ ॥

---

* सर्व M

स गुरुः स पिता बन्धुः सा माता स पतिः सुतः ।
यो ददाति हरौभक्तिं कर्ममूलनिकृन्तनीं ॥ १२ ॥
श्रीकृष्णभजनं तात सर्व्वमङ्गलमङ्गलं ।
कर्मोपभोगरोगाणामौषधं तन्निकृन्तनं ॥ १३ ॥
अहो जगद्विधातुश्च धर्मशास्तुरियं मतिः ।
स्वयं मायामोहितस्य परं भ्रष्टं करोति च ॥ १४ ॥
विष्णुस्त्वां मोहितं ज्ञात्वा युयोज स्रष्टुमीश्वरः ।
न ददौ स्वात्मभक्तिं तां स्वदास्यं चातिदुर्लभं ॥ १५ ॥
माता ददाति पुत्राय मोदकं क्षुन्निवारकं ।
स च बालो न जानाति कथं भूतश्च मोदकं ॥ १६ ॥
बालकं वञ्चनं कृत्वा मिष्टं द्रव्यं प्रदाय सः ।
पिता प्रयाति कार्य्यार्थं विष्णुना मोहितस्तथा ॥ १७ ॥
संसारकूपपतितो विष्णुना प्रेरितो भवान् ।
न युक्तं पतनं तत्र तदुद्धारमभीप्सितं ॥ १८ ॥
ज्ञानी गुरुश्च बलवान् भवाब्धे शिष्यमुद्धरेत् ।
गुरुः स्वयमसिद्धश्च दुर्बलः कथमुद्धरेत् ॥ १९ ॥
गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ २० ॥
स गुरुः परमो वैरी यो ददाति ह्यसन्मतिं ।
तं नमस्कृत्य सत्शिष्यः प्रयाति ज्ञानदं गुरुं ॥ २१ ॥
संसारविषयोन्मत्तो गुरुरार्त्तः स्वकर्मणि ।
दुर्ब्बलो दुर्वहं भारं ददाति जनकाय च ॥ २२ ॥

नारदस्य वचः श्रुत्वा क्रुद्धः पुत्त्रमुवाच सः ।
कम्पितः तमसा धाता कोपरक्तास्यलोचनः ॥ २३ ॥

ब्रह्मोवाच ॥

ज्ञानन्ते भवतु भ्रष्टं स्त्रीजितो भव पामर ।
सर्वजातिषु गन्धर्वः कामी सोऽपि भवान् भव ॥ २४ ॥
पञ्चाशत्कामिनीनाञ्च स्वयं भर्त्ता भवाचिरात् ।
तासां वशश्च सततं स्त्रीणां क्रीडामृगो यथा ॥ २५ ॥
शृङ्गारशूरो[3] भव रे शश्वत्सुस्थिरयौवनः ।
तासां नित्ययौवनानां सुन्दरीणां प्रियो भव ॥ २६ ॥
कामबाध्यो भव चिरं दिव्यवर्षसहस्रकं ।
निर्जने निर्जने रम्ये वने क्रीडां करिष्यसि ॥ २७ ॥
ततो वर्षसहस्रान्ते मया शप्तः स्वकर्मणा ।
विप्रदासात्तु शूद्रायां जनिष्यसि न संशयः ॥ २८ ॥
ततो वैष्णवसंसर्गात् विष्णोरुच्छिष्टभोजनात् ।
विष्णुमन्त्रप्रसादेन [4]विष्णुमायाविमोहितः ॥ २९ ॥
तातस्य वचनं श्रुत्वा चुकोप नारदो मुनिः ।
शशाप पितरं शीघ्रं दारुणञ्च यथोचितं ॥ ३० ॥
अपूज्यो भव दुष्ट त्वं त्वन्मन्त्रोपासकः कुतः ।
अगम्यागमनेच्छा ते भविष्यति न संशयः ॥ ३१ ॥
नारदस्य तु शापेन सोऽपूज्यो जगतां विधिः
दृष्ट्वा स्वकन्यारूपञ्च पश्चाद्धावितवान् पुरा ॥

---

[3] नभो T

[4] मत्पुत्रो भविता पुनरिति ॥

पुनः स्वदेहं तत्याज भर्त्सितः सनकादिभिः ।
लज्जितः कामयुक्तश्च पुनर्ब्रह्मा बभूव सः ॥ ३३ ॥
नारदस्तु नमस्कृत्य पितरं कमलोद्भवं ।
विप्रदेहं परित्यज्य गन्धर्व्वश्च बभूव सः ॥ ३४ ॥
नवयौवनकालेन बलवान् मदनोद्धतः ।
जहार कन्याः पञ्चशत् बलाच्चित्ररथस्य तु ॥ ३५ ॥
गान्धर्व्वेण विवाहेन ता उवाह च निर्जने ।
मूर्च्छां प्रापुश्च ताः कन्या दृष्ट्वा सुन्दरमीश्वरं ॥ ३६ ॥
विसस्मरुश्च पितरं मातरं भ्रातरं तथा ।
रेमिरे तेन सार्द्धञ्च कामुक्यः कामुकेन च ॥ ३७ ॥
कन्दरे कन्दरे रम्ये रम्ये सुन्दरमन्दिरे ।
शैले शैले सुरहसि कानने कामने तथा ॥ ३८ ॥
पुष्पोद्याने तरूद्याने नद्यां नद्यां नदे नदे ।
सरःश्रेष्ठे सरःश्रेष्ठे वरे चन्द्रसरोवरे ॥ ३९ ॥
सुरेशस्यापि निकटे सुभद्रस्य तटे तटे ।
अगम्ये च महाघोरे गन्धमादनगह्वरे ॥ ४० ॥
पारिजाततरूणाञ्च पुष्पितानां मनोहरे ।
तदन्तरे सुन्दरे चामोदिते पुष्पवायुना ॥ ४१ ॥
मलये निलये रम्ये सुगन्धे चन्दनान्विते ।
चन्दनोचितसर्व्वाङ्गश्चन्दनाक्तेन कामिना ॥ ४२ ॥
रम्यचम्पकशय्यासु चन्दनाक्तासु सस्मिताः ।
दिवानिशं न जानन्ति कामिना सुस्मितेन च ॥ ४३ ॥

विस्यन्दके शूरसेने[5] नन्दने पुष्पभद्रके।
स्वाहावने कान्यके च रम्यके पारिभद्रके ॥ ४४ ॥
[6]सुरन्धके गन्धके च सुरभ्रे पुण्डकेऽपि च ।
कालञ्जरे पञ्चरे च काञ्चीकाञ्चनकानने ॥ ४५ ॥
मधुमाधवमासे च मधुरे मधुकानने ।
वने कल्पतरूणाञ्च विश्वकारुकृतस्थले ॥ ४६ ॥
रत्नाकराणां निकरे सुन्दरे सुन्दरान्तरे ।
सुवेले च सुपार्श्वे च प्रवालाङ्कुरकानने ॥ ४७ ॥
मन्दारे मन्दिरे पूरे गान्धारे च युगन्धरे ।
वने केलिकदम्बानां केतकीनां मनोहरे ॥ ४८ ॥
माधवीमालतीनाञ्च यूथिकानां वने वने ।
चम्पकानां पलाशानां कुन्दानां विपिने तथा ॥ ४९ ॥
नागेश्वरलवङ्गनामन्तरे ललितालये ।
कुमुदानां पङ्कजानां पङ्किले कोमलस्थले ॥ ५० ॥
[7]स्थलपद्मप्रकाशे च भूमिचम्पककानने ।
लाङ्गलीनां रसालानां पनसानां सुखप्रदे ॥ ५१ ॥
कदलीबदरीणाञ्च श्रीफलानाञ्च श्रीयुते ।
जम्बीराणाञ्च जम्बूनां करञ्जानां तथैव च ॥ ५२ ॥
कृत्वा विहारं ताभिश्च गन्धर्व्वश्चोपबर्हणः ।
दिव्यं वर्षसहस्रञ्च स्वाश्रमं पुनराययौ ॥ ५३ ॥

[5] सुवसने M. T. [6] गन्धके च सुरभ्रेच M. T.
[7] स्थलपद्मप्रकाशान्ते R. T. M

श्रुत्वा विधातुराह्वानं[*] पुष्करञ्च ययौ पुनः ।
ददर्श तत्र ब्रह्माणं रत्नसिंहासनस्थितं ॥ ५४ ॥
देवेन्द्रैश्चापि सिद्धेन्द्रैर्मुनीन्द्रैः सनकादिभिः ।
समावृतं सभायाञ्च रक्षोगन्धर्व्वकिन्नरैः ॥ ५५ ॥
सुशोभितं यथा चन्द्रं गगणे भगनैः सह ।
प्रणनाम सभामध्ये ताभिः सार्द्धं जगद्विधिं ॥ ५६ ॥
महेशञ्च गणेशञ्च धनेशं शेषमीश्वरं ।
धर्मं धन्वन्तरिं स्कन्दं सूर्य्यसोमहुताशनं ॥ ५७ ॥
उपेन्द्रेन्द्रं विश्वकारं वरुणं पवनं स्मरं ।
यममष्टौ वसून् रुद्रान् जयन्तं नलकूवरं ॥ ५८ ॥
सर्व्वान् देवान् नमस्कृत्य ननाम मुनिपुङ्गवं ।
अगस्त्यञ्च पुलस्त्यञ्च पुलहञ्च प्रचेतसं ॥ ५९ ॥
सर्व्वश्रेष्ठं वशिष्ठञ्च दक्षञ्च कर्द्दमं तथा ।
सनकञ्च सनन्दञ्च तृतीयञ्च सनातनं ॥ ६० ॥
सनत्कुमारं योगीशं ज्ञानिनाञ्च गुरोर्गुरुं ।
वोढुं पञ्चशिखं गर्गं भृगुमङ्गिरसं तथा ॥ ६१ ॥
आसुरिं कपिलं कौत्सं कतुं नारायणं नरं ।
मरीचिं कश्यपं कण्वं व्यासं दुर्व्वाससं कविं ॥ ६२ ॥
बृहस्पतिञ्च च्यवनं मार्कण्डेयञ्च लोमशं ।
वाल्मीकिं परशुरामञ्च सम्वर्त्तञ्च विभाण्डकं ॥ ६३ ॥

[*] स्वर्गं वा । T

देवलञ्च वामदेवञ्च्यष्यशृङ्गं पराशरं ।
एतान् सर्व्वान् नमस्कृत्य तस्थौ स पुरतो विधेः ॥ ६४ ॥
तुष्टाव सर्व्वान् देवांश्च मुनीन्द्रांश्च तथैव च ।
तमुवाच सभामध्ये विधाता जगतामपि ॥
सस्मितः सुप्रसन्नश्च गन्धर्व्वमुपबर्हणं ॥ ६५ ॥

ब्रह्मोवाच ।

श्रीष्वप्सरससंगीतं वीणाध्वनिसमन्वितं* ।
कुरु वत्साधुनाचैव शृण्वन्तु मुनयःसुराः ॥ ६६ ॥
गोपीनां वस्त्रहरणं परं रासमहत्सवं ।
ताभिः सार्द्धं जलक्रीडां हरेस्त्कीर्त्तनं कुरु ॥ ६७ ॥
कृष्णसंकीर्त्तनं तूर्णं पुनाति श्रुतिमात्रतः ।
श्रोतारञ्च प्रवक्तारं पुरुषैः सप्तभिः सह ॥ ६८ ॥
यत्रैव प्रभवेद्दास तन्नामगुणकीर्त्तनं ।
तत्र सर्व्वाणि तीर्थानि पुण्यानि मङ्गलानि च ॥ ६९ ॥
तत्कीर्त्तनध्वनिं श्रुत्वा सर्व्वाणि पातकानि च ।
दूरादेव पलायन्ते वैनतेयमिवोरगाः ॥ ७० ॥
तद्दिनं सफलं धन्यं यशस्यं सर्व्वमङ्गलं ।
श्रीकृष्णकीर्त्तनं यत्र तत्रैव नायुषो व्ययः ॥ ७१ ॥
संकीर्त्तनध्वनिं श्रुत्वा ये च नृत्यन्ति वैष्णवाः ।
तेषां पादरजःस्पर्शात् सद्यःपूता वसुन्धरा ॥ ७२ ॥

---

* विनादित T. M

तत्कीर्त्तनं भवेद्यत्र कृष्णस्य परमात्मनः ।
स्थानं तच्च भवेत्तीर्थं मृतानां तत्र मुक्तिदं ॥ ७३ ॥
नात्र पापानि तिष्ठन्ति पुण्यानि सुस्थिराणि च ।
तपस्विनाञ्च व्रतिनां व्रतानां तपसां स्थलं ॥ ७४ ॥
वर्त्तते पापिनां देहे पापानि त्रिविधानि च ।
महापापोपपापातिपापान्येव स्मृतानि च ॥ ७५ ॥
हन्ता यो विप्रभिक्षूणां यतीनां ब्रह्मचारिणां ।
स्त्रीणाञ्च वैष्णवानाञ्च स महापातकी स्मृतः ॥ ७६ ॥
भ्रूणघ्नश्चापि गोघ्नश्च शूद्रघ्नश्च कृतघ्नकः ।
विश्वासघाती विड्भोजी स एव ह्युपपातकी ॥ ७७ ॥
अगम्यागामिनो ये च सर्वविप्रस्वहारिणः ।
अतिपातकिनश्चैते वेदविद्भिः प्रकीर्त्तिताः ॥ ७८ ॥
कृष्णसंकीर्त्तनध्यानात्तन्मन्त्रग्रहणाद्धरौ ।
मुच्यन्ते पातकैस्तैस्ते पापिनस्त्रिविधाः स्मृताः ॥ ७९ ॥
तपोयज्ञकृती पूतस्तीर्थ[10]स्नातव्रती तथा ।
भिक्षुर्यती ब्रह्मचारी वाणप्रस्थश्च तापसः ॥ ८० ॥
पवित्रः परमो वह्निः सुपवित्रं जलं तथा ।
एते सर्व्वे वैष्णवानां कलां नार्हन्ति षोडशीं ॥ ८१ ॥
विष्णुपादोदकोच्छिष्टं भुञ्जते ये च नित्यशः ।
पश्यन्ति च शिलाचक्रं पूजां कुर्व्वन्ति नित्यशः ॥ ८२ ॥

---

[10] तीर्थयायी ॥

जीवन्मुक्ताश्च ते धन्या हरिदासाश्च भारते ।
पदे पदेऽश्वमेधस्य प्राप्नुवन्ति फलं ध्रुवं ॥ ८३ ॥
नहि तेषां पराभूताः पुण्यवन्तो जगत्त्रये ।
तेषाञ्च पादरजसा तीर्थं पूतं तथा धरा ॥ ८४ ॥
तेषाञ्च दर्शनं स्पर्शं वाञ्छन्ति मुनयः सुराः ।
पुरुषाणां सहस्रञ्च पूतं तज्जन्ममात्रतः ॥ ८५ ॥
इत्युक्त्वा जगतां धाता तत्र तूष्णीं बभूव सः ।
आश्चर्यं मेनिरे श्रुत्वा देवाश्च मुनयस्तथा ॥ ८६ ॥
एतस्मिन्नन्तरे तत्र विद्याधर्य्यः समागताः ।
गन्धर्व्वाश्चापि विविधा [11]नन्नृतुः किन्नरा जगुः ॥ ८७ ॥
रम्भोर्व्वशी घृताची च मेनका च तिलोत्तमा ।
सुधामुखी पूर्णचित्ती मोहनी कलिका तथा ॥ ८८ ॥
चम्पावती चन्द्रमुखी पद्मा पद्ममुखीति च ।
एताश्चान्याश्च [12]वल्लाय स्वश्वत्सुस्थिरयौवनाः ॥ ८९ ॥
वृहन्नितम्बश्रोणीकास्तनभारैः समानताः ।
ईषद्धास्याः प्रसन्नास्याः कामार्त्ताश्च समाययुः ॥ ९० ॥
[13]वेदज्ञा मूर्त्तिमन्तश्च वेदाश्चत्वार एव च ।
ब्राह्मणा भिक्षवः सिद्धा यतयो ब्रह्मचारिणः ॥ ९१ ॥
समाययुस्तथा मन्दा दैवज्ञाः स्तुतिपाठकाः ।
लक्ष्मी सरस्वती दुर्गा सावित्री रोहिणी रतिः ॥ ९२ ॥

---

[11] ननृतुश्च मटोत्तमा R	[12] बहव T M

[13] वेदाङ्गा इति R M

तुलसी पृथिवी गङ्गा स्वाहा च यमुना तथा ।
वारुणी मनसेन्द्राणी ताः सर्व्वा देवयोषितः ॥ ९३ ॥
मुनिपत्न्यश्च गन्धर्व्वो हर्षयुक्ताः समाययुः ।
अहो महोत्सवं द्रष्टुं परमानन्दमानसाः ॥
विरिञ्चाञ्च ब्रह्मसभां पुष्करं तीर्थमाययुः ॥ ९४ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे प्रथमैकरात्रे महोत्सवारम्भो नाम दशमोऽध्यायः । १० ।

---

## एकादशोऽध्याय ॥

श्रीव्यास उवाच ॥

अथ गन्धर्व्वराजस्तु भगवानाज्ञया विधेः ।
सङ्गीतञ्च जगौ तत्र कृष्णरासमहोत्सवं ॥ १ ॥
सुयमं तालमानञ्च [1]सुतानं मधुरं श्रुतं ।
वीणामृदङ्गमुरजयुतं ध्वनिसमन्वितं ॥ २ ॥
रागिणीयुक्तरागेण समयोक्तेन सुन्दरं ।
माधुर्य्यं मूर्छनायुक्तं मनसो हर्षकारणं ॥ ३ ॥
विचित्रं नृत्यरुचिरं रूपवेशमनुत्तमं ।
लोकानुरागवीजञ्च नाद्योपयुक्तहस्तकं ॥ ४ ॥

---

[1] सुतानैः । ५ ।

दृष्ट्वा श्रुत्वा सुराः सर्व्वे मुनयः सर्व्वयोषितः ।
मूर्च्छां प्रापुश्च सहसा चेतनाञ्च पुनः पुनः ॥ ५ ॥
गोपीनां वस्त्रहरणं गोपीगणविलापनं ।
ताभ्यो वस्त्रप्रदानञ्च सम्मानं वरदानकं ॥ ६ ॥
कात्यायनीव्रतञ्चापि विप्रदारान्नभोजनं ।
महेन्द्रदर्पपूजादिभञ्जनं गैलेपूजनं ॥ ७ ॥
पुनश्च शुश्रुवुः सर्व्वे श्रीवृन्दावनवर्णनं ।
सम्प्रापुश्च पुनर्मूर्च्छां पुनः प्रापुश्च चेतनां ॥ ८ ॥
तस्मै ददौ पुरो ब्रह्मा वह्निशुद्धांशुकं परं ।
परं शुभाशीर्व्वचनं यत्तन्मालसवाञ्छितं[2] ॥ ९ ॥
अमूल्यरत्ननिर्म्माणं चारुकुण्डलयुग्मकं ।
मणीन्द्रसारमुकुटं परं रत्नाङ्गुरीयकं ॥ १० ॥
सुगन्धि चन्दनं पुष्पं स्वपादरेणुमीप्सितं ।
अमूल्यरत्न[3]तिलकं रत्नभूषणमुज्ज्वलं ॥ ११ ॥
प्रत्येक वस्तु रुचिरं तथोपिद्भ्रश्च संददौ ।
विश्वकर्मा च निर्माणमणिं भूषणमुत्तमं ॥ १२ ॥
प्रत्येकं शङ्खसिन्दूरं कस्तूरीयुक्तचन्दनं ।
सकर्पूरञ्च ताम्बुलं रत्नेन्द्रसारदर्पणं ॥ १३ ॥
मणिनिर्माणमञ्जीरं श्वेतचामरशोभनं ।
मनोयायि रथं दिव्यं ईश्वरेच्छाविनिर्मितं ॥ १४ ॥

---

[2] रञ्जित T U    [3] सद्यश्चेति R

मुक्तामाणिक्यहीरेन्द्रैर्मणीन्द्रैश्च परिष्कृतं।
सद्रत्नमालाजालैश्च श्वेतचामरदर्पणैः ॥ १५ ॥
सुशोभितञ्च परितो लक्षैः सुन्दरमन्दिरैः।
मणिमाणिक्यहीराढ्यं सद्रत्नकलसोज्ज्वलं ॥ १६ ॥
सहस्रचक्रसंसक्तं योजनायतसम्मितं।
धनुर्लक्षोच्छ्रितञ्चैव सहस्राश्वेन योजितं ॥ १७ ॥
एतदेव ददौ ब्रह्मा प्रहृष्टस्तुष्ट एव च।
शम्भुस्तुष्टो ददौ हृष्टो हरिभक्तिञ्च *निश्चलां ॥ १८ ॥
ज्ञानमाध्यात्मिकञ्चैव योगज्ञानं सुदुर्लभं।
नानाजन्मस्मृतिज्ञानं नैपुण्यं सर्व्वसिद्धिषु ॥ १९ ॥
हरेर्च्चाविधानञ्च स्तवनं पूजनं तथा।
माणिक्यहीराहारञ्च रत्नवर्यं सुदुर्लभं ॥ २० ॥
नागहारं ददौ शेषो नागेन्द्रमौलिमण्डनं।
नागकन्याशतञ्चैव वरभूषणभूषितं ॥ २१ ॥
नागेभ्यश्चाभयं नित्यं हिंस्रजन्तुभ्य एव च।
°नृपालयगतिज्ञानं सर्व्वलोकविलोकनं ॥ २२ ॥
निर्विघ्नत्वं ददौ तस्मै विघ्नराजश्च संसदि।
सुदुर्लभं पादपद्मयुग्मरेणुमभीप्सितं ॥ २३ ॥
अमूल्यञ्च निरुपमं ग्रीष्मसूर्य्यप्रभोपमं।
मणिराजं सुदीप्तञ्च त्रिषु लोकेषु दुर्लभं ॥ २४ ॥

---

* निर्म्मलां P  ° नागालयेति R.

सर्व्वत्र विजयश्चैव वाञ्छितं निर्मलं यशः ।
सङ्गीतविद्याविज्ञानं तन्नैपुख्यं मनोरमं ॥ २५ ॥
लक्षस्वर्णं धनेशश्च दासानाञ्च शतं शतं ।
धर्मकीर्त्तिमयीं मालां ⁶स्कन्दो धैर्य्यं ददौ तथा ॥ २६ ॥
विषजीर्णापहरणं ददौ धन्वन्तरिर्मनुं ।
सूर्य्यः स्यमन्तकमणिं स्वर्णभाराष्टकाप्रदं ॥ २७ ॥
चन्द्रः श्वेताम्बरन्तच्च ह्यमूल्यमुत्तमं ददौ ।
वह्निशुद्धांशुकयुगं ददौ वह्निश्च संसदि ॥ २८ ॥
उपेन्द्रो रत्नकोटिञ्च तदेवेन्द्रो ददौ पुरा ।
वीणाशिल्पं विश्वकर्मा वरुणश्च मणिस्रजं ॥ २९ ॥
स्मरः शृङ्गारनैपुख्यं वीर्य्यस्तम्भनमेव च ।
कामसन्दीपनं ज्ञानं कामिनीप्रेममूर्छनं ॥ ३० ॥
कामिनीवशगं शिल्पं रतितत्त्वं ददौ तथा ।
पापदाहनमन्त्रञ्च रत्नछत्रं समीरणः ॥ ३१ ॥
यमश्च धर्मतत्त्वञ्च⁷ नरकत्राणकारणं ।
वसवश्च वसून् दिव्यान् रुद्रस्तेभ्योऽभयं ददौ ॥ ३२ ॥
मधुपात्रं सुधापात्रं जयन्तो नलकूवरः ।
शुक्लपुष्पं शुक्लधान्यं पादरेणुमभीप्सितं ॥ ३३ ॥
मनोभिरामं मुनयो ददौ तस्मै शुभाशिषं ।
लक्ष्मीश्च परमैश्वर्य्यं भारती हारमुत्तमं ॥ ३४ ॥

---

⁶ स्कन्दः शौर्य्यमिति P ⁷ रत्नञ्च M·

रत्नमालां ददौ दुर्गा सर्व्वाभयमीप्सितं ।
तत्पत्नीभ्यश्च रत्नानि सिन्दूराभरणानि च ॥ ३५ ॥
क्रीडापद्मं रोहिणी च रतिः सद्रत्नदर्पणं ।
तुलसी चातुलं माल्यं दिव्यं वसु वसुन्धरा ॥ ३६ ॥
गङ्गा च विपुलं पुण्यं स्वाहा सद्रत्नपासकं ।
यमुना जलजं पद्ममम्लानं सार्व्वकालिकं ॥ ३७ ॥
वारुणीं वारुणी तुष्टा रत्नपात्रं शची ददौ ।
मनसा प्रददौ तस्मै नागानां मौलिमण्डनं ॥ ३८ ॥
गन्धर्व्वाश्चापि तत्पत्न्यः स्वशिल्पं प्रददुस्तथा ।
परमानन्दयुक्ताश्च मुनिपत्न्यः शुभाशिषं ॥ ३९ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे प्रथमैकरात्रे महोत्सवदर्शनं नाम एकादशोऽध्याय ॥ ११ ॥

---

द्वादशोऽध्यायः ।

शुक उवाच ।

महोत्सवे सुनिष्पन्ने दानस्योत्तरकालतः ।
किं बभूव रहस्यञ्च तन्मां व्याख्यातुमर्हसि ॥ १ ॥

श्रीव्यास उवाच ।

संप्राप्य दानं देवानां गन्धर्व्वश्चोपवर्हणः ।
तेषाञ्च पुरतो भक्त्या [1]विद्यामास वै तदा ॥ २ ॥

---

[1] विदायच चकार स इति P R

श्रुत्वा तद्वचनं ब्रह्मा तमुवाच च संसदि ।
शम्भुनाच [2]समालोच्य विधाता जगतामपि ॥ ३ ॥

ब्रह्मोवाच ॥

मथुरागमनञ्चैव कृष्णस्य परमात्मनः ।
विलापं गोपगोपीनां श्रावयास्मांश्च साम्प्रतं ॥ ४ ॥
महोत्सवं कुरु पुनः शृण्वन्तु मुनयः सुराः ।
गायन्तु ताश्च संगीतं नृत्यन्त्वप्सरसां गणाः ॥ ५ ॥
ब्रह्मणश्च वचः श्रुत्वा नन्दतुश्चाप्सरोगणाः ।
चक्रुस्ताः सरसं गीतं विद्याधर्य्यश्च संसदि ॥ ६ ॥
[3]गायिनाञ्चैव प्रवरो गन्धर्व्वश्चोपवर्हणः ।
जगौ [4]सन्धानभावेन मथुरागमनं हरेः ॥ ७ ॥
विलापं [5]गोकुलस्थानां श्रुत्वा विप्राः सुरादयः ।
मूर्च्छां प्रापुश्च रुरुदुर्द्दु[6]र्हानं पुनः पुनः ॥ ८ ॥
गोपीनां विरहालापैर्मुर्च्छितश्चोपवर्हणः ।
विस्तरेण वितानात्तु तालभङ्गो बभूव ह ॥ ९ ॥
तत्तालभङ्गं विज्ञाय देवाश्च मुनयस्तथा ।
चुकुपुः सहसा सर्व्वे निर्गतास्तन्मुखाग्नयः ॥ १० ॥
तद्दृष्ट्वा सहसा भीतो गन्धर्व्वश्चोपवर्हणः ।
सस्मार कृष्णं स्वाभीष्टं परमात्मानमीश्वरं ॥ ११ ॥

---

[2] सर्व्वेषाञ्च समालोच्य पाठान्तर ।
[3] गायकानाञ्चेति R
[4] सन्धानतालेनेति H
[5] गोपगोपीनामिति R
[6] ध्यानमिति P

ददर्श स्मृतिमात्रेण तत्तेजो नभसि स्थितं ।
स्तम्भिता देवताः सर्व्वाश्चित्रपुत्तलिका यथा ॥ १२ ॥
स्तम्भिता वह्नयः सर्व्वे मुनयश्च विजृम्भिताः ।
हरिस्मृतिश्चाभयदा शुभदा विघ्ननाशिनी ॥ १३ ॥
ददृशुर्द्देवताः सर्व्वा मुनयश्चापि योषितः ।
गन्धर्व्वाश्च तथैवान्ये तेजो दृश्यं सुखप्रदं ॥ १४ ॥
परं कुज्झटिकाकारं कोटीन्दुकिरणप्रभं ।
योजनायतविस्तीर्णं सुस्निग्धं सुमनोहरं ॥ १५ ॥
तत्तेजोऽभ्यन्तरे सर्व्वे ददृशूरथमुत्तमं ।
गव्यूतिमान विस्तीर्णं धनुष्कोटिसमुच्छ्रितं ॥ १६ ॥
श्वेताश्वानाञ्च चक्राणां सहस्रेण समावृतं ।
अमूल्यरत्नरचितमीश्वरेच्छाविनिर्मितं ॥ १७ ॥
नानाचित्रविचित्राढ्यं मनोयायि मनोहरं ।
मुक्तामाणिक्यपरमहीराहारैर्व्विराजितं ॥ १८ ॥
रत्नदर्पणलक्षैश्च विलक्षैः श्वेतचामरैः ।
वह्निशुद्धांशुकानाञ्च विलक्षैः परिशोभितं ॥ १९ ॥
त्रिकोटिभिश्च ज्वलितं क्रीडासुन्दरमन्दिरैः ।
पारिजातप्रसूनानां मन्दाराणां मनोहरैः ॥ २० ॥
मालाजालैस्त्रिलक्षैश्च मालतीनाञ्च मण्डितं ।
एवम्भूतं रथं दृष्ट्वा ददृशुस्ते तदन्तरे ॥ २१ ॥
मध्यकोष्ठाभ्यन्तरे च किशोरं श्यामसुन्दरं ।
वह्निशुद्धांशुकेनैव पीतवर्णेन शोभितं ॥ २२ ॥

रत्नकेयूरवलयरत्नमञ्जीररञ्जितं ।
रत्नकुण्डलयुग्मेन गण्डस्थल[1]समुज्ज्वलं ॥ २३ ॥
ईषद्धास्यप्रसन्नास्यं नित्योपास्यं सुरासुरैः ।
चन्दनोक्षितसर्व्वाङ्गं मालतीमाल्यमण्डितं ॥ २४ ॥
मणिना कौस्तुभेन्द्रेण गण्डस्थलविभूषितं[2] ।
परं प्रधानं परमं परमात्मानमीश्वरं ॥ २५ ॥
स्तुतं ब्रह्मेशशेषैश्च राधावक्षःस्थलस्थितं ।
वेदानिर्व्वचनीयञ्च स्वेच्छामयमनीश्वरं ॥ २६ ॥
नित्यं सत्यं निर्गुणञ्च ज्योतीरूपं सनातनं ।
प्रकृतेः परमीशानं भक्तानुग्रहकातरं ॥ २७ ॥
कोटिकन्दर्पलावण्यलीलाधाममनोहरं ।
मयूरपुच्छचूडञ्च वरं वंशीधरं परं ॥ २८ ॥
दृष्ट्वा तमद्भुतं रूपं तुष्टाव कमलोद्भवः ।
गणेशः शेषः शम्भुश्च तदन्ये मुनयः सुराः ॥ २९ ॥

ब्रह्मोवाच ।

परं ब्रह्म परं धाम परमात्मानमीश्वरं ।
वन्दे वन्द्यञ्च सर्व्वेषां सर्व्वकारणकारणं ॥ ३० ॥
सर्व्वेश्वरं सर्व्वरूपं सर्व्वाद्यं सद्भिरीडितं ।
वेदावेद्यञ्च विद्वद्भिर्न दृष्टं [3]स्वप्नगोचरं ॥ ३१ ॥

---

[1] विभूषितमिति P. [2] विभूषित T.
[3] श्रुतिगोचरे इति B.

श्रीमहादेव उवाच ।

सिद्धस्वरूपं सिद्धाद्यं सिद्धबीजं सनातनं ।
प्रसिद्धं सिद्धिदं शान्तं सिद्धानाञ्च गुरोर्गुरुं ॥ ३२ ॥
वन्दे वन्द्यञ्च महतां परात्परतरं विभुं ।
स्वात्मारामं पूर्णकामं भक्तानुग्रहकातरं ॥ ३३ ॥
भक्तप्रियञ्च भक्तेशं स्वभक्तिदास्यदं परं ।
स्वपदप्रदमेकञ्च दातारं सर्व्वसम्पदां ॥ ३४ ॥

अनन्त उवाच ।

वक्राणाञ्च सहस्रेण किं वा स्तौमि [10]श्रुतिश्रुतं ।
कोटिभिः कोटिभिर्वक्त्रैः को वा स्तोतुं क्षमः प्रभो ॥ ३५ ॥
किमु स्तोष्यति शम्भुश्च पञ्चवक्त्रेण वाञ्छितं ।
कर्त्ता चतुर्णां वेदानां किं स्तोष्यति चतुर्मुखः ॥ ३६ ॥
षड्वक्त्रो गजवक्त्रश्च देवाश्च मुनयोऽपि वा ।
वेदा वा किं वेदविदः स्तुवन्ति प्रकृतेः परं ॥ ३७ ॥
वेदानिर्व्वचनीयञ्च वेदा निर्व्वक्तुमक्षमाः ।
वेदविज्ञातवाक्येन विद्वांसः किं स्तुवन्ति तं ॥ ३८ ॥

श्रीगणेश उवाच ।

मूर्खो वदति विष्णाय बुधो वदति विष्णवे ।
नम इत्येवमर्थञ्च द्वयोरेव समं फलं ॥ ३९ ॥
यस्मै दत्तञ्च यज्ज्ञानं ज्ञानदाता हरिः स्वयं ।

---

[10] वेदाद्ध्य इति T.

ज्ञानेन तेन स स्तौति भावग्राही जनार्द्दनः ॥ ४० ॥
एकवक्त्रोऽनेकवक्त्रो मूर्खो विद्वान् स्वकर्मणा ।
अधनी च धनी वापि सपुच्चो वाप्यपुच्चकः ॥ ४१ ॥
कर्मणां परमीशञ्च स्तोतुं को वाप्यनुत्तमं ।
यथाशक्ति स्तुतिः पूजा वन्दनं स्मरणं हरेः ॥ ४२ ॥
संकीर्त्तनञ्च भजनं जपनं वुद्ध्यनुक्रमं ।
कुर्व्वन्ति सन्तोऽसन्तश्च सन्ततं परमात्मनः ॥ ४३ ॥

कार्त्तिकेय उवाच ।

सर्व्वान्तरात्मा भगवान् ज्ञानञ्च सर्व्वजीविनां ।
ज्ञानानुरूपं स्तवनं सन्तो नैवहसन्ति तं ॥ ४४ ॥
भवेषु त्रिविधो लोकोऽप्युत्तमो मध्यमोऽधमः ।
सर्व्वे स्वकर्मवशगा निषेकः केन वार्य्यते ॥ ४५ ॥
सर्व्वेश्वरञ्च संवीक्ष्य सर्व्वो वदति मत्प्रभुं ।
मदीश्वरस्य समता सर्व्वेषु किङ्करेषु च ॥ ४६ ॥
भजन्ति केचित् शुद्धान्तं परमात्मानमीश्वरं ।
केचित्तदंशमंशांशं प्राप्नुवन्ति क्रमेण तं ॥ ४७ ॥

धर्म्म उवाच ।

अहं साक्षी च सर्व्वेषां विधिना निर्म्मितः पुरा ।
विधातुश्च विधाता त्वं सर्व्वेश्वर नमोऽस्तु ते ॥ ४८ ॥

देवा ऊचुः ।

यं स्तोतुमसमर्थश्च सहस्रायुः स्वयं विधिः ।
ज्ञानाधिदेवः शम्भुश्च तं स्तोतुं किं वयं क्षमः ॥ ४९ ॥

वेदा ऊचुः ॥

किं जानीमो वयं के वाप्यनन्तेशस्य यो गुणः ।
वयं वेदास्त्वमस्माकं कारणस्यापि कारकः ॥ ५० ॥

मुनय ऊचुः ॥

यदि वेदा न जानन्ति माहात्म्यं परमात्मनः ।
[11]न जानीमस्तव गुणं वेदानुसारिणो वयं ॥ ५१ ॥

सरस्वत्युवाच ।

विद्याधिदेवताहञ्च वेदा विद्याधिदेवकाः ।
वेदाधिदेवो धाता च तदीशं स्तौमि किं प्रभो ॥ ५२ ॥

पद्मोवाच ।

यत्पादपद्मं पद्मेशः शेषाद्यान्ये सुरास्तथा ।
ध्यायन्ते मुनयो देवा ध्याये तं प्रकृतेः परं ॥ ५३ ॥

सावित्र्युवाच ॥

सावित्री वेदमाताहं वेदानां जनको विधिः ।
त्वामेव धत्ते धातारं नमामि त्रिगुणात् परं ॥ ५४ ॥

श्रीपार्वत्युवाच ।

तव वक्षसि राधाहं रासे वृन्दावने वने ।
महालक्ष्मीश्च वैकुण्ठे पादपद्मार्च्चने रता ॥ ५५ ॥
श्वेतद्वीपे सिन्धुकन्या विष्णोरुरसि भूतले ।
ब्रह्मलोके च ब्रह्माणी वेदमाता च भारती ॥ ५६ ॥

---

[11] किं जानीम इति P. ॥

तवाज्ञया च देवानामाविर्भूता च तेजसि।
निहत्य दैत्यान् देवारीन् दत्वा राज्यं सुराय च ॥ ५७ ॥
तत्पश्चाद्दक्षकन्याहमधुना पार्व्वती हरे।
तवाज्ञया हरक्रोडे लङ्घ्नता प्रतिजन्मनि ॥ ५८ ॥
नारायणप्रिया शश्वत्तेन नारायणी श्रुतौ।
विष्णोरहं पराशक्तिर्व्विष्णुमाया च वैष्णवी ॥ ५९ ॥
अनन्तकोटि ब्रह्माण्डं मया सम्मोहितं सदा।
विदुषां रसनाग्रे च प्रत्यक्षं हि सरस्वती ॥ ६० ॥
महाविष्णोश्च माताहं विश्वानि यस्य लोमसु।
रासेश्वरी च सर्व्वाद्या सर्वशक्तिस्वरूपिणी ॥ ६१ ॥
तद्रासे[12]धारणाद्राधा विद्वद्भिः परिकीर्त्तिता।
परमानन्दपादाब्जं वन्दे सानन्दपूर्वकं ॥ ६२ ॥
यत्पादपद्मं ध्यायन्ते परमानन्दकारणं।
पाद्मपद्मेशशेषाद्या मुनयो मनवः सुराः ॥ ६३ ॥
योगिनः सन्ततं सन्तः सिद्धाश्च वैष्णवास्तथा।
अनुग्रहं कुरु विभो बुद्धिशक्तिरहं तव ॥ ६४ ॥
इति सर्वकृतं स्तोत्रं यः पठेत् सयतः शुचिः।
इहैव च सुखं भुंक्ते यात्यन्ते श्रीहरेः पदं ॥ ६५ ॥
निवृत्तेषु च देवेषु देवीषु मुनिपुङ्गवे।
उपवर्हणगन्धर्वः स्तुतिं कर्त्तुं समुद्यतः ॥ ६६ ॥

---

[12] धारणादित्यस्य स्थाने राधनादिति सम्भवितुमर्हति।

गन्धर्व उवाच ।

वन्दे नवघनश्यामं पीतकौषेयवाससं ।
सानन्दं सुन्दरं शुद्धं श्रीकृष्णं प्रकृतेः परं ॥ ६७ ॥
राधेशं राधिकाप्राणवल्लभं वल्लवीसुतं ।
राधासेवितपादाब्जं राधावक्षःस्थलस्थितं ॥ ६८ ॥
राधानुगं राधिकेष्टं राधापहृतमानसं ।
राधाधारं भवाधारं सर्वाधारं नमामि तं ॥ ६९ ॥
राधाहृत्पद्ममध्ये च वसन्तं सन्ततं शुभं ।
राधासहचरं शश्वत् राधाज्ञापरिपालकं ॥ ७० ॥
ध्यायन्ते योगिनो योगात् सिद्धाः सिद्धेश्वराश्च यं ।
तं ध्याये सततं शुद्धं भगवन्तं सनातनं ॥ ७१ ॥
सेवन्ते सन्ततं सन्तो ब्रह्मेशशेषसंज्ञकाः ।
[13]सेवन्ते निर्गुणं ब्रह्म भगवन्तं सनातनं ॥ ७२ ॥
निर्लिप्तञ्च निरीहञ्च परमात्मानमीश्वरं ।
नित्यं सत्यञ्च [14]परमं भगवन्तं सनातनं ॥ ७३ ॥
[15]यं सृष्टेरादिभूतञ्च सर्ववीजं परात्परं ।
योगिनस्तं प्रपद्यन्ते भगवन्तं सनातनं ॥ ७४ ॥
वीजं नानावताराणां सर्वकारणकारणं ।
वेदावेद्यं वेदवीजं वेदकारणकारणं ॥ ७५ ॥
योगिनस्तं प्रपद्यन्ते भगवन्तं सनातनं ।

---

[13] सेवेह T  [14] नैवेद्य I
[15] यं सृष्टे T

इत्येवमुक्त्वा गन्धर्वः पपात धरणीतले ॥ ७६ ॥
ननाम दण्डवद्भूमौ देवदेवं परात्परं ।
इति तेन कृतं स्तोत्रं यः पठेत् प्रयतः शुचिः ॥ ७७ ॥
इहैव जीवन्मुक्तश्च परे याति पराङ्गतिं ।
हरिभक्तिं हरेर्दास्यं गोलोके च निरामयः ॥
पार्षदप्रवरत्वञ्च लभते नाच संशयः ॥ ७८ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे प्रथमैकरात्रे गन्धर्वकृतस्तोत्रं नाम द्वादशोऽध्यायः ॥ १२ ॥

---

त्रयोदशोऽध्यायः ।



श्रीशुक उवाच ।

स्तोत्रान्तरे च काले च किं रहस्यं बभूव ह ।
तन्मे कथय भद्रन्ते भगवन् भगवद्वचः ॥ १ ॥

श्रीव्यास उवाच ।

स्तोत्रान्तरे च काले च गन्धर्वश्चोपवर्हणः ।
उवाच ब्रह्मसदसि भगवन्तं सनातनं ॥ २ ॥
सर्व्वदेवैरहं भस्मश्चाधुना देवहेतुना ।
देवानामग्निपुञ्जस्य प्रदीप्तस्य सुमेरुवत् ॥ ३ ॥
अधुना च त्वयि गते भस्मसान्मां करिष्यति ।
अतो रक्ष जगन्नाथ मां समुद्धर्तुमर्हसि ॥ ४ ॥
त्वदंशशूकरेणैव धरोद्धारः कृतः पुरा ।

हिरण्याख्यं महादैत्यं निहत्य चावलीलया ॥ ५ ॥
पादपद्माङ्कितपदे पद्मे ते शरणागतं।
मामनाथं भयाक्रान्तं रक्ष रक्ष सुरानलात् ॥ ६ ॥
गन्धर्वस्य वचः श्रुत्वा प्रहस्य जगदीश्वरः।
उवाच स्वच्छया वाचा ब्रह्मेशो ब्रह्मसंसदि ॥ ७ ॥

श्रीभगवानुवाच।

गन्धर्वराज प्रवर स्थिरो भव भयं त्यज।
शुभाश्रयस्य भक्तस्य भयं किन्ते मयि स्थिते ॥ ८ ॥
सर्वेभ्योऽपि भयं नास्ति मद्भक्तानामकर्मणां।
जन्ममृत्युजराव्याधिभयं तेषां न विद्यते ॥ ९ ॥
मन्मन्त्रोपासकश्चैव स्वतन्त्रो नित्यविग्रहः।
पुनर्न विद्यते जन्म मन्त्रग्रहणमात्रतः ॥ १० ॥
नास्ति कालाद्भयं तस्य न निषेकादिधेरपि।
मन्त्रग्रहणमात्रेण मुच्यते सर्वकर्मणः ॥ ११ ॥
मन्मन्त्रो हि दहेत्पापं कोटिजन्मकृतञ्च यत्।
सुदीप्तो ज्वलदग्निश्च तृणपुञ्जं दहेद्यथा ॥ १२ ॥
मन्मन्त्रग्रहणाद्योगान्नामग्रहणस्य वा।
तेषां पापानि वेपन्ते कोटिजन्मशतानि च ॥ १३ ॥
यमस्तन्नामलिखनं दूरीभूतं करोति च।
अन्ते दास्यञ्च लभते गत्वा गोलोकमुत्तमं ॥ १४ ॥
यावदायुर्भ्रमेत् तावत् स्वतन्त्रो मत्तकुञ्जरः।
ततः पापाः पलायन्ते वैनतेयादिवोरगाः ॥ १५ ॥

तेषाञ्च पादरजसा सद्यः पूता वसुन्धरा।
पुनाति सर्वतीर्थानि दूरतो दर्शनादपि ॥ १६ ॥
पूतश्च पवनो वह्निर्जलञ्च तुलसीदलं।
पूतान्येव हि तीर्थानि गङ्गादीनि च गायन ॥ १७ ॥
पूता सुशीला धर्मिष्ठा सुव्रता स्त्री पतिव्रता।
मन्मन्त्रोपासकाश्चैव तेभ्यः पूतोत्तमाः सदा ॥ १८ ॥
मन्मन्त्रोपासकानाञ्च तीर्थस्नानं व्रतं सुत।
[1]श्राद्धं दानं पूजनञ्च यथा चर्व्वितचर्वनं ॥ १९ ॥
भक्त्या तीर्थानि पूतानि स्वतः पूतो हि वैष्णवः।
[2]तत्तत्त्वञ्च तथा दानमलं श्राद्धञ्च निष्फलं ॥ २० ॥
श्राद्धस्य सम्प्रदानञ्च कर्त्तुश्च पुरुषत्रयं।
पुरुषाणां शतं मुक्तं को भुंक्ते श्राद्धवस्तु च ॥ २१ ॥
केचिदेवं वदन्तीति पितृलोकार्थमेव च।
तद्विरुद्धञ्च ते तुष्टा मन्त्रग्रहणमाचतः ॥ २२ ॥
तेषां शुभाशुभं कर्म नैव भोगाय कल्पते।
देवान्त्रप्रभवेद्यत्त सिद्धधान्ये यथाङ्कुरः ॥ २३ ॥
[3]साक्षात्करोति तेषाञ्च कर्ममूलनिकृन्तनं।
मन्मन्त्रोपासकादन्ये कर्मभोगञ्च भुञ्जते ॥ २४ ॥
मया स्वयं प्रदत्तश्च स्वमन्त्रः पुरुषाय च।
परद्वाराद्ग्राहयित्वा भक्तं मुक्तं करोम्यहं ॥ २५ ॥

---

[1] भक्तादिति R. भक्ता इति P [2] तदतत्त्वेति P.

मया प्रदत्तमन्त्रश्च पुरा मृत्युञ्जयस्तथा ।
मृत्युञ्जयाय गोलोके शुद्धसत्त्वगुणाय च ॥ २६ ॥
पुनः सनत्कुमाराय धर्माय ब्रह्मणे तथा ।
कपिलाय च शेषाय गणेशाय महामते ॥ २७ ॥
नारायणर्षये चैव धर्मपुत्राय धीमते ।
पुनर्महाविष्णवे च विश्वानि यस्य लोमसु ॥ २८ ॥
कालाधिष्ठातृदेवाय तस्मै सर्वान्तकाय च ।
उपेन्द्राय च कामाय भृगवेऽङ्गिरसे तथा ॥ २९ ॥
सरस्वत्यै च पद्मायै राधायै विरजातटे ।
सावित्र्यै विष्णुमायायै पार्षदेभ्यश्च पुत्रक ॥ ३० ॥
तुभ्यं न दत्तो मन्त्रोऽत्र श्रूयतां तन्निमित्तकं ।
जनिष्यसि शूद्रयोनौ ब्रह्मणो वाक्यपालनात् ॥ ३१ ॥
इत्येवं कथितं सर्वं गच्छ वत्स यथा सुखं ।
द्वादशाब्दान्तरे शूद्रयोनौ देवाज्जनिष्यसि ॥ ३२ ॥
पञ्चवर्षाभ्यन्तरे च मन्मन्त्रं प्राप्य विप्रतः ।
दशाब्दान्ते वपुस्त्यक्त्वा ब्रह्मपुत्रो भविष्यसि ॥ ३३ ॥
मन्मन्त्रं पुनरेवेति शम्भुवक्त्राल्लभिष्यसि ।
इत्येवमुक्त्वा सर्वात्मा तत्रैवान्तरधीयत ॥ ३४ ॥
गन्धर्वः प्रययौ तस्माद्योपिद्भिः सह पुत्रक ।
इत्येवं कथितं सर्वं पूर्ववृत्तान्तमेव च ॥ ३५ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे प्रथमैकरात्रे गन्धर्वमोहनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

चतुर्दशोऽध्यायः ।



श्रीशुक उवाच ।

प्रयाते राधिकानाथे गोलोकञ्च निरामयं ।
बभूव किं रहस्यञ्च गते गन्धर्वपुङ्गवे ॥ १ ॥

श्रीव्यास उवाच ।

सर्वे देवाश्च मनुयः प्रयाते परमात्मनि ।
सर्वे बभूवुस्ते तूष्णीं वयांसीव दिनात्यये ॥ २ ॥
उवाच शम्भुर्ब्रह्माणं नीतिसारविशारदं ।
ज्ञानाधिदेवो भगवान् परिणामसुखं वचः ॥ ३ ॥

श्रीमहादेव उवाच ।

रक्षिता यस्य भगवान् कल्याणं तस्य सन्ततं ।
सयस्य विघ्नकर्त्ता च रक्षितुं तञ्च कः क्षमः ॥ ४ ॥
स्मृतिमात्रेण निर्विघ्ना ये च कृष्णपरायणाः ।
विघ्नं कर्त्तुं के समर्थास्तेषाञ्च मुनयः सुराः ॥ ५ ॥
कोपाग्नीनां स्थलं कुत्र स्वभ्रितानाञ्च साम्प्रतं ।
देवानाञ्च मुनीनाञ्च चणेनैवेश्वरेच्छया ॥ ६ ॥
यदि तिष्ठन्ति भूमौ च दग्धशस्या वसुन्धरा ।
[1]जले यदि ततस्तर्सं नष्टास्ते जलजन्तवः ॥ ७ ॥

---

[1] जले यदि च तत् सुप्तमिति P

स्थले दहन्ति लोकांश्च रुद्रांश्च प्रलयाग्नयः ।
विधानं कर्तुमुचितमेषाञ्च जगतां विधे ॥ ८ ॥
त्वमेव धाता जगतां पिता च विष्णुरीश्वरः ।
कालाग्निरुद्रः संहर्त्ता नेदानीं प्रलयक्षमः ॥ ९ ॥
एते विषयिणः सर्वे कृष्णस्य परमात्मनः ।
आज्ञावहाश्च सततं दिक्पालाश्च दिगीश्वराः ॥ १० ॥
तस्यैवाज्ञावहो धर्मः साक्षी च कर्मणां नृणां ।
भ्रमन्ति विषये शश्वन्मोहिता मायया हरेः ॥ ११ ॥
अहं न पाता न स्रष्टा न संहर्ता च जीविनां ।
निर्लिप्तोऽहं तपस्वी च हरेराराधनोन्मुखः ॥ १२ ॥
संहारविषयं मह्यं श्रीकृष्णश्च पुरा ददौ ।
दत्वा रुद्राय तदहं तपस्यासु रतो हरेः ॥ १३ ॥
तदर्च्चनेन ध्यानेन तपसा पूजनेन च ।
स्तवेन कवचेनैव नाममन्त्रजपेन च ॥ १४ ॥
मृत्युञ्जयोऽहमधुना नच कालाद्भयं मम ।
कालः संहरते सर्वं मां विना च तथेश्वरं ॥ १५ ॥
पुरा सर्वादिसर्गे च कस्यचित् स्रष्टुरेव च ।
भालोद्भवाश्च ते रुद्रास्तेष्वेकोऽहञ्च शङ्करः ॥ १६ ॥
कल्पश्च ब्रह्मणः पाते लये प्राकृतिके तथा ।
सर्वे नष्टा विषयिणः न भक्ताश्च यथेश्वरः ॥ १७ ॥
असंख्यब्रह्मणः पातः कल्पश्चासङ्ख्य एव च ।
समतीतः कतिविधो भविता वा पुनः पुनः ॥ १८ ॥

श्रीकृष्णस्य निमेषेण ब्रह्मणः पतनं भवेत् ।
तत्र प्राकृतिकाः सर्वे तिरोभूताः पुनः पुनः ॥ १९ ॥
न प्राकृतो न विषयी नित्यदेही च वैष्णवः ।
हरेर्वरेणामरोऽहं *शिवाधारस्ततस्ततः ॥ २० ॥
कृतमुतञ्च विष्णुर्मे लये प्राकृतिके ध्रुवं ।
आब्रह्मलोकपर्य्यन्तं परं कृष्णालयं विना ॥ २१ ॥
सर्वा देव्यो विलीनाश्च कृष्णः सत्यं सुनिश्चितं ।
सर्वे पुमांसो लीनाश्च सत्ये नित्ये सनातने ॥ २२ ॥
अहं कृष्णश्च प्रकृतिः पार्षदप्रवरो हरेः ।
नित्यं नित्या विद्यमाना गोलोके च निरामये ॥ २३ ॥
एक ईशो न द्वितीय इति सर्वादिसर्गतः ।
नहि नश्यन्ति तद्भक्ताः प्रकृतिप्राकृते लये ॥ २४ ॥
तस्य भक्तोत्तमानाञ्च सततं स्मरणेन च ।
आयुर्व्ययो नहि भवेत् कथं मृत्युर्भविष्यति ॥ २५ ॥
न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
तेषां भक्तोत्तमानाञ्च सतत स्मरणेन च ॥ २६ ॥
जन्ममृत्युजराव्याधिभयं नाप्युपजायते ।
अत्र कल्पे भवान् ब्रह्मा व्यवस्थाता च कर्मसु ॥ २७ ॥
स्थलं कोपानलानाञ्च विधानं यद्विधे कुरु ।
शम्भोश्च वचनं श्रुत्वा कम्पितः कमलासनः ॥

---

* शिवाधारस्ततः शिव इति ।

स्थूलञ्चकार वह्नीनामाज्ञया शङ्करस्य च ॥ २८ ॥

ब्रह्मोवाच ।

ज्वरस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः ।
भस्मप्रहरणो रौद्रः कालान्तकयमोपमः ॥ २९ ॥
भवे भवतु सर्व्वच भवकोपानलोऽधुना ।
प्राकृतेषु च देहेषु व्यापारोऽस्य मया कृतः ॥ ३० ॥
ममकोपानलः शम्भो संस्कृताग्निर्द्विजस्य च ।
भवे भवतु सर्व्वत्र व्यापारोऽस्य मया कृतः ॥ ३१ ॥
[1]शेषस्य कोपवह्निश्च शेषास्येऽस्त्वधुना शिव ।
यतो विश्वञ्च प्रलये दग्धगोमयपिण्डवत् ॥ ३२ ॥
वह्निर्मुखालयो विश्वे व्यवहाराग्निरीश्वरः ।
भवत्वेव हि सर्व्वत्र सर्व्वेषामुपकारकः ॥ ३३ ॥
धर्मास्यकोपवह्निश्च कृष्णाग्निश्च भवत्वयं ।
अधर्मं कुर्व्वतां सर्व्वं दाहनञ्च करिष्यति ॥ ३४ ॥
सूर्य्यकोपानलश्चायं दावाग्निश्च वनेषु च ।
स्थितिरस्य तरोः स्कन्धे तद्भक्ष्याः पशुपक्षिणः ॥ ३५ ॥
चन्द्रकोपानलो विश्वे कामिनां विरहानलः ।
दम्पत्योर्विरहे शश्वद्दह्यति स ह्यस्तनुं ॥ ३६ ॥
इन्द्रकोपानलः सद्यो वज्राग्निश्च बभुव ह ।
उपेन्द्रस्यानलश्चैव विद्युदेव भवत्वयं ॥ ३७ ॥

---

[1] शेषस्येति ॥

# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL

New Series, No 25



# THE NARADA PANCHARATRA.

EDITED

BY

Revd K. M. Banerjea

*Fasciculus II*

---

CALCUTTA

PRINTED AT BISHOP'S COLLEGE PRESS

1862

## SANSKRIT WORKS PUBLISHED

### IN THE NEW SERIES

The Vaiseshika Sutras with Commentaries, by Pañdita Jaya Náráyana Tarkapanchanana Complete in five Fasc Nos 4 5, 6 8 and 10

The Sáñdilya Sútras with Swapneswaras Commentary Edited by Dr J R Ballantyne L L D complete in one Fasciculus No 11

The Kausitaki Bráhmaña Upanishad with Sánkarananda s commentary edited with a translation by E B Cowell, M A, complete in two Fasciculi Nos 19 and 20

## SANSKRIT WORKS IN PROGRESS

A translation of the Surya Siddhánta and Siddhánta Siromoñi by Pandita Bapu Deva Sástri under the superintendence of Archdeacon Pratt Fas I II Nos 1 and 13

The Dasa Rúpa with the exposition of Dhanika. Edited by F E. Hall D C L, Fasc I II Nos 12 and 24

The Nárada Pancharátra Edited by Rev K M Banerjea. Fasc I II Nos 17 and 25

रुद्राणामास्यवह्निश्च महोल्काग्निर्भवत्वयं ।
गणेशाग्निः पृथिव्यान्तु यथास्थाने तु *तिष्ठति ॥ ३८ ॥
यत्र तिष्ठेत्तदुदरमेवमेवं विदुर्बुधाः ।
स्कन्दकोपानलश्चैव रणास्त्राग्निर्बभूव ह ॥ ३९ ॥
कामेतराणां देवानां मुनीनाञ्च मुखानलः ।
जग्राहौर्व्वमुनिस्तत्र तेजसि ब्रह्मणः सुतः ॥ ४० ॥
स्वदक्षिणोरौ स मुनिः संस्थाप्य वेदमन्त्रतः ।
ब्रह्माणञ्च नमस्कृत्य शङ्करं तपसे ययौ ॥ ४१ ॥
कालेन तस्मान्निःसृत्य समुद्रे वाडवानलः ।
स बभूव पुरा पुत्र परमौर्व्वानलः स्वयं ॥ ४२ ॥
कामाग्निमुल्वनं दृष्ट्वा विचिन्त्य मनसा विधिः ।
समालोच्य सुरैः सार्द्धं मुनीन्द्रैः सह संसदि ॥ ४३ ॥
आजुहाव स्त्रियः सर्व्वाः सुव्रताश्च पतिव्रताः ।
आययुर्योषितः सर्व्वास्ता ऊचुः कमलोद्भवं ॥ ४४ ॥

स्त्रिय ऊचुः ॥

किमस्मान् ब्रूहि भगवन् शाधि नः करवाम किं ।
आलोच्य मनसा सर्व्वं देहि भारं वयं स्त्रियः ॥ ४५ ॥

ब्रह्मोवाच ॥

गृहीत्वा मदनाग्निञ्च मैथुने सुखदायकं ।
विभ्रेत्त च योषितः सर्व्वाः शश्वत्कामा भवन्तु च ॥ ४६ ॥

---

* तिष्ठत्विति R

ब्रह्मणश्च वचः श्रुत्वा कोपरक्तास्यलोचनाः ।
तमूचुर्योषितः सर्व्वा भयं त्यक्त्वा च संसदि ॥ ४७ ॥

स्त्रिय ऊचुः ॥

धिक् त्वां जगद्विधिं व्यर्थं चकार परमेश्वरः ।
अपूज्यो मोहिनीशापात् पुत्त्रशापेन साम्प्रतं ॥ ४८ ॥
गृहीत्वा मदनाग्निश्च पुरुषाश्च तथा स्त्रियः ।
नित्यं दहन्ति सततं वास्तवं दुःसहं परं ॥ ४९ ॥
तदेकभागः पुरुषे त्रिभागश्चापि योषिति ।
तेन दग्धाः स्त्रियः सर्व्वास्त्वास्माकमपरेण किं ॥ ५० ॥
समर्पयाच्चेत् पुरुषे यद्यस्मासु स्मरानलः ।
भस्मीभूतं करिष्यामो रक्षिता को भवेत्तव ॥ ५१ ॥
पतिव्रतावचः श्रुत्वा तमुवाच शिवः स्वयं ।
हितं [a]सत्यं नीतिसारं परिणामसुखावहं ॥ ५२ ॥

श्रीमहादेव उवाच ॥

"त्यज द्वन्द्वं महाभाग सुव्रताभिः सहाधुना ।
पतिव्रतानां तेजश्च सर्व्वेभ्यश्च परं भवेत् ॥ ५३ ॥
निर्माणं कुरु देवेन्द्र कल्याँ स्त्रीजातिमीश्वर ।
तस्मै देहि दुःखबीजं कामकोपानलं पर ॥ ५४ ॥
शङ्करस्य वचः श्रुत्वा सत्वरं जगतां विधिः ।
सस्जे तत्क्षणं मूर्त्तिं स्त्रीरूपां सुमनोहरां ॥ ५५ ॥

---

[a] पथ्यमिति B.

अहो रूपमहो वेशमहो अस्या नवं वयः ।
अहो चक्षुः कटाक्षञ्च मुनीनां मोहयन्मनः ॥ ५६ ॥
अहो सुकठिनं चारु स्तनयुग्मं सुवर्त्तुलं ।
विचित्रं कठिनं स्थूलं श्रोणियुग्मञ्च सुन्दरं ॥ ५७ ॥
नितम्बयुग्मं वलितं चक्राकारं सुकोमलं ।
श्वेतचम्पकवर्णाभं सर्व्वावयवमीप्सितं ॥ ५८ ॥
शरत्पार्व्वणकोटीन्दुविनिन्दास्यं सुशोभनं ।
ईषद्धास्यप्रसन्नास्यं वस्त्रेणाच्छादितं मुदा । ५९ ॥
वपुः सुकोमलं [6]बालं नातिदीर्घं न वह्वरं ।
वह्निशुद्धांशुकं रत्नभूषणैर्भूषितं सदा ॥ ६० ॥
दाडिम्बकुसुमाकारं सान्द्रं सिन्दूरसुन्दरं ।
कस्तूरीविन्दुना सार्द्धं स्निग्धचन्दनविन्दुभिः ॥ ६१ ॥
पक्वबिम्बफलाकारमधरौष्ठयुग्मं परं ।
दन्तपङ्क्तियुगञ्चैव दाडिम्बवीजसन्निभं ॥ ६२ ॥
सुचारु कवरीभारं मालतीमाल्यमण्डितं ।
तस्यै ददौ च कामाग्निं दृष्ट्वा तां कमलोद्भवः ॥ ६३ ॥
दृष्ट्वा सा चन्द्ररूपञ्च कामोन्मत्ता विचेतना ।
कृत्वा कटाक्षं सेरास्या मां भजस्वेत्युवाच सा ॥ ६४ ॥
सस्मितः प्रययौ चन्द्रो लज्जया च सभातलात् ।
कामं दृष्ट्वा च चकमे कामार्त्ता सा गतत्रपा ॥ ६५ ॥

---

[6] बालहृति R

दुद्राव कामस्तस्माच्च तत्पश्चात् सा दधाव च ।
जहसुर्देवताः सर्व्वा मुनयश्चापि संसदि ॥ ६६ ॥
लज्जिता योषितः सर्वास्तां वारयितुमक्षमाः ।
सर्व्वे चक्रुः परीहासं स्त्रीवर्गं शङ्करादयः ॥ ६७ ॥
कामं न लब्ध्वा सा च स्त्री निर्वृत्यागत्य संसदि ।
तमश्विनीकुमारञ्चाप्युवाच सुरसन्निधौ ॥ ६८ ॥

लज्जाकामिन्युवाच ॥

मां भजस्व रवेः पुत्र प्रियां रसवतीं मुदा ।
शृङ्गारे सुखदां शान्तां परां कामातुरां वरां ॥ ६९ ॥
त्वया सार्द्धं भ्रमिष्यामि सुन्दरे गहने वने ।
रहसि रहसि क्रीडां करिष्यामि दिवानिशं ॥ ७० ॥
मधुपानञ्च दास्यामि वासितं चामलं जलं ।
सकर्पूरञ्च ताम्बूलं भोगवस्तु मनोहरं ॥ ७१ ॥
शय्यां मनोरमां कृत्वा सपुष्पचन्दनार्च्चितां ।
भगवन्तं करिष्यामि पुष्पचन्दनचर्च्चितं ॥ ७२ ॥

कुमार उवाच ॥

वचनं वद वामे मामात्मनो हृदयङ्गमं ।
विहाय कपटं कान्ते कपटं धर्मनाशनं ॥ ७३ ॥
स्त्रीधर्मं स्त्रीमनस्कामं स्त्रीस्वभावञ्च कीदृशं ।
तदाचारं कतिविधं तन्मां व्याख्यातुमर्हसि ॥ ७४ ॥
अश्विनीजवचः श्रुत्वा कामार्त्ता तमुवाच सा ।
कामार्त्तानां क लज्जा च क भयं मानमेव च ॥ ७५ ॥

कामिन्युवाच ॥

स्थानं नास्ति क्षणं नास्ति नास्ति दूती तदुत्तमा ।
तेनैव युवतीनाञ्च सतीत्वमुपजायते ॥ ७६ ॥
सुवेशं कामुकं दृष्ट्वा कामिनी मदनातुरा ।
तस्याश्च पुलकितं योनौ कण्डूयनं परं ॥ ७७ ॥
विचेतना भवेत् सा च कामज्वरप्रपीडिता ।
सर्व्वं त्यजति तद्धेतोः पुत्रं कान्तं गृहं धनं ॥ ७८ ॥
लब्ध्वा युवानं पुरुषं देहत्यागं करोति सा ।
तदुत्तमं पुनर्लब्ध्वा तं त्यजेत्सा क्षणेन च ॥ ७९ ॥
विषं दातुं समर्था सा स्वामिनं गुणिनां वरं ।
म्लेच्छं युवानं सम्प्राप्य सर्व्वस्वं दातुमुत्सुका ॥ ८० ॥
त्यजेत्कुलभयं लज्जां धर्मं बन्धुं यशः श्रियं ।
सम्प्राप्य रतिशूरञ्च युवानं सुरतोन्मुखं ॥ ८१ ॥
सुदृश्यं सुन्दरमुखं शश्वन्मधुरितं वचः ।
हृदयं क्षुरधाराभं को वा जानाति तन्मनः ॥ ८२ ॥
विद्युच्छटा जले रेखा चास्थिता च यथाम्बरे ।
तथाऽस्थिरा च कुलटाप्रीतिः स्वप्नञ्च तद्वचः ॥ ८३ ॥
कुलटानां न सत्यञ्च न च धर्मो भयं दया ।
न लौकिकं न लज्जा स्याज्जारचिन्ता निरन्तरं ॥ ८४ ॥
स्वप्ने जागरणे चैव भोजने शयने सदा ।
निरन्तरं कामचिन्ता जारे स्नेहो न चान्यत

कुलटा नरघातिभ्यो निर्दया दुष्टमानसा ।
जारार्थे च सुतं हन्ति बान्धवस्य च का कथा ॥ ८६
न हि वेदा विदन्त्येवं कुलटाहृदयङ्गमं ।
कथं देवाश्च मुनयः सन्तो जानन्ति निश्चयं ॥ ८७ ॥
रतिशूरं प्रियं दृष्ट्वा चीरं घृतमिवाचरेत् ।
गते वयसि जीर्णं तं विषं दृष्ट्वा त्यजेत्क्षणात् ॥ ८८ ॥
न विश्वसेयुस्तां दुष्टां तस्मात् सन्तो हि सन्ततं ।
न रिपुः पुरुषाणाञ्च दुष्टास्त्रीभ्यः परो भुवि ॥ ८९ ॥
विषं मन्त्रादुपशमं जलाद्वह्निश्च निश्चितं ।
अग्नेश्च [7]कराटकोच्छन्नं दुर्ज्जनः स्तवनाद्वशः ॥ ९० ॥
लुब्धो धनेन राजा च सेवया सततं वशः ।
मित्रं स्वच्छस्वभावेन भयेन च रिपुर्व्वशः ॥ ९१ ॥
आदरेण वशो विप्रो युवती प्रेमभारतः ।
बन्धुर्व्वशः समतया गुरुः प्रणतिभिः सदा ॥ ९२ ॥
मूर्खो वशः कथायाञ्च विद्वान् विद्याविचारतः ।
न हि दुष्टा च कुलटा [8]पुंसश्च वशगा भवेत् ॥ ९३ ॥
स्वकार्य्ये तत्परा शश्वत् प्रीतिः कार्य्यानुरोधतः ।
न सर्व्वस्य वशीभूता विना शृङ्गारमुत्तमं ॥ ९४ ॥
न प्रीत्या न धनेनैव न स्तवान्न च सेवया ।
न प्राणदानतो वेश्या वशीभूता भवेत्क्षणं ॥ ९५ ॥

---

[7] ९० कराटकाच्छन्नमिति R [8] पुंसाञ्च T

आहारो द्विगुणस्तासां बुद्धिस्तासां चतुर्गुणा ।
षड्गुणा मन्त्रणा तासां कामश्चाष्टगुणः स्मृतः ॥ ९६ ॥
शश्वत्कामा च कुलटा न च तृप्तिश्च क्रीडया ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥ ९७ ॥
दिवानिशञ्च शृङ्गारं कुरुते तत्प्रमान् यदि ।
न तृप्तिः कुलटानाञ्च पुमांसं ग्रस्तुमिच्छति ॥ ९८ ॥
नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्व्वभूतानां नाशा तृप्यति सम्पदां ॥ ९९ ॥
न श्रेयसां मनस्तृप्तं वाडवाग्निर्न पाथसां ।
वसुन्धरा न रजसां न पुंसां कुलटा तथा ॥ १०० ॥
इत्येवं कथितं किञ्चित् सर्व्वं वक्तुञ्च नोचितं ।
लज्जा वीजं योषिताञ्च निबोध भास्करात्मज ॥ १०१ ॥
श्रुत्वा च कृत्यास्त्रीवाक्यं जहसुर्मुनयः सुराः ।
चुकुपुर्योषितः सर्व्वाः पद्माद्या लज्जिताः सुत ॥ १०२ ॥
लज्जाननतानना लक्ष्मीर्निर्ययौ देवमण्डलात् ।
तत्पश्चात् पार्व्वती सार्द्धं सरस्वत्या नतानना ॥ १०३ ॥
सावित्री रोहिणी स्वाहा वारुणी च रतिः शची ।
सर्व्वा बभुवुरेकत्र प्रचक्रुर्मन्त्रणाञ्च ताः ॥ १०४ ॥
कृत्यास्त्रियं समाहूय ता उचुश्च क्रमेण च ।
रोषियामासुरिष्टे तां सुगोप्यमपि योषितः ॥ १०५ ॥
तस्या मुखे ददौ हस्तं सुशीला कमलालया ।
सलज्जिता भव सुते शान्ता चेति शुभाशिषं ॥ १०६ ॥

सरस्वती ददौ तस्यै चाभिमानञ्च धैर्य्यतां ।
मौखर्य्यं वावदूकत्वं मन्त्रणामात्मरक्षणां ॥ १०७ ॥
सावित्री च ददौ तस्यै सौशिल्यं चातिदुर्लभं ।
आत्मसंगोपनञ्चैव गाम्भीर्य्यं कुलतो भयं ॥ १०८ ॥

पार्व्वत्युवाच ॥

धिक् त्वां स्वभावकुलटां लज्जिता भवसुन्दरि ।
स्वमानं गौरवं रक्षह्यस्माकञ्च सुरातुरे ॥ १०९ ॥
जनिं लभ पृथिव्याञ्च कायव्यूहं विधाय च ।
पुंसामष्टगुणं कामं लभस्व च पृथक् पृथक् ॥ ११० ॥
लज्जां चतुर्गुणाञ्चापि द्विगुणां धैर्य्यतां तथा ।
अभोगेञ्चाधमे गच्छ दूरं गच्छ ममान्तिकात् ॥ १११ ॥
पुंसाञ्च द्विगुणः कामो वास्तवीनाञ्च योषितां ।
लज्जा चाष्टगुणा चापि धैर्य्यता च चतुर्गुणा ॥ ११२ ॥
कुलधर्मः कुलभयं सौशील्य मानमूर्ज्जितं ।
शश्वत्तिष्ठतु पुंस्वेव सतीषु च ममाज्ञया ॥ ११३ ॥
यस्मात् सदसि सर्व्वेभ्यो लज्जाहीनः सुराधमः ।
स्त्रीस्वभावञ्च पप्रच्छ यज्ञभाक् न भवेत्ततः ॥ ११४ ॥
अद्यप्रभृति विश्वेषु नाग्राह्यं पापसंयुतं ।
चिकित्सकानां विदुषां न भक्ष्यञ्च ममाज्ञया ॥ ११५ ॥
इत्येवमुक्त्वा प्रययुर्देव्यश्च सर्व्वयोषितः ।
देवांश्च मुनयश्चापि ये चान्ये च समागताः ॥ ११६ ॥

पृथिव्यां कुलटाजातिर्बभूव सर्व्वतः सुत ।
पतिव्रतानां स्त्रीणाञ्च लज्जा वीजस्वरूपिणी ॥ ११७ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे प्रथमैकरात्रे कुलटोत्पत्तिर्नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

पञ्चदशोऽध्याय ॥

श्रीव्यास उवाच ॥

गते नियमिते काले गन्धर्व्वश्चोपवर्हणः ।
स्वयोगेन जहौ देहं भारते प्राक्तनाद्दहो ॥ १ ॥
स जज्ञे शूद्रयोनौ च पितुः शापेन दैवतः ।
विष्णुप्रसादं भुक्त्वा च बभूव ब्रह्मणः सुतः ॥ २ ॥
विमुक्तस्तातशापेन सम्प्राप्य ज्ञानमुत्तमं ।
प्रतिजन्मस्मृतिस्तस्य कृष्णमन्त्रप्रसादतः ॥ ३ ॥
पितुः सकाशादागत्य सम्प्राप चन्द्रशेखरात् ।
श्रीकृष्णमन्त्रमतुलं स्वर्गमन्दाकिनीतटे ॥ ४ ॥
स्वर्गमन्दाकिनीतीरात्कृपया शङ्करेण च ।
सहितः प्रययौ तूर्णं पार्व्वतीसन्निधानतः ॥ ५ ॥
उवास तत्र शम्भुश्च नारदश्च महामुनिः ।
पार्व्वती भद्रकाली च स्कन्दो गणपतिः स्वयं ॥ ६ ॥

महाकालश्च नन्दी च वीरभद्रः प्रतापवान् ।
सिद्धा महर्षयश्चैव मुनयः सनकादयः ॥ ७ ॥
योगीन्द्रा ज्ञानिनः सर्व्वे समूचुः शम्भुसंसदि ।
यत् स्तोत्रं कवचं ध्यानं सुभद्राय च कानने ॥ ८ ॥
नारायणर्षिर्भगवान् ब्राह्मणाय ददौ पुरा ।
पूजाविधानं यद्यच्च[1] पुरश्चरणपूर्व्वकं ॥ ९ ॥
तदेव भगवान् शम्भुः प्रददौ नारदाय च ।
उवाच शम्भुं देवर्षियोगिनाञ्च गरोर्गुरुं ॥
पार्व्वतीसन्निधौ तत्र नारदश्च महामुनिः ॥ १० ॥

नारद उवाच ।

भगवन् सर्व्वधर्मज्ञ [2]सर्व्वज्ञ सर्व्वकारण ।
यद्यत्पृष्टं मया पूर्व्वं तन्मां व्याख्यातुमर्हसि ॥ ११ ॥

श्रीमहादेव उवाच ।

यद्यत्पृष्टं त्वया ब्रह्मन् प्रत्येकञ्च क्रमेण च ।
पुनः प्रश्नं कुरु मुने शृण्वन्तु मत्सभासदः ॥ १२ ॥

नारद उवाच ।

आध्यात्मिकञ्च यज्ज्ञानं वेदानां सारमुत्तमं ।
ज्ञानं ज्ञानिषु सारं यत् कृष्णभक्तिप्रदं शुभं ॥ १३ ॥
निर्वाणमुक्तिदं ज्ञानं कर्म्मसूत्रनिकृन्तनं ।
तत्सिद्धियोगान्मुक्तिश्च योगिनामपि वाञ्छितं ॥ १४ ॥

---

[1] यद्यत् । [2] गर्व्वहरत्वमस्तीति ॥

## २ गार्ग ॥

### प्रथमोऽध्यायः ॥

श्रीमहादेव उवाच ॥

नारायणं नमस्कृत्य परमात्मनमीश्वरं ।
शृणु नारद वक्ष्यामि परमं धर्ममीप्सितं ॥ १ ॥
प्रकृतेः परमिष्टञ्च सर्वेषामभिवाञ्छितं ।
स्वेच्छामयं परं ब्रह्म पञ्चरात्राभिधं स्मृतं ॥ २ ॥
कारणं कारणानाञ्च कर्ममूलनिकृन्तनं ।
अनन्तवीजरूपञ्च स्वाज्ञानध्वान्तदीपकं ॥ ३ ॥
सर्वेश्वरं सर्वधाम परं वैराग्यकारणं ।
परमं परमानन्दमायाबन्धनिकृन्तनं ॥ ४ ॥
निर्लिप्तं निर्गुणं सारं वेदानां गोपनीयकं ।
कर्मिणां कर्मणां शश्वत् साक्षिरूपं सुनिर्मलं ॥ ५ ॥
ब्रह्मेशशेषप्रमुखदेववन्द्यं प्रशंसितं ।
[1]वेदज्ञानागोचरं तं योगिनां प्राणतः प्रियं ॥ ६ ॥

---

[1] वेदज्ञानगोचरमिति P.

## २ रात्रं ॥

प्रथमोऽध्यायः ॥

श्रीमहादेव उवाच ।

नारायणं नमस्कृत्य परमात्मनमीश्वरं ।
शृणु नारद वक्ष्यामि परमं धर्ममीप्सितं ॥ १ ॥
प्रकृतेः परमिष्टञ्च सर्वेषामभिवाञ्छितं ।
स्वेच्छामयं परं ब्रह्म पञ्चरात्राभिधं स्मृतं ॥ २ ॥
कारणं कारणानाञ्च कर्ममूलनिकृन्तनं ।
अनन्तवीजरूपञ्च स्वाज्ञानध्वान्तदीपकं ॥ ३ ॥
सर्वेश्वरं सर्वधाम परं वैराग्यकारणं ।
परमं परमानन्दमायाबन्धनिकृन्तनं ॥ ४ ॥
निर्लिप्तं निर्गुणं सारं वेदानां गोपनीयकं ।
कर्मिणां कर्मणां शश्वत् साक्षिरूपं सुनिर्मलं ॥ ५ ॥
ब्रह्मेशशेषप्रमुखदेववन्द्यं प्रशंसितं ।
[1]वेदज्ञानागोचरं तं योगिनां प्राणतः प्रियं ॥ ६ ॥

[1] वेदध्यानागोचरमिति ।

सर्व्वाद्याध्यात्मिकं ज्ञानं वेदसारं मनोहरं ।
दुर्गं नानाप्रकारञ्च नानातन्त्रेषु पञ्चक ॥ १८ ॥
सर्व्वसारोद्धृतं तच्च श्रीकृष्णपादसेवनं ।
सर्व्वेषां सम्मतं ज्ञानं निर्लिप्तं भवबन्धतः ॥ १९ ॥
लक्षश्लोकमिदं शास्त्रं श्रीकृष्णेन कृतं पुरा ।
कथयामि कथं ब्रह्मन् स्वल्पं संक्षेपतः शृणु ॥ २० ॥
आब्रह्मस्तम्बपर्य्यन्तं सर्व्वं कृष्णं चराचरं ।
पुनस्तस्मिन् प्रलीनञ्च पुनरेव च सम्भवं ॥ २१ ॥
एक एवेश्वरः शश्वद्विश्वेषु निखिलेषु च ।
सर्व्वे तत्कर्मसिद्धाश्च मोहितास्तस्य मायया ॥ २२ ॥
अनन्तस्य च कृष्णस्याप्यनन्तं गुणकीर्त्तनं ।
अनन्तरूपा कीर्त्तिश्चाप्यनन्तं ज्ञानमेव च ॥ २३ ॥
नामान्यस्याप्यनन्तानि तीर्थपूतानि नारद ।
अनन्तानि च विश्वानि विचित्रकृत्रिमाणि च ॥ २४ ॥
नानाविधानि सर्व्वाणि जीवरूपाणि सर्व्वतः ।
मध्यमानि च क्षुद्राणि महान्ति चापि सर्व्वतः ॥ २५ ॥
पृथक् पृथक् च प्रत्येकं प्रत्यक्षं सर्व्वजीविषु ।
सन्ततं सन्ति ये देवाः सन्तो जानन्ति निश्चितं ॥ २६ ॥
परमात्मस्वरूपश्च भगवान् राधिकेश्वरः ।
निर्लिप्तः साक्षिरूपश्च स च कर्म्मसु कर्म्मिणां ॥ २७ ॥
जीवस्तत्प्रतिबिम्बश्च भोक्ता च सुखदुःखयोः ।
केचित् वदन्ति तं नित्यं कारणस्य गुणेन च ॥ २८ ॥

धर्मः शिरश्च सर्वेषां जठरे च हुताशनः ।
प्राणाद्विस्थश्च पवनः स निश्वासः प्रकीर्त्तितः ॥ ३९ ॥
गणेशः कण्ठदेशस्थो विघ्नदो विघ्ननाशकृत् ।
स्कन्दः प्रतापरूपश्च कामो मनसि कामदः ॥ ४० ॥
पापं पुण्यं हृदयजं लक्ष्मीः सत्त्वानुसारिणी ।
आकण्ठदेशात् सर्वेषां रसनासु सरस्वती ॥ ४१ ॥
सा एव मन्त्रणारूपा पृथङ्मूर्त्त्या च सर्वतः ।
बुद्धिजाः शक्तयः सर्वा विशन्ते सर्वजन्तुषु ॥ ४२ ॥
निद्रा तन्द्रा दया श्रद्धा तुष्टिः पुष्टिः क्षमा च क्षुत् ।
लज्जा तृष्णा तथेच्छा च शान्तिश्चिन्ता जरा जडा ॥ ४३ ॥
याते स्वामिनि यान्त्येते नरदेषमिवानुगाः ।
चिन्ता ज्वरा च सततं शोभा पुष्टिश्च देष्टि च ॥ ४४ ॥
सर्वेषां जीविनामेव देहोऽयं पाञ्चभौतिकः ।
पृथिवी वायुराकाशस्तेजस्तोयमिति स्मृतः ॥ ४५ ॥
स्वदेहे च प्रपतिते स्वभागं प्राप्नुवन्ति च ।
पृथक् पृथक् च प्रत्येकमेकमेव क्रमेण च ॥ ४६ ॥
सङ्केतपूर्वकं नाम तत् स्मरन्ति च बान्धवाः ।
रुदन्ति सततं भ्रान्त्या मायया मायिनस्तथा ॥ ४७ ॥
तस्मात् सन्तो हि सेवन्ते श्रीकृष्णचरणाम्बुजं ।
नित्यं सत्यमभयदं जन्ममृत्युजराहरं ॥ ४८ ॥
प्रभातस्वप्नवद्विश्वमनित्यं कृत्रिमं मुने ।
पाद्मपद्मार्च्चितं पादपद्मं भज हरेर्मुदा ॥ ४९ ॥

मयोक्तं प्रथमं ज्ञानं [1]ज्ञानं पञ्चविधेषु च ।
द्वितीयं श्रूयतां वत्स यत्सारं कृष्णभक्तिदं ॥ ५० ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे द्वितीयरात्रे प्रथमज्ञानाध्यात्मिक-वर्णनं नाम प्रथमोऽध्यायः ॥ १ ॥

---

द्वितीयोऽध्यायः ॥

श्रीमहादेव उवाच ॥

हरिभक्तिप्रदं ज्ञानं ज्ञानं पञ्चविधेषु च ।
विदुषां वाञ्छिता मुक्तिः सततं परमा सतां ॥ १ ॥
सा च श्रीकृष्णभक्तस्य कलां नार्हति षोडशीं ।
श्रीकृष्णभक्तसङ्गेन भक्तिर्भवति नैष्ठिकी ॥ २ ॥
अनिमित्ता च सुखदा हरिदास्यप्रदा शुभा ।
यथा [2]वृक्षलतानां च नवीनः कोमलाङ्कुरः ॥ ३ ॥
वर्द्धते मेघवर्षेण शुष्कः सूर्य्यकरेण च ।
तथैव भक्तालापेन भक्तिवृक्षनवाङ्कुरः ॥ ४ ॥
वर्द्धते शुष्कतां याति चाभक्तालापमात्रतः ।
तस्माद्भक्तसहालापं कुरुते पण्डितः सदा ॥ ५ ॥
यात्येवाभक्तसंसर्गाद्दुष्टात् सर्पाद्यथा नरः ।
आलापाद्गात्रसंस्पर्शात् शयनात् सहभोजनात् ॥ ६ ॥

---

[1] पञ्चपञ्चविधेष्विति ॥.  [2] वृक्षकाष्ठानां वेति ॥.

सञ्चरन्ति च पापानि तैलविन्दुमिवाम्भसा ।
संसर्गजा गुणा दोषा भवन्त्येव हि जीविनां ॥ ७ ॥
तस्मात् सतां हि संसर्गं सन्तो वाञ्छन्ति सन्ततं ।
मन्ये संसर्गजो दोषो वस्तूनां प्रभवेदिह ॥ ८ ॥
हीनधातुप्रसङ्गेन स्वर्णदोषः [2]प्रजायते ।
तस्माच्च हीनसंसर्गं न वाञ्छन्ति मनीषिणः ॥ ९ ॥
तस्माद्वैष्णवसंसर्गं कुर्व्वन्ति वैष्णवाः सदा ।
कुर्व्वन्ति वैष्णवाः शश्वत् षड्विधं भजनं हरेः ॥ १० ॥
[3]स्मरणं कीर्त्तनञ्चैव वन्दनं पादसेवनं ।
पूजनं सततं भक्त्या परं स्वात्मनिवेदनं ॥ ११ ॥
गृह्णाति भक्तो भक्त्या च कृष्णमन्त्रञ्च वैष्णवात् ।
अवैष्णवाद्गृहीत्वा च हरिभक्तिर्न वर्द्धते ॥ १२ ॥
चाण्डालादपि पापी स श्रीकृष्णविमुखो नरः ।
निष्फलं तद्धर्मकर्म नाधिकारी स कर्मणां ॥ १३ ॥
शश्वदशुचिः पापिष्ठो निन्दां कृत्वा हसत्यपि ।
भगवन्तं भागवतमात्मानं नैव मन्यते ॥ १४ ॥
गुरुमन्त्रात् कृष्णमन्त्रो यस्य कर्णे विशेद्द्विजो ।
तं वैष्णवं महापूतं प्रवदन्ति पुराविदः ॥ १५ ॥
मन्त्रग्रहणमात्रेण नरो नारायणानुजः ।
पुरुषाणां शतैः सार्द्धं स्वात्मानञ्च समुद्धरेत् ॥ १६ ॥

---

[2] पद्यन्ते इति B P  [3] अवर्णमिति I.

मातामहानां शतकं सोदरं मातरं सुतं ।
भृत्यं कलत्रं बन्धुञ्च शिष्यवर्गांस्तथैव च ॥ १७ ॥
यदा नारायणक्षेत्रे मन्त्रं गृह्णाति वैष्णवात् ।
विष्णुः पुंसां सहस्रञ्च लीलया च समुद्धरेत् ॥ १८ ॥
मया श्रीकृष्ण*मन्त्रश्च कृष्णालये मुने पुरा ।
गोलोके विरजातीरे नीरे क्षीरनिभेऽमले ॥ १९ ॥
शतलक्षजपं कृत्वा पुण्ये वृन्दावने वने ।
श्रीकृष्णानुग्रहेणैव मन्त्रः सिद्धो बभूव मे ॥ २० ॥
[5]ब्रह्मभालोद्भवोऽहञ्च सर्व्वादिसर्गतो मुने ।
प्राप्तं मृत्युञ्जयं ज्ञानं कृष्णाच्च परमात्मनः ॥ २१ ॥
सिद्धो मृत्युञ्जयोऽहञ्च नित्यनूतनविग्रहः ।
ब्रह्मणः पतनेनैव निमेषो मे यथा हरेः ॥ २२ ॥
एवं तेषां पार्षदानां नास्ति मृत्युर्यथा हरेः ।
यस्मिन्देहे लभेन्मन्त्रं वैष्णवो वैष्णवादपि ॥ २३ ॥
*पूर्व्वकर्माश्रितं देहं त्यक्त्वा स पार्षदो भवेत् ।
पञ्चवक्त्रेण सततं तन्नामगुणकीर्त्तनं ॥ २४ ॥
करोमि भार्य्यया सार्द्धं पुत्राभ्याञ्चापि नारद ।
तद्दिनं दुर्द्दिनं मन्ये मेघाच्छन्नं न दुर्द्दिनं ॥ २५ ॥
यद्दिनं कृष्णसंलापकथापीयूषवर्जितं ।
तं क्षणं निष्फलं मन्ये श्रीकृष्णकीर्त्तनं विना ॥ २६ ॥

---

* मत्र्यचेति ॥

[5] ब्रह्मकालाद्भव इति

आयुर्हरति कालश्च पुंसां तत्कीर्त्तनेन च ।
तं क्षणं मङ्गलं मन्ये सर्व्वहर्षकरं परं ॥ २७ ॥
तस्मात् पापाः पलायन्ते वैनतेयादिवोरगाः ।
ब्रह्मणापि पुरा लब्धस्तस्मात्तन्मन्त्र एव च ॥ २८ ॥
पद्मनाभनाभिपद्मे शतलक्षं जजाप सः ।
तदाललाप ज्ञानञ्च निर्मलं सृष्टिकारणं ॥ २९ ॥
अणिमादिकसिद्धिञ्च चकार तत्प्रभावतः ।
सृष्टिञ्च त्रिविधां कृत्वा विधाता च बभूव सः ॥ ३० ॥
वरं तस्मै ददौ कृष्णो मत्समस्त्वं भवेति च ।
शेषस्तत्कलया पूर्व्वं बभूव कश्यपात्मजः ॥ ३१ ॥
तस्मात् सम्प्राप तन्मन्त्रं सिद्धः कोटिजपेन च ।
सहस्रशिरसस्तस्य मस्तकस्यैकदेशतः ॥ ३२ ॥
विश्वं सर्षपवत् सर्पस्यैकदेशे यथा मुने ।
कूर्मस्तत्कलया पूर्व्वं बभूवायोनिजः स्वयं ॥ ३३ ॥
अनन्तस्तत्पृष्ठदेशे गजेन्द्रे मशको यथा ।
वाय्वाधारश्च कूर्मश्च जलाधारः समीरणः ॥ ३४ ॥
महज्जलं महाविष्णोः प्रत्येकं लोमकूपतः ।
महाविष्णुर्जलाधारः सर्वाधारो महज्जलं ॥ ३५ ॥
शून्याश्रयं निराधारं परमेतन्महज्जलं ।
तस्मिन्महज्जले शेते बभूव कलया हरेः ॥ ३६ ॥
महज्जलं महावायुर्बभूव कलया हरेः ।
राधागर्भोद्भवो डिम्बः स च डिम्बोद्भवः पुरा ॥ ३७ ॥

बभञ्ज डिम्भः सहसा गोलोकात् प्रेरितस्तथा।
भूत्वा द्विखण्डं पतितो डिम्भो मग्नो जलार्णवे॥ ३८॥
बालश्च शेते तोये च पर्य्यङ्के च यथा नृपः।
महाविष्णोश्च लोम्नाञ्च विवरेषु पृथक् पृथक्॥ ३९॥
ब्रह्माण्डानि च प्रत्येकमसंख्यानि च नारद।
पृथक् पृथग्जलं व्याप्तं प्रतिलोम्नश्च कूपतः॥ ४०॥
वायुस्तदूर्द्धं प्रत्येकं तदूर्द्धं कमठस्तथा।
शेषः कमठपृष्ठे च सहस्रमितमस्तकः॥ ४१॥
मस्तकस्यैकदेशे च डिम्भः सर्षपवन्मुने।
डिम्भान्तरे च ब्रह्माण्डमनित्यं कृत्रिमञ्च तत्॥ ४२
डिम्भान्तरे च ब्रह्माण्डनिर्माणक्रममीप्सितं।
सन्निरूपितं श्रुतिद्वारा साक्षाद्दृष्टं मया मुने॥ ४३॥
एवञ्च सप्तपाताल यथेवाट्टालिकागृहं।
प्रययुः परिनिर्माणा क्रमेण च पृथक् पृथक्॥ ४४॥
•अतलं वितलञ्चैव सुतलञ्च तलातलं।
रसातल महातलं पातालं परिकीर्त्तितं॥ ४५॥
वितलं सुन्दरं शुद्ध निर्माणं स्वर्गवन्मुने।
सद्रत्नरचितं सर्व्वमीश्वरेच्छाविनिर्म्मितं॥ ४६॥
पातालाधस्तलं रुक्तं गभीरञ्च भयानकं।
डिम्बाधारं तज्जलञ्च डिम्बाधः शेषं एव च॥ ४७
अतलोपरि तोयञ्च तोयोपरि वसुन्धरा।
काञ्चनी भूमिसंयुक्ता सप्तद्वीपमनोहरा॥ ४८॥

ब्रह्मलोकस्य वामे च ध्रुवलोकस्तथैव च ।
विश्वञ्च ब्रह्मलोकान्तं स्रष्टा सृष्टञ्च कृत्रिमं ॥ ६० ॥
जम्बुद्वीपश्च कथितो यथा दृष्टो मया मुने ।
सरित्शैलैर्बहुविधैः काननैः कन्दरैर्युतः ॥ ६१ ॥
यत्र भारतवर्षञ्च सर्व्वेषामीप्सितं वरं ।
कर्मक्षेत्रं सतां सद्भिः प्रशस्यं पुण्यदं परं ॥ ६२ ॥
आविर्भावोऽत्र कृष्णस्य यत्र वृन्दावनं वनं ।
अन्यस्थाने सुखं जन्म निष्फलञ्च गतागतं ॥ ६३ ॥
भारते च क्षणं जन्म सार्थकं शुभकर्मजं ।
अनेकजन्मपुण्येन साधूनां जन्म भारते ॥ ६४ ॥
कृष्णानुग्रहतो विद्वान् लब्ध्वा च जन्म भारते ।
न भजेत् कृष्णपादाब्जं तदत्यन्तविडम्बनं ॥ ६५ ॥
असार्थकं तस्य जन्म वृथा तद्गर्भयातना ।
निष्फलं तच्छरीरञ्च नश्वरं व्यर्थजीवनं ॥ ६६ ॥
जीवन्मृतो हि पापी स चाण्डालादधमोऽशुचिः ।
भुंक्ते नित्यमभक्ष्यञ्चाप्यनिवेद्यं हरेरहो ॥ ६७ ॥
विण्मूत्रकृतमभक्ष्यञ्च नित्यं भुंक्ते च शूकरः ।
नहि कृतमभक्ष्यञ्च भुंक्ते स शूकराधमः ॥ ६८ ॥
अभक्ष्यं ब्राह्मणानां तदनिवेद्यं हरेरहो ।
अन्नं विष्ठा जलं मूत्रं यद्विष्णोरनिवेदितं ॥ ६९ ॥

नित्यं पादोदकं भुंक्ते नैवेद्यञ्च हरेर्द्विज ।
तन्मन्त्रग्रहणं कृत्वा जीवन्मुक्तो हि भारते ॥ ७० ॥
तस्यैव पादरजसा सद्यः पूता वसुन्धरा ।
सर्व्वाण्येव हि तीर्थानि पवित्राणि च नारद ॥ ७१ ॥
स एव शुद्धः सर्व्वेषु सद्यो मुक्तो महीतले ।
पदे पदेऽश्वमेधस्य लभते निश्चितं फलं ॥ ७२ ॥
एवम्भृत्यस्य रक्षार्थं कृष्णो दत्वा सुदर्शनं ।
तथापि सुस्थो न प्रीतस्तं त्यक्तुमक्षमः क्षणं ॥ ७३ ॥
एवम्भूतो दयासिन्धुर्भक्तानुग्रहकातरः ।
अतः सन्तो हि तं त्यक्त्वा न सेवन्ते सुरान्तरं ॥ ७४ ॥
जम्बुद्वीपस्य कथितः स्वर्गान्तेकक्रमेण च ।
अन्येषामपि द्वीपानां श्रूयतामनुवर्त्तनं ॥ ७५ ॥
जम्बुद्वीपात् परः प्लक्षस्ततोऽपि द्विगुणक्रमात ।
इतश्चेक्षुरसोदेन पूर्व्वस्माद्द्विगुणेन च ॥ ७६ ॥
पूर्व्वस्माद्द्विगुणैर्युक्तः सरिच्छैलवनादिकैः ।
नानाविभवभोगादियुक्तः शुद्धोऽतिसुन्दरः ॥ ७७ ॥
तत्र क्रीडन्ति तत्रस्था जरारोगादिवर्ज्जिताः ।
न तत्र कर्मणो जन्म भुंक्ते कर्म पुरातनं ॥ ७८ ॥
भुक्त्वा शुभाशुभं कर्म स्वर्गं वा नरकं पुनः ।
व्रजन्ति ते कर्मणैव मूढाः प्राक्तनतो मुने ॥ ७९ ॥
प्लक्षद्वीपात् परः शाकद्वीपो हि सुन्दरो मुने ।
पूर्व्वस्माद्द्विगुणो युक्तः सुरोदद्विगुणेन च ॥ ८० ॥

शाकद्वीपात् कुशद्वीपो द्विगुणः सुमनोहरः ।
पूर्व्वस्माद्विगुणेनैव घृतोदेन समावृतः ॥ ८१ ॥
कुशद्वीपाच्च द्विगुणाद्वकद्वीपो महामुने ।
वृतो दधिसमुद्रेण क्रमात्तद्विगुणेन च ॥ ८२ ॥
वकद्वीपाच्च द्विगुणः शाल्मलिद्वीप एव च ।
पूर्व्वस्माद्विगुणेनैव क्षीरोदेन समावृतः ॥ ८३ ॥
श्वेतद्वीपश्च क्षीरोदे चोपद्वीपो मनोहरः ।
तत्रैव भगवान् विष्णुः सेवितः सिन्धुकन्यया ॥ ८४ ॥
नारायणांशो वैकुण्ठः शुद्धः सत्त्वगुणाश्रयः ।
श्यामश्चतुर्भुजः शान्तो वनमालाविभूषितः ॥ ८५ ॥
चतुर्भुजैः श्यामवर्णैः पार्षदैः परिवारितः ।
ब्रह्मादिभिस्तूयमानो मुनिभिः सनकादिभिः ॥ ८६ ॥
सुखदो मोक्षदः श्रीमान् प्रदाता सर्व्वसम्पदां ।
द्वीपश्च वर्त्तुलाकारो विशुद्धश्चन्द्रविम्बवत् ॥ ८७ ॥
• योजनायुतविस्तीर्णो दैर्घ्ये च तत्सम· सदा ।
अमूल्यरत्ननिर्माणो वभूव स्वेच्छया हरेः ॥ ८८ ॥
आत्मानं मन्यते तुच्छं विश्वकर्मा निरीक्ष्य यं ।
[7]समावृतं पार्षदानां शिविरैर्लक्षकोटिभिः ॥ ८९ ॥
उद्यानैः कल्पवृक्षाणां [8]संसक्तं शतकोटिभिः ।
शतकोटिभिरन्याभिः कामधेनुभिरावृतं ॥ ९० ॥
पुष्पोद्यानैरावृतैश्च·सरोभिः शतकोटिभिः ।

---

[7] समावृत इति P [8] सयुक्त T

गन्धर्व्वैर्नर्त्तकैः सिद्धैर्योगेन्द्रैरप्सरोगणैः ॥ ९१ ॥
तस्मात् द्वीपाच्च द्विगुणः क्रौञ्चद्वीपो मनोहरः ।
पूर्व्वस्माद्द्विगुणेनैव जलोदेन समावृतः ॥ ९२ ॥
सप्त द्वीपाश्च कथिताः सरित्सागरकाननाः ।
शैलैर्बहुविधैर्युक्ताः सुन्दरैः कन्दरोदरैः ॥ ९३ ॥
तत्परा काञ्चनी भूमिः सर्व्वसत्त्वविवर्जिता ।
तेजःस्वरूपा परमा प्रज्वलन्ती दिवानिशं ॥ ९४ ॥
एवं डिम्बोदरस्थञ्च विश्वं विश्वसृजा कृतं ।
डिम्भस्तल्लोमकूपे च महाविष्णुश्च नारद ॥ ९५ ॥
यावन्ति रोमकूपानि विष्कृतानि हरेरहो ।
तावन्त्येव हि विश्वानि चासंख्यानि च नारद ॥ ९६ ॥
जले शेते महाविष्णुर्जलं तत्प्रतिलोमसु ।
जलोपरि महावायुर्वायोरुपरि कच्छपः ॥ ९७ ॥
कच्छपोपरि शेषश्च गजेन्द्रे मशको यथा ।
सहस्रमूर्द्धः शेषस्य मस्तकस्यैकदेशतः ॥ ९८ ॥
विश्वाधारश्च डिम्भश्च सूर्पे च सर्षपो यथा ।
स एव च महाविष्णुः कृष्णस्य परमात्मनः ॥ ९९ ॥
षोडशांशो भगवतः परस्य प्रकृतेः परः ।
*ब्रह्मादिस्तम्बपर्य्यन्त सर्व्वं मिथ्यैव नारद ॥*
भज सत्यं परं ब्रह्म राधेशं त्रिगुणात् परं ॥ १०० ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे द्वितीयरात्रे भक्तिज्ञाननिरूपणं नाम द्वितीयोऽध्यायः ॥ २ ॥

तृतीयोऽध्याय ॥



श्रीनारद उवाच ॥

श्रुतं नाथ किमद्भुतमपूर्व्वं परमाद्भुतं ।
भक्तिज्ञानं परं शुद्धममलं कोमलं विभो ॥ १ ॥
अतः परं यमपर तीर्थकीर्त्तिगुणान्तरं ।
ज्ञानामृतं रसं शुद्ध कथ्यतां श्रवणामृतं ॥ २ ॥

श्रीमहादेव उवाच ॥

गुणान्तरं तीर्थकीर्त्तेः को वा वक्तुं क्षमो मुने ।
नाहं ब्रह्मा च शेषश्च धर्मः सूर्य्यस्तथैव च ॥ ३ ॥
नारायणर्षिर्भगवान् नरर्षिः कपिलस्तथा ।
सनत्कुमारो वेदाश्चाप्यन्यः को वा न भारती ॥ ४ ॥
परमात्मा यथा दृष्टः सीमा च नभसस्तथा ।
यथा दृष्टं मनश्चापि बुद्धिर्ज्ञानं विवेचनं ॥ ५ ॥
तथा गुणश्च कृष्णस्य सर्व्वो ज्ञातश्च नारद ।
तथापि वक्ति तज्ज्ञान पण्डितश्च यथागमं ॥ ६ ॥
कलाः कलांशास्तस्यापि ये ये सन्तश्च योगिनः ।
ते महान्तश्च पूज्याश्चाप्यश वक्तुञ्च कः क्षमः ॥ ७ ॥
नैव कृष्णात्परो देवो नैव कृष्णात्परः पुमान् ।
नैव कृष्णात्परो ज्ञानी न योगी च ततः परः ॥ ८ ॥

नैव कृष्णात्परः सिद्धस्तत्परोऽपि नहीश्वरः ।
न तत्परश्च जनको विश्वेषां परिपालकः ॥ ९ ॥
न तत्परश्च बलवान् बुद्धिमान् कीर्त्तिमांस्तथा ।
न तत्परः सत्यवादी दयावान् भक्तवत्सलः ॥ १० ॥
न तत्परश्च गुणवान् सुशीलश्च जितेन्द्रियः ।
शुद्धाशयश्च शुद्धश्च न तस्माद्भक्तवत्सलः ॥ ११ ॥
न हि तस्मात्परो धर्मोप्रदाता सर्व्वसम्पदां ।
न हि तस्मात्परः शान्तो लक्ष्मीकान्तात्परश्च कः ॥ १२ ॥
अनन्तकोटिब्रह्माण्डो मोहितो मायया यया ।
सा चातिभीता पुरतो यमेव स्तोतुमक्षमा ॥ १३ ॥
सरस्वती जडीभूता यामेव स्तोतुमक्षमा ।
महालक्ष्मीश्चातिभीता पादपद्मं निसेवते ॥ १४ ॥
प्रत्येकं प्रतिविश्वेषु महाविष्णुश्च लोमसु ।
कोटिशः कोटिशः सन्ति देवा ब्रह्मादयो मुने ॥ १५ ॥
यथा रेणुरसंख्यश्च तथा विश्वानि नारद ।
एतेषामीश्वरश्चैको राधेशः प्रकृतेः परः ॥ १६ ॥
इत्येवं कथितं किञ्चित् किं भूयः श्रोतुमिच्छसि ।
अनिरूप्यः कृष्णगुणो यथा विश्वं यथा रजः ॥ १७ ॥

नारद उवाच ।

राधोद्भवं वद विभो श्रोतु कौतूहलं मम ।
का वा सा कुत उत्पन्ना तत्प्रभावश्च कः शिव ॥ १८ ॥

श्रीमहादेव उवाच ।

सर्व्वादिसर्ग[1]पर्य्यन्तं शृणु नारद मन्मुखात् ।
[2]एकोऽयं न द्वितीयश्च देहो मे तेजसोऽन्तरे ॥ १९ ॥
गोलोको नित्यवैकुण्ठो यथाकाशो यथा दिशः ।
यथा स परमात्मा च सर्व्वेषाञ्जगतामपि ॥ २० ॥
द्विभुजः सोऽपि गोलोके बभ्राम रासमण्डले ।
गोपवेशश्च तरुणो जलदश्यामसुन्दरः ॥ २१ ॥
कोटीन्दुसदृशः श्रीमांस्तेजसा प्रज्वलन्निव ।
अतीवसुखदृश्यश्च कोटिकन्दर्पनिन्दितः ॥ २२ ॥
दृष्ट्वा शून्यं सर्व्वविश्वं ऊर्ध्वञ्चाधसि तुल्यकं ।
स्वच्छन्दसुखश्च श्रीकृष्णः सृष्टिं कर्त्तुं समुद्यतः ॥ २३ ॥
एक ईशः प्रथमतो द्विधारूपो बभूव सः ।
एका स्त्री विष्णुमाया या पुमानेकः स्वयं विभुः ॥ २४ ॥
स च स्वेच्छामयः श्यामः सगुणो निर्गुणः स्वयं ।
तां दृष्ट्वा सुन्दरीं लोलां रतिं कर्त्तुं समुद्यतः ॥ २५ ॥
सा दधाव [3]नचोवाच भीता मनसि कम्पिता ।
तां धृत्वोरसि संस्थाप्य स उवाचातिलज्जितां ॥ २६ ॥
स्त्रीजात्यधिष्ठातृदेवीं मूलप्रकृतिमीश्वरीं ।
तत्प्राणाधिष्ठातृदेवीं तद्वामाङ्गसमुद्भवां ॥ २७ ॥

---

[1] दृष्टान्तमिति P R
[2] एकोऽद्य न द्वितीयश्च दिव्यरोमवेजसोऽन्तरा ।
[3] नवाटाचेति R P

श्रीभगवानुवाच ।

मम प्राणाधिदेवी त्वं स्थिरा भव ममोरसि ।
अत्र स्थानं मया दत्तं तुभ्यं प्राणेश्वरि प्रिये ॥ २८ ॥
प्राणेभ्योऽपि प्रियतमे परमाद्या सनातनि ।
त्यज लज्जां क्षमाशीले नवसङ्गमलज्जिते ॥ २९ ॥
इत्येवमुक्त्वा तां देवीं प्रियां कृत्वा स्ववक्षसि ।
चुचुम्ब गण्डं कठिनमाश्लिष्य स्तनं मुदा ॥ ३० ॥
शय्यां रतिकरीं कृत्वा पयःफेणनिभां शुभां ।
सुगन्धिवायुसंयुक्तां पुष्पचन्दनचर्च्चितां ॥ ३१ ॥
स रेमे रामया सार्द्धं यावद्वै ब्रह्मणो वयः ।
विदग्धया विदग्धेन बभूव सङ्गमः शुभः ॥ ३२ ॥
एतदन्ते तदुदरे वीर्य्याधानं चकार सः ।
गर्भं दधार सा देवी यावद्वै ब्रह्मणो वयः ॥ ३३ ॥
भूरिश्रमेण कृष्णस्य गात्रे घर्मो बभूव ह ।
अधः पपात तद्बिन्दुकणमेव च नारद ॥ ३४ ॥
दधार तज्जलं शून्ये नित्यवायुश्च योगतः ।
तदैव प्लावयामास विश्वे*चाघसि सर्व्वतः ॥ ३५ ॥
रासे संभूय तरुणीमादधार हरेः पुरः ।
तेन राधा समाख्याता पुराविद्भिश्च नारद ॥ ३६ ॥
कृष्णवामांशसम्भूता बभूव सुन्दरी पुरा ।

---

* विश्वेचोरसि ।

यस्याश्चांशांशकलया बभूवुर्देवयोषितः ॥ ३७ ॥
राशब्दोच्चारणाद्भक्तो भक्तिं मुक्तिञ्च राति सः ।
धाशब्दोच्चारणेनैव धावत्येव हरेः पदं ॥ ३८ ॥
सुषाव डिम्भं सा देवी रासे वृन्दावने वने ।
दृष्ट्वा डिम्भं क्रुधा राधा प्रेरयामास पादतः ॥ ३९ ॥
पपात डिम्भस्तोये च द्विखण्डश्च बभूव सः ।
डिम्भान्तरे च यो बालो महाविष्णुः स एव हि ॥ ४० ॥
तल्लोमविवरेष्वेव ब्रह्माण्डानि पृथक् पृथक् ।
प्रत्येकं मायया संख्यडिम्भाश्चाप्यभवन् पुरा ॥ ४१ ॥
विश्वान्येवं हि भूरीणि तेषामभ्यन्तरं मुने ।
बभूवुरेवं क्रमतः प्रत्येकञ्च पृथक् पृथक् ॥ ४२ ॥
इत्येवं कथितं विप्र राधिकाख्यानमेव च ।
गोपनीयं पुराणेषु स्वादु स्वादु पदे पदे ॥ ४३ ॥
जन्ममृत्युजराव्याधिहरं मोक्षकरं परं ।
हरिदास्यप्रदं तस्य भक्तिदं शुभदं शुभं ॥ ४४ ॥
सर्व्वं ते कथितं वत्स यत्ते मनसि वाञ्छितं ।
यथा श्रुतं कृष्णमुखात् किं भूयः श्रोतुमिच्छसि ॥ ४५ ॥

नारद उवाच ॥

किमपूर्व्वं श्रुतं शम्भो योगीन्द्राणां गुरोर्गुरो ।
समासेन सर्व्वमुक्तं व्यासेन वक्तुमर्हसि ॥ ४६ ॥
पुरा त्वयोक्तं देवीनां देवानाञ्चरितं शिव ।
जगत्प्रसूञ्च पृच्छन्ती पार्व्वती पुष्कराश्रमे ॥ ४७ ॥

राधाख्यानं तव नोक्तं कथं वा विदुषां गुरो ।
सर्व्वबीजेश्वरः सर्व्ववेदकारणकारणः ॥ ४८ ॥
मां भक्तमनुरक्तञ्च वद वेदविदां वर ।
कृपां कुरु कृपासिन्धो दीनबन्धो परात्पर ॥ ४९ ॥

श्रीमहादेव उवाच ।

अपूर्व्वं राधिकाख्यानं गोपनीयं सुदुर्लभं ।
सद्यो मुक्तिप्रदं शुद्धं वेदसारं सुपुण्यदं ॥ ५० ॥
यथा ब्रह्मस्वरूपश्च श्रीकृष्णः प्रकृतेः परः ।
तथा ब्रह्मस्वरूपा च निर्लिप्ता प्रकृतेः परा ॥ ५१ ॥
यथा स एव सगुणः काले कर्मानुरोधतः ।
तथैव कर्मणा काले प्रकृतिस्त्रिगुणात्मिका ॥ ५२ ॥
तस्यैव परमेशस्य प्राणेषु रसनासु च ।
बुद्धौ मनसि योगेन प्रकृतेः स्थितिरेव च ॥ ५३ ॥
आविर्भावस्तिरोभावस्तस्याः कालेन नारद ।
न कृत्रिमा च सा नित्या सत्यरूपा यथा हरिः ॥ ५४ ॥
प्राणाधिष्ठात्री या देवी राधारूपा च सा मुने ।
रसनाऽधिष्ठात्री देवी स्वयमेव सरस्वती ॥ ५५ ॥
बुद्ध्यधिष्ठात्री या देवी दुर्गा दुर्गतिनाशिनी ।
अधुना या हिमगिरेः कन्या नाम्ना च पार्व्वती ॥ ५६ ॥
सर्व्वेषामपि देवानां तेजःसु समधिष्ठिता ।
संहन्त्री सर्व्वदैत्यानां देववैरिविमर्द्दिनी ॥ ५७ ॥
स्थानदात्री च तेषाञ्च धात्री त्रिजगतामपि ।

क्षुत् पिपासा दया निद्रा तुष्टिः पुष्टिः क्षमा तथा ॥ ५८
लज्जा भ्रान्तिश्च सर्व्वेषामधिदेवी प्रकीर्त्तिता ।
मनोऽधिष्ठात्री देवी सा सावित्री विप्रजातिषु ॥ ५९
राधावामांशसम्भूता महालक्ष्मीः प्रकीर्त्तिता ।
ऐश्वर्य्याधिष्ठात्रीदेवीश्वरस्यैव हि नारद ॥ ६० ॥
तदंशा सिन्धुकन्या च क्षीरोदमथनोद्भवा ।
मर्त्यलक्ष्मीश्च सा देवी पत्नी क्षीरोदशायिनः ॥ ६१ ॥
तदंशा स्वर्गलक्ष्मीश्च शक्रादीनां गृहे गृहे ।
स्वयं देवी महालक्ष्मीः पत्नी वैकुण्ठशायिनः ॥ ६२ ॥
सावित्री ब्रह्मणः पत्नी ब्रह्मलोके निरामये ।
सरस्वती द्विधाभूता पुरैव मायया हरेः ॥ ६३ ॥
सरस्वती भारती च योगेन सिद्धयोगिनी ।
भारती ब्रह्मणः पत्नी विष्णोः पत्नी सरस्वती ॥ ६४ ॥
रासाधिष्ठात्री देवी च स्वयं रासेश्वरी परा ।
वृन्दावने च सा देवी परिपूर्णतमा सती ॥ ६५ ॥
रासमण्डलमध्ये च रासक्रीडां चकार सा ।
कृष्णचर्वितताम्बुलं चखाद राधिका सती ॥ ६६ ॥
राधा चर्वितताम्बुलं चखाद मधुसूदनः ।
एकाङ्गौ हि तनोर्भेदो दुग्धधारण्ययोर्यथा ॥ ६७ ॥
भेदका नरकं यान्ति यावच्चन्द्रदिवाकरौ ।
तयोर्भेदं करिष्यन्ति ये च निन्दन्ति राधिकां ॥
कुम्भीपाकेन पच्यन्ते यावद्वै ब्रह्मणो वयः ॥ ६८ ॥

नारद उवाच ।

राधामन्त्रेषु यो मन्त्रः प्रधानः पूजितः सतां ।
तन्मे ब्रूहि जगन्नाथ तद्ध्यानं कवचं स्तवं ॥ ६९ ॥
पूजाविधानं तन्मन्त्रं यद्यत्पूजाफलं शिव ।
समासेन कृपासिन्धो मां भक्तमपि कथ्यतां ॥ ७० ॥

श्रीमहादेव उवाच ।

नारायणर्षिणा दत्तं सुभद्रब्राह्मणाय च ।
कवचं यन्मुनिश्रेष्ठ तदेव कवच परं ॥ ७१ ॥
षडक्षरी महाविद्या श्रीकृष्णेनैव सेविता ।
सारभूता च मन्त्रेषु दास्यभक्तिप्रदा हरेः ॥ ७२ ॥
ध्यानं स्तोत्रं सर्वपूज्यं सामवेदोक्तमेव च ।
कार्त्तिकीपूर्णिमाप्राप्तं नराणां जन्मखण्डनं ॥ ७३ ॥
परमानन्दसन्दोहकवचं तत्सुदुर्लभं ।
यद्दत्तं काण्वदेशे च कृष्णेन परमात्मना ॥ ७४ ॥

नारद उवाच ।

षडक्षरीं महाविद्यां वद वेदविदां वर ।
केन केनोपासिता सा किं वा तत्फलमीश्वर ॥ ७५ ॥

श्रीमहादेव उवाच ।

षडक्षरी महाविद्या वेदेषु च सुदुर्लभा ।
निषिद्धा हरिणा पूर्वं वक्तुमेव हि नारद ॥ ७६ ॥
पार्व्वत्या परिपृष्टेन मया नोक्ता पुरा मुने ।
अस्माकं प्राणतुल्या च कृष्णस्य परमात्मनः ॥ ७७ ॥

सर्व्वसिद्धिप्रदा विद्या भक्तिमुक्तिप्रदा हरेः ।
वह्निस्तम्भं जलस्तम्भं मृदाञ्च मनसस्तथा ॥ ७८ ॥
सर्व्वं जानाति भक्तश्च विद्या सिद्धिर्भवेद्यदि ।
यदा नारायणक्षेत्रे दशलक्षं जपेच्छुचिः ॥ ७९ ॥
मन्त्रसिद्धिर्भवेत्तस्य विष्णुतुल्यो भवेन्नरः ।
इत्येवं कथितं वत्स मन्त्रतन्त्रपराक्रमं ॥ ८० ॥
राज्यं देयं शिरो देयं प्राणा देयाश्च नारद ।
पुत्रो देयः प्रिया देया धर्मं देयं सुदुर्लभं ॥ ८१ ॥
ज्ञानं मृत्युञ्जयं नाम यदि देयं महामुने ।
तथापि गोपनीया च न देया सा षडक्षरी ॥ ८२ ॥
ब्रह्मशापभयाद्विप्र तथापि कथयाम्यहं ।
स्नातः शुद्धाम्बरधरो यती संयत एव च ॥ ८३ ॥
गृह्लीयाच्च महाविद्यां कामधेनुस्वरूपिणीं ।
प्रदात्रीं कवितां विद्यां सर्व्वसिद्धिञ्च सम्पदां ॥ ८४ ॥
बलं पुत्रं महालक्ष्मीं निश्चलां शतपौरुषीं ।
भक्तिं दास्यप्रदामन्ते गोलोके वासमीप्सित ॥ ८५ ॥
मन्त्रग्रहणमात्रेण नरो नारायणो भवेत् ।
कोटिजन्मार्जितात् पापान्मुच्यते नात्र संशयः ॥ ८६ ॥
पुरुषाणां शतञ्चैव लीलया च समुद्धरेत् ।
मातरं भ्रातरं पुत्रं पत्नीञ्च बान्धवांस्तथा ॥ ८७ ॥
मन्त्रग्रहणमात्रेण सद्यः पूतो भवेन्नरः ।
यथा सुवर्णं वह्नौ च गङ्गातोये यथा नरः ॥ ८८ ॥

तस्यैव पादरजसो सद्यः पूता वसुन्धरा ।
पवित्राणि च तीर्थानि तुलसी चापि जाह्नवी ॥ ८९ ॥
पदे पदेऽश्वमेधस्य लभते निश्चितं फलं ।
षडक्षरीं महाविद्यां यो गृह्णीयाच्च पुण्यदः ॥ ९० ॥
भूतवर्गात् पराद्वर्णाद्द्वितीयो दीर्घवान्मुने ।
चतुर्वर्गस्तुरीयश्च दीर्घवांश्च फलप्रदः ॥ ९१ ॥
भूतवर्गात्परो वर्णो वाणीयान् सर्व्वसिद्धिदः ।
सर्वशुद्धप्रियान्ता च तस्या वीजादिका स्मृता ॥ ९२ ॥
षडक्षरी महाविद्या कथिता सर्वसिद्धिदा ।
प्रणवाद्या महामाया राधा लक्ष्मी स्वरस्वती ॥ ९३ ॥
कृष्णप्राणाधिका ङेन्ताऽनलजायान्त एव च ।
कल्पवृक्षस्वरूपश्च मन्त्रोऽयं भुवनाक्षरः ॥ ९४ ॥
कुमारपदवीदाता सिद्धो यदि भवेन्नरः ।
कुमारेणार्च्चितो मन्त्रः पाद्मे पाद्मसुतेन च ॥ ९५ ॥
पाद्मेन दत्तः पुत्राय पुष्करे सूर्य्यपर्वणि ।
सप्तलक्षजपेनैव मन्त्रसिद्धिर्भवेन्नृणां ॥ ९६ ॥
सर्वस्तम्भं सर्वसिद्धिं लभते साधकः सदा ।
कृष्णेन दत्तो गोलोके ब्रह्मणे विरजातटे ॥ ९७ ॥
तेन दत्तश्च मह्यञ्च तुभ्यं दत्तो महामुने ।
प्रणवाद्या च सर्वाद्या महामाया सरस्वती ॥ ९८ ॥
कृष्णप्रिया चतुर्थ्यन्ता चित्तभानुप्रियान्तका ।
एकादशाक्षरो मन्त्रो गङ्गयोपासितस्तथा ॥ ९९ ॥

मुक्तिप्रदश्च मन्त्रोऽयं तीर्थपूतश्च सिद्धिदः ।
मनोयायी भवेद्‌च चान्ते याति परां गतिं ॥ १०० ॥
दशलक्षजपेनैव मन्त्रसिद्धिर्भवेन्नृणां ।
प्रणवाद्या च सर्व्वाद्या महालक्ष्मीः सरस्वती ॥ १०१ ॥
सर्व्वाद्या सा चतुर्थ्यन्ता वीतिहोत्रप्रियान्तका ।
*दशाक्षरो महामन्त्रो दास्यभक्तिप्रदो हरेः ॥ १०२ ॥
योगीन्द्रश्च भवेद्‌च मन्त्रसिद्धिर्भवेद्यदि ।
नवलक्षजपेनैव मन्त्रसिद्धिर्भवेन्नृणां ॥ १०३ ॥
सर्वमन्त्रेषु सारश्च मन्त्रराजः प्रकीर्त्तितः ।
तुलस्योपासितो मन्त्रश्चतुर्वर्गफलप्रदः ॥ १०४ ॥
व्यासेनोपासितोऽयञ्च तथा नारायणर्षिणा ।
सारभूतं मयोक्तन्ते परं मन्त्रचतुष्टयं ॥
सुपदं भक्तिदं शुद्धं किं भूयः श्रोतुमिच्छसि ॥ १०५ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे द्वितीयरात्रे हरिभक्तिमाननिरूपणं नाम तृतीयोऽध्यायः ॥ ३ ॥

---

चतुर्थोऽध्यायः ।

श्रीनारद उवाच ।

मन्त्रोपयुक्तं ध्यानञ्च तथा पूजाविधानकं ।
स्तवनं कवचञ्चैव वद वेदविदां वरः ॥ १ ॥

---

* अष्टादशाक्षरो मन्त्र इति ॥

श्रीमहादेव उवाच ॥

ध्यानञ्च श्रूयतां वत्स सामवेदोक्तमेव च ।
श्रीकृष्णेन कृतं पूर्वं सर्वेषामभिवाञ्छितं ॥ २ ॥
[1]श्वेतचम्पकवर्णाभां चन्द्रकोटिसमप्रभां ।
बिभ्रतीं कवरीभारं मालतीमाल्यभूषितां ॥ ३ ॥
वह्निशुद्धांशुकाधानां रत्नभूषणभूषितां ।
ईषद्धास्यप्रसन्नास्यां भक्तानुग्रहकारिकां ॥ ४ ॥
ब्रह्मस्वरूपां परमां कृष्णरामां मनोहरां ।
कृष्णप्राणाधिकां देवीं कृष्णवक्षःस्थलस्थितां ॥ ५ ॥
कृष्णस्तुतां कृष्णकान्तां शान्तां सर्वप्रदां सतीं ।
निर्लिप्तां निर्गुणां नित्यां सत्यां शुद्धां सनातनीं ॥ ६ ॥
गोलोकवासिनीं गोप्त्रीं विधात्रीं धातुरेव तां ।
वृन्दां वृन्दावनचरीं वृन्दावनविनोदिनीं ॥ ७ ॥
तुलस्यधिष्ठातृदेवीं गङ्गार्च्चितपदाम्बुजां ।
सर्वसिद्धिप्रदां सिद्धां सिद्धेशीं सिद्धयोगिनीं ॥ ८ ॥
सुयज्ञयज्ञाधिष्ठात्रीं सुयज्ञाय महात्मने ।
वरदात्रीञ्च वरदां सर्वसम्पत्प्रदां सतां ॥ ९ ॥
गोपीभिः सुप्रियाभिश्च सेवितां श्वेतचामरैः ।
रत्नसिंहासनस्थाञ्च रत्नदर्पणधारिणीं ॥ १० ॥
क्रीडापङ्कजहस्ताभ्यां परां कृष्णप्रियां भजे ।

---

[1] श्वेतचन्द्रेति ॥

ध्यात्वा शिरसि पुष्पञ्च दत्वा प्रक्षाल्य हस्तकं ॥ ११ ॥
पुनर्ध्यात्वा च भक्त्या च दद्यात्तस्यै प्रसूनकं ।
तां षोडशोपचारेण संपूज्य परमेश्वरीं ॥ १२ ॥
पुष्पाञ्जलित्रयं दत्वा स्तुत्वा च कवचं पठेत् ।
पूजाक्रमं परीहारं वत्स मत्तो निशामय ॥ १३ ॥
मन्त्रं समुपचाराणां शृण्वनुक्रमशेन च ।
पुनर्ध्यात्वा यथा देवीं पुष्पाञ्जलियुतो भवेत् ॥ १४ ॥
इमं मन्त्रं परीहारं कुरुते भक्तिपूर्वकं ।
नारायणि महामाये विष्णुमाये सनातनि ॥ १५ ॥
प्राणाधिदेवि कृष्णस्य मामुद्धर भवार्णवात् ।
संसारसागरे घोरे भीतं मां शरणागतं ॥ १६ ॥
प्रपन्नं पतितं मातर्मामुद्धर हरिप्रिये ।
असंख्ययोनिभ्रमणादज्ञानान्धतमोऽन्वितं ॥ १७ ॥
ज्ञानाङ्गिज्ञानदीपैश्च मां सुवर्त्म प्रदर्शय ।
सर्वेभ्योऽपि विनिर्मुक्तं कुरु राधे सुरेश्वरि ॥ १८ ॥
मां भक्तमनुरक्तञ्च कातरं यमताडनात् ।
त्वत्पादपद्मयुगले पाद्मपद्मालयार्च्चिते ॥ १९ ॥
देहि मह्यं परां भक्तिं कृष्णेन परिसेविते ।
स्निग्धदूर्वाङ्कुरैः शुक्लपुष्पैः कुसुमचन्दनैः ॥ २० ॥
कृष्णदत्तार्घ्यशोभाढ्ये भक्तिमाध्वीकसंकुले ।
आसनं भास्वदुत्तुङ्गममूल्यं रत्ननिर्मितं ॥ २१ ॥
मया निवेदितं भक्त्या गृहाण परमेश्वरि ।

नानातीर्थोद्भवं पुण्यं शीतलञ्च सुनिर्मलं ॥ २२ ॥
मया निवेदितं भक्त्या पाद्यञ्च प्रतिगृह्यतां ।
स्निग्धदूर्व्वाचतं शुक्लपुष्पकुङ्कुमचन्दनं ॥ २३ ॥
तीर्थतोयान्वितं देवि गृहाणार्घ्यं सुरेश्वरि ।
वह्निशुद्धं वस्त्रयुग्मममूल्यमतुलं परं ॥ २४ ॥
मया निवेदितं भक्त्या गृहाण जगदम्बिके ।
ग्रथितं सूक्ष्मसूत्रेण पारिजातविनिर्मितं ॥ २५ ॥
जन्ममृत्युजराव्याधिहरे माल्यं गृहाण मे ।
कस्तूरीकुङ्कुमाक्तञ्च सुगन्धि स्निग्धचन्दनं ॥ २६ ॥
राधे मातर्निराबाधे मद्गृहाणानुलेपनं ।
शुक्लपुष्पसमूहञ्च सुगन्धि चन्दनान्वितं ॥ २७ ॥
मया निवेदितं भक्त्या पुष्पं देवि प्रगृह्यतां ।
वनस्पतिरसो दिव्यो गन्धवस्तुभिरन्वितः ॥ २८ ॥
मया निवेदितो भक्त्या धूपोऽयं प्रतिगृह्यतां ।
अन्धकारभयध्वंसी माङ्गल्यो विश्वपावनः ॥ २९ ॥
मया निवेदितो भक्त्या दीपोऽयं प्रतिगृह्यतां ।
सुधापूर्णं रत्नकुम्भं शतकञ्च सुदुर्लभं ॥ ३० ॥
माध्वीककुम्भलचञ्च नैवेद्यं देवि गृह्यतां ।
मिष्टान्नस्वस्तिकानाञ्च लक्षपुञ्जं मनोहरं ॥ ३१ ॥
शर्करारागिलचञ्च नैवेद्यं देवि गृह्यतां ।
संस्कृतं पायसं पिष्टं शाल्यन्नं व्यञ्जनान्वितं ॥ ३२ ॥
शर्करादधिदुग्धाक्तं नैवेद्यं देवि गृह्यतां ।

फलानाञ्च सुपक्कानामाम्रादीनां विलक्षकं ॥ ३३ ॥
राशीनाञ्च मया दत्तं भक्त्या च देवि गृह्यतां ।
दधिकुल्याशतञ्चैव मधुकुल्याशतन्तथा ॥ ३४ ॥
घृतकुल्याशतञ्चैव गृहाण परमेश्वरि ।
दुग्धकुल्या शतं रम्यं गुडकुल्या शतं तथा ॥ ३५ ॥
मया निवेदितं भक्त्या गृहाण परमेश्वरि ।
नानातीर्थोद्भवं रम्यं सुगन्धिवस्तुवासितं ॥ ३६ ॥
मया निवेदितं भक्त्या शीततोयं गृहाण मे ।
पयःफेणनिभा शय्या रत्नेन्द्रसारनिर्मिता ॥ ३७ ॥
मया निवेदिता भक्त्या तां गृहाण सुरेश्वरि ।
भूषणानि च रम्याणि सद्रत्ननिर्मितानि च ॥ ३८ ॥
मया निवेदितान्येव गृहाण परमेश्वरि ।
ताम्बुलञ्च परं रम्यं कर्पूरादिसुवासितं ॥ ३९ ॥
मया निवेदितं भक्त्या गृहाण परमेश्वरि ।
सिन्दूरं शोभनं राधे योषितां सुप्रियं सदा ॥ ४० ॥
मया निवेदितं भक्त्या सिन्दूरं प्रतिगृह्यतां ।
परं सुपक्वतैलञ्च सुगन्धिवस्तुसंस्कृतं ॥ ४१ ॥
मया निवेदितं भक्त्या तैलञ्च प्रतिगृह्यतां ।
पुष्पाञ्जलिचयं दत्वा दासीवर्गं प्रपूजयेत् ॥ ४२ ॥
पाद्यादिकं पृथग्दत्वा प्रणमेद्दण्डवद्भुवि ।
मालतीं माधवीं रत्नां रत्नमालावतीं सतीं ॥ ४३ ॥
चम्पावतीं मधुमतीं सुशीलां वृन्दमालिकां ।

चन्द्रावलीं चन्द्रमुखीं पद्मां पद्ममुखीं शुभां ॥ ४४ ॥
कमलां कालिकां कृष्णप्रियां विद्याधरीं तथा ।
सम्पूज्य भक्त्या सर्व्वास्ता वटुवर्गं प्रपूजयेत् ॥ ४५ ॥
सानन्दं परमानन्दं सुमित्रं सन्तनुं तथा ।
एतान् सम्पूज्य प्रत्येकं स्तोत्रञ्च कवचं पठेत् ॥ ४६ ॥
जपेत् षडक्षरीं विद्यां श्रीकृष्णेनैव सेवितां ।
यथाशक्ति भक्तियुक्तो दण्डवत् प्रणमेत् सदा ॥ ४७ ॥
स्तोत्रञ्च सामवेदोक्तं प्रपठेद्भक्तिसंयुतः ।
राधा रासेश्वरी रम्या रामा च परमात्मनः ॥ ४८ ॥
रासोद्भवा कृष्णकान्ता कृष्णवक्षःस्थलस्थिता ।
कृष्णप्राणाधिदेवी च महाविष्णोः प्रसूरपि ॥ ४९ ॥
सर्व्वाद्या विष्णुमाया च सत्या नित्या सनातनी ।
ब्रह्मस्वरूपा परमा निर्लिप्ता निर्गुणा परा ॥ ५० ॥
वृन्दा वृन्दावने सा च विरजातटवासिनी ।
गोलोकवासिना गोपी गोपीशा गोपमातृका ॥ ५१ ॥
सानन्दा परमानन्दा नन्दनन्दनकामिनी ।
वृषभानुसुता शान्ता कान्ता पूर्णतमा च सा ॥ ५२ ॥
काम्या कलावती कन्या तीर्थपूता सती शुभा ।
सप्तविंशञ्च नामानि वेदोक्तानि शुभानि च ॥ ५३ ॥
सारभूतानि पुण्यानि सर्व्वनामसु नारद ।
यः पठेत् संयुतः शुद्धो विष्णुभक्तो जितेन्द्रियः ॥ ५४ ॥
इहैव निश्चलां लक्ष्मीं लब्ध्वा याति हरेः पदं ।

हरिभक्तिं हरेर्दास्यं लभते नात्र संशयः ॥ ५५ ॥
भक्तो लक्षजपेनैव स्तोत्रसिद्धो भवेद्ध्रुवं ।
सिद्धस्तोत्रो यदि भवेत् सर्व्वसिद्धेश्वरो भवेत् ॥ ५६ ॥
वह्निस्तम्भं जलस्तम्भं मनस्तम्भं हृदस्तथा ।
मनोयायित्वमिष्टञ्च लभते नात्र संशयः ॥ ५७ ॥
स्तोत्रस्मरणमात्रेण जीवन्मुक्तो भवेन्नरः ।
पदे पदेऽश्वमेधस्य लभते निश्चितं फलं ॥ ५८ ॥
कोटिजन्मार्ज्जितात् पापात् ब्रह्महत्याशतादपि ।
स्तोत्रस्मरणमात्रेण मुच्यते नात्र संशयः ॥ ५९ ॥
मृतवत्सा काकवन्ध्या महावन्ध्या प्रसूयते ।
शृणोति वर्षमेकं या शुद्धा स्विन्नान्नभोजिनी ॥ ६० ॥
शृणोति मासमेकं यः सर्व्वाभीष्टं लभेन्नरः ।
सामवेदकुमार तमित्याह कमलोद्भवः ॥ ६१ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे द्वितीयरात्रे शिवनारदसंवादे भक्तिज्ञानकथने राधाप्रश्नकथनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

पञ्चमोऽध्यायः ।



श्रीनारद उवाच ।

सर्व्वं श्रुतं जगन्नाथ यद्यन्मनसि वाञ्छितं ।
अधुना श्रोतुमिच्छामि राधिकाकवचं परं ॥ १ ॥

श्रीमहादेव उवाच ।

क्षमस्व ब्रह्मणः पुत्र देवर्षे मुनिपुङ्गव ।
यन्निषिद्धं भगवता कृष्णेन परमात्मना ॥ २ ॥
कथं वक्ष्यामि हे वत्स सुगुप्तं कवचं मुने ।
कण्ठे दधार भगवान् भक्त्या रत्नपुटेन यत् ॥ ३ ॥
परमानन्दसन्दोहकवचञ्च सुदुर्लभं ।
षडक्षरीं महाविद्यां नित्यभक्त्या जपेद्धरिः ॥ ४ ॥
नित्यं प्रपूजयेन्नित्यं नित्यः सत्यः परात्परः ।
सा पूजयेत् प्रभुं नित्यं जपेदेका दशाक्षरं ॥ ५ ॥
मह्यञ्च कवचं दत्त्वा निषिद्धं परमात्मना ।
इदमेवेति कवचं दत्तं तेनैव ब्रह्मणे ॥ ६ ॥
धर्माय ब्रह्मणा दत्तं तेन नारायणाय च ।
नारायणेन कण्ठस्थं शुभद्राय ददौ पुरा ॥ ७ ॥
क्षमस्व कथितुं नालं क्षमस्व भगवन्मुने ।
गुरुणा च निषिद्धञ्च न वक्तव्यं कदाचन ॥ ८ ॥

श्रीनारद उवाच ।

मां भक्तमनुरक्तञ्च नाथ मा कुरु वञ्चनां ।
त्वमेव कृष्णस्त्वं शम्भुर्दयोर्भेदो न सान्नि च ॥ ९ ॥
परतन्त्रो निषिद्धञ्च वाक्यं कथितुमक्षमः ।
शृणोति कस्य वा वाक्यं यः स्वतन्त्रः स्वयं प्रभुः ॥ १० ॥
यदि मां कवचं नाथ न वक्ष्यसि सुदुर्लभं ।
देहं त्यक्त्वा ब्रह्महत्यां दास्यामि तुभ्यमीश्वर ॥ ११ ॥

श्रीमहादेव उवाच ।

सद्वंशजातः [1]शिष्यश्च शुद्धः सुब्राह्मणः सुधीः ।
मन्यते कृष्णतुल्यञ्च गुरुं परमधार्म्मिकः ॥ १२ ॥
देवमन्यं कृष्णतुल्यं यो ब्रवीति नराधमः ।
ब्रह्महत्याञ्च लभते महामूर्खो न संशयः ॥ १३ ॥
परमात्मा स्वयं कृष्णो निर्गुणः प्रकृतेः परः ।
ततो देवास्तदंशाश्च सगुणाः प्राकृताः स्मृताः ॥ १४ ॥
सर्व्वे जन्याः कृत्रिमाश्च पुरा ब्रह्मादयः सुराः ।
सर्व्वेषां जनकः कृष्णः परमाद्यः परात्परः ॥ १५ ॥
शृणु वक्ष्यामि विप्रेन्द्र राधिकाकवचं शुभं ।
परमानन्दसन्दोहाभिधमिष्टं सुदुर्लभं ॥ १६ ॥
कृष्णेन दत्तं मह्यञ्च शतशृङ्गे च पर्व्वते ।
निरामये च गोलोके पुण्ये वृन्दावने वने ॥ १७ ॥
राधिकासन्निधाने च शोभने रासमण्डले ।
गोपगोपीकदम्बैश्च वेष्टिते समभीप्सिते ॥ १८ ॥
अहं तुभ्यं प्रदास्यामि प्रवक्तव्यं न कस्यचित् ।
यद्धृत्वा पाठनाद्भक्तो जीवन्मुक्तो भवेद्ध्रुवं ॥ १९ ॥
ब्रह्महत्यादिपापान्मुच्यते नात्र संशयः ।
कोटिजन्मार्ज्जितात् पापादुपदेशात् प्रमुच्यते ॥ २० ॥
अश्वमेधसहस्रञ्च राजसूयशतं तथा ।
विप्रेन्द्र कवचस्यास्य कलां नार्हन्ति षोडशीं ॥ २१ ॥

[1] शिष्येति R.P

शिष्याय विष्णुभक्ताय साधकाय प्रकाशयेत् ।
शठाय परशिष्याय दत्त्वा मृत्युं लभेन्नरः ॥ २२ ॥
विप्रेन्द्र कवचस्यास्य ऋषिर्नारायणः स्वयं ।
कृष्णस्य भक्तिदास्ये च विनियोगः प्रकीर्त्तितः ॥ २३ ॥
सर्व्वाद्या मे शिरः पातु केशं केशवकामिनी ।
भालं भगवती पातु लोला लोचनयुग्मकं ॥ २४ ॥
नासां नारायणी पातु सानन्दा चाधरौष्ठकं ।
जिह्वां पातु जगन्माता दन्तं दामोदरप्रिया ॥ २५ ॥
कपोलयुग्मं कृष्णेशा कण्ठं कृष्णप्रियाऽवतु ।
कर्णयुग्मं सदा पातु कालिन्दीकूलवासिनी ॥ २६ ॥
वसुन्धरेशा वक्षो मे परमा सा पयोधरं ।
पद्मनाभप्रिया नाभिं जठरं जाह्नवीश्वरी ॥ २७ ॥
नित्या नितम्बयुग्मं मे कङ्कालं कृष्णसेविता ।
परात्परा पातु पृष्ठं सुश्रोणी श्रोणिकायुगं ॥ २८ ॥
परमाद्या पादयुग्मं नखरांश्च नरोत्तमा ।
सर्व्वाङ्गं मे सदा पातु सर्व्वेशा सर्व्वमङ्गला ॥ २९ ॥
पातु रासेश्वरी राधा स्वप्ने जागरणे च मां ।
जले स्थले चान्तरीचे सेविता जलशायिनी ॥ ३० ॥
प्राच्यां मे सततं पातु परिपूर्णतमप्रिया ।
वह्नीश्वरी वह्निकोणे दक्षिणे दुःखनाशिनी ॥ ३१ ॥
नैर्ऋते सततं पातु नरकार्णवतारिणी ।
वारुणे वनमालीशा वायव्यां वायुपूजिता ॥ ३२ ॥

कौबेरे मां सदा पातु कूर्म्मेण परिसेविता ।
ऐशान्यामीश्वरी पातु शतशृङ्गनिवासिनी ॥ ३३ ॥
वने वनचरी पातु वृन्दावनविनोदिनी ।
सर्व्वत्र सन्ततं पातु सर्व्वेशा विरजेश्वरी ॥ ३४ ॥
प्रथमे पूजिता या च कृष्णेन परमात्मना ।
षडक्षर्य्या विद्यया च सा मां रक्षतु कातरं ॥ ३५ ॥
द्वितीये पूजिता देवी शम्भुना रासमण्डले ।
नानासम्भृतसम्भारैर्माया प्रकृतिरीश्वरी ॥ ३६ ॥
सप्ताक्षर्य्या विद्यया च पूज्यया प्रणवाद्यया ।
तृतीये पूजिता देवी ब्रह्मणा परमादरं ॥ ३७ ॥
श्रीवीजयुक्तया भक्त्या चाष्टाक्षर्य्या च विद्यया ।
चतुर्थे पूजिता देवी शेषेण विघ्ननाशिनी ॥ ३८ ॥
तेनैव सेविता विद्या मायायुक्ता नवाक्षरी ।
विद्या सा चापि धर्म्मेण सेविता परमेश्वरी ॥ ३९ ॥
धर्म्मेण दत्ता सा विद्या पुत्र नारायणर्षये ।
नराय शुद्धभक्ताय सा च विद्या मनोहरा ॥ ४० ॥
नवाक्षरी महाविद्या कामदेवेन सेविता ।
तदधीनं सर्व्वविश्वं पूज्यया विद्यया यया ॥ ४१ ॥
संप्राप दाहिकां शक्तिं वह्निश्च विद्यया यया ।
नवाक्षरी महाविद्या वायुना परिसेविता ॥ ४२ ॥
विश्वेषां प्राणरूपश्च पूज्यया विद्यया यया ।
सर्व्वाधारश्च पूज्यश्च बलवान् सर्व्वतोऽभवत् ॥ ४३ ॥

शेषाधारस्य कूर्मस्य पूज्यया विद्यया यया।
विश्वाधारस्य शेषस्य तया च विद्यया मुने॥ ४४ ॥
धराधरा च[1] सर्व्वेषां तया च विद्यया सदा।
तथैव विद्यया शुद्धा गङ्गा भुवनपावनी॥ ४५ ॥
तथैव तुलसी शुद्धा तीर्थपूता बभूव सा।
तया स्वाहा वह्निजाया पितॄणां कामिनी स्वधा॥ ४६ ॥
लक्ष्मीर्माया कामवाणी सर्व्वाद्या प्रणवादिका।
रासेश्वरी राधिका सा ङेन्ता वह्निप्रियान्तका॥ ४७ ॥
तत्षोडशी महाविद्या परिपूर्णतमा श्रुतौ।
कामधेनुस्वरूपा सा सर्व्वसिद्धिप्रदायिनी॥ ४८ ॥
पुरा सनत्कुमारेण षोडशी परिसेविता।
सनकेन सनन्देन तथा सनातनेन च॥ ४९ ॥
शुक्रेण गुरुणा पूज्या सिद्धा व्यासेन सेविता।
पपौ समुद्रं सोऽगस्त्यः पूज्यया विद्यया यया॥ ५० ॥
रासेश्वरी ङेन्तहीना षोडश्या मुनिपुङ्गव।
दधीचिना सेविता सा विद्या च द्वादशाक्षरी॥ ५१ ॥
तया तदस्थि चाव्यर्थमस्त्रमेव बभूव ह।
चतुर्द्दशेन्द्रावच्छिन्नं मुनिरासीन्निरापदः॥ ५२ ॥
स्वेच्छामृत्युर्मुनिश्चैव जितः कालोऽपि विद्यया।
देवानां प्रार्थनेनैव तत्याज स कलेवरं॥ ५३ ॥

---

[1] धाराचेति' R

मत्तो मन्त्रं गृहीत्वा च जजाप पुष्करे मुनिः ।
शतवर्षं तपस्तप्त्वा ददर्श परमेश्वरीं ॥ ५४ ॥
दत्त्वा सा स्वपदं तस्मै गोलोकञ्च जगाम सा ।
देहं त्यक्त्वा च स मुनिर्गोलोकं प्रययौ पुरा ॥ ५५ ॥
इत्येवं कथितं वत्स कवचं परमाद्भुतं ।
परमानन्दसन्दोहं वेदेषु च सुदुर्लभं ॥ ५६ ॥
श्रीकृष्णेनैव कथितं मह्यं भक्ताय भक्तितः ।
मया तुभ्यं प्रदत्तञ्च प्रवक्तव्यं न कस्यचित् ॥ ५७ ॥
गुरुमभ्यर्च्य विधिना वस्त्रालङ्कारचन्दनैः ।
नमस्कृत्य परं भक्त्या कवचं धारयेत् सुधीः ॥ ५८ ॥
पठित्वा कवचं दिव्यं परं सादरपूर्व्वकं ।
गुरवे दक्षिणां दत्त्वा लभेत्तस्य शुभाशिषं ॥ ५९ ॥
महामूढो नोपदिष्टः कवचं धारयेत् पठेत् ।
निष्फलं तद्भवेत् सर्व्वं शतलक्षं जपेद्यदि ॥ ६० ॥
उपदिष्टो यदि पठेत् धारयेत् कण्ठदेशतः ।
जले वह्नौ च शस्त्रास्त्रे मरणं नो भवेद्ध्रुवं ॥ ६१ ॥
कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः ।
अनेन कवचेनैव शङ्खचूडः प्रतापवान् ॥ ६२ ॥
युयुधे स मया सार्द्धं वर्षञ्च नर्मदातटे ।
न विद्धो मम शूलेन दत्त्वा च कवचं स्रुतः ॥ ६३ ॥
सर्व्वाण्येव हि दानानि व्रतानि नियमानि च ।
तपांसि यज्ञाः पुण्यानि तीर्थान्यनशनानि च ॥ ६४ ॥

सर्व्वाणि कवचस्यास्य कलां नार्हन्ति षोडशीं ।
इदं कवचमज्ञात्वा भजेद्यः परमेश्वरीं ॥ ६५ ॥
शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ।
इत्येवं कथितं सर्व्वं राधिकाकवच मुने ॥ ६६ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे शिवनारदसंवादे द्वितीयरात्रे भक्तिज्ञानकथने कवचप्रकाशन नाम पञ्चमोऽध्यायः ॥ ५ ॥

षष्ठोऽध्यायः ।



श्रीमहादेव उवाच ।

जगन्मातुरुपाख्यानं तुभ्यञ्च कथितं मया ।
सुदुर्लभं सुगुप्तञ्च वेदेषु च चतुर्षु च ॥ १ ॥
पुराणेष्वितिहासेषु पञ्चरात्रेषु पञ्चसु ।
अतीव पुण्यदं शुद्धं सर्व्वपापप्रनाशनं ॥ २ ॥
संक्षेपेणैव कथितं राधाख्यानं मनोहरं ।
कापिलेये पञ्चरात्रे विस्तीर्णमतिसुन्दरं ॥ ३ ॥
नारायणेन कथित मुनये कपिलाय च ।
सिद्धक्षेत्रे पुण्यतमे प्रत्यक्षं मम सन्निधौ ॥ ४ ॥
तत्रोक्तं हरिणा सार्द्धं शुश्राव कमलोद्भवः ।
शुश्रुवुर्मुनयः सर्व्वे चेदमेव परं वचः ॥ ५ ॥
आदौ समुच्चरेद्राधां पश्चात् कृष्णञ्च माधवं ।
विपरीतं यदि पठेत् ब्रह्महत्यां लभेद्ध्रुवं ॥ ६ ॥

श्रीकृष्णो जगतां तातो जगन्माता च राधिका।
पितुः शतगुणे माता वन्द्या पूज्या गरीयसी॥ ७॥
दैवदोषेण महता ये च निन्दन्ति राधिका।
वामाचाराश्च मूर्खाश्च पापिनश्च हरिद्विषः॥ ८॥
कुम्भीपाके तप्ततैले तिष्ठन्ति ब्रह्मणः शत।
इहैव तद्वंशहानिः सर्व्वनाशाय कल्पते॥ ९॥
भवेद्रोगी च पतितो विघ्न तस्य पदे पदे।
हरिणोक्त ब्रह्मक्षेत्रे मया च ब्रह्मणा श्रुत॥ १०॥
त्रैलोक्यपावनीं राधां सन्तोऽसेवन्त नित्यशः।
यत्पादपद्मे भक्त्याऽर्घ्यं नित्यं कृष्णो ददाति च॥ ११॥
यत्पादपद्मनखरे पुण्ये वृन्दावने वने।
सुस्निग्धालक्तकरस प्रेम्ना भक्त्या ददौ परा॥ १२॥
राधाचर्व्वितताम्बुलं चखाद मधुसूदनः।
द्वयोश्चैको न भेदश्च दुग्धधावल्ययोर्यथा॥ १३॥
श्रीकृष्णोरसि या राधा यद्वामांशेन सम्भवा।
महालक्ष्मीश्च वैकुण्ठे सा च नारायणोरसि १४॥
सरस्वती सा च देवी विदुषा जननी परा।
क्षीरोदसिन्धुकन्या सा विष्णुरसि च मायया॥ १५॥
सावित्री ब्रह्मणो लोके ब्रह्मवक्षःस्थलस्थिता।
पुरा सुराणां तेज सु साविर्भूत्वा दया हरे.॥ १६॥
स्वयं मूर्त्तिमती भूत्वा जघान दैत्यसङ्घकान्।
ददौ राज्यं महेन्द्राय कृत्वा निष्कण्टकं पदं॥ १७॥

कालेन सा भगवती विष्णुमाया सनातनी ।
बभूव दक्षकन्या च परं कृष्णाज्ञया मुने ॥ १८ ॥
त्यक्ता देहं पितुर्यज्ञे ममैव निन्दया मुने ।
पितॄणां मानसी कन्या मेना कन्या बभूव सा ॥ १९ ॥
आविर्भूता पर्व्वते सा तेनेयं पार्व्वती सती ।
सर्व्वशक्तिस्वरूपा सा दुर्गा दुर्गतिनाशिनी ॥ २० ॥
बुद्धिस्वरूपा परमा कृष्णस्य परमात्मनः ।
सम्पद्रूपेन्द्रगेहे सा स्वर्गलक्ष्मीस्वरूपिणी ॥ २१ ॥
मर्त्ये लक्ष्मी राजगेहे गृहलक्ष्मीर्गृहे गृहे ।
पृथक् पृथक् च सर्व्वत्र ग्रामेषु ग्रामदेवता ॥ २२ ॥
जले सत्यस्वरूपा सा गन्धरूपा च भूमिषु ।
शब्दरूपा च नभसि शोभारूपी निशाकरे ॥ २३ ॥
प्रभारूपा भास्करे सा नृपेन्द्रेषु च सर्व्वतः ।
वह्नौ सा दाहिका शक्तिः सर्व्वशक्तिश्च जन्तुषु ॥ २४ ॥
सृष्टिकाले च सा देवी मूलप्रकृतिरीश्वरी ।
माता भवेन्महाविष्णोः स एव च महान् विराट् ॥ २५ ॥
यस्य लोमसु विश्वानि तेन वासुः प्रकीर्त्तितः ।
तस्य देवोऽपि श्रीकृष्णो वासुदेव इतीरितः ॥ २६ ॥
महतो वै सृष्टिविधौ चाहङ्कारोऽभवन्मुने ।
ततो हि रूपतन्मात्रं शब्दतन्मात्र इत्यतः ॥ २७ ॥
ततो हि स्पर्शतन्मात्रमेवं सृष्टिक्रम मुने ।
सृष्टिबीजस्वरूपा सा न हि सृष्टिस्तया विना ॥ २८ ॥

विना मृदं घटं कर्तुं कुलालश्च न च क्षमः ।
विना स्वर्णं स्वर्णकारः कुण्डलं कर्तुमक्षमः ॥ २९ ॥
एवं ते कथितं सर्व्वमाख्यानमतिदुर्लभं ।
जन्ममृत्युजराव्याधिशोकदुःखहरं परं ॥ ३० ॥
आराध्य सुचिरं कृष्णं यद्यत्कार्य्यं भवेन्नृणां ।
राधोपासनया तच्च भवेत् स्वल्पेन कालतः ॥ ३१ ॥
तस्यापि मायया सार्द्धं सर्व्वं विश्वं महामुने ।
विष्णुमाया भगवती कृपां यं यं करोति च ॥ ३२ ॥
स च प्राप्नोति कृष्णञ्च तद्भक्तिदास्यमीप्सितं ।
इत्येवं कथितं सर्व्वं परञ्च सुखमोक्षदं ॥
नीतिसारञ्च शुभदं किं भूयः श्रोतुमिच्छसि ॥ २४ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे द्वितीयरात्रे शिवनारदसंवादे भक्तिज्ञानकथने राधाप्रशंसा नाम षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ॥



श्रीनारद उवाच ।

भक्तिज्ञानं श्रुतं नाथ परमाद्भुतमीप्सितं ।
मुक्तिज्ञानविधानञ्च विस्तीर्णं वक्तुमर्हसि ॥ १ ॥

श्रीमहादेव उवाच ।

लीनता हरिपादाब्जे मुक्तिरित्यभिधीयते ।
इदमेव हि निर्व्वाणं वैष्णवानामसम्मतं ॥ २ ॥

सालोक्यसार्ष्टिसामीप्यसारूप्यमित्यतः क्रमात्।
भोगरूपञ्च सुखदमिति मुक्तिचतुष्टयं ॥ ३ ॥
श्रीहरेर्भक्तिदास्यञ्च सर्व्वमुक्तेः परं मुने।
वैष्णवानामभिमतं सारात्सारं परात्परं ॥ ४ ॥
काश्याञ्च मरणं पुत्र परं निर्व्वाणकारणं।
दक्षकर्णे मृत्युकाले मयोक्तं मन्त्रमेव च ॥ ५ ॥
निर्व्वाणमोचदं वत्स कर्ममूलनिकृन्तनं।
निर्व्वाणमोक्षमेवेदं मोक्षविद्भिः प्रकीर्त्तितं ॥ ६ ॥
गङ्गायाञ्च जले मुक्तिः क्षेत्रे नारायणे मुने।
ज्ञानतश्चेत् त्यजेत् प्राणान् कृष्णस्मरणपूर्व्वकं ॥
जले स्थले चान्तरीक्षे गङ्गासागरसङ्गमे ॥ ७ ॥

नारद उवाच।

प्राणिनां येन मन्त्रेण मुक्तिर्भवति शाश्वती।
वाराणस्यां त्वयोक्तञ्च तन्मां कथितुमर्हसि ॥ ८ ॥
अन्यथाऽहं कृपासिन्धो सद्यस्त्यक्ष्ये कलेवरं।
मां भक्तमनुरक्तञ्च नाथ मा कुरु वञ्चनां ॥ ९ ॥

श्रीमहादेव उवाच।

गुप्तं वेदपुराणेषु चेतिहासेषु नारद।
पञ्चरात्रेषु सर्व्वेषु कथं वक्ष्यामि मां वद ॥ १० ॥
अहं हत्याभयेनैव वक्ष्यामि गोपनं परं।
श्रूयतां दक्षकर्णे च न वक्तव्यं कदाचन। ११ ॥

मन्त्रोऽयं मन्त्रसाराद्यः सर्व्वाद्यवीजमध्यमः ।
पञ्चवर्गाद्द्वितीयश्च वर्णश्च गुरुमान् भवेत् ॥ १२ ॥
पञ्चमे पञ्चमो वर्णो विष्णुमान् ङेन्त एव सः ।
जगत्पूतप्रियान्तश्च मन्त्रः सप्ताक्षरो मुने ॥ १३ ॥
प्रयागे मुण्डनञ्चैव परं निर्व्वाणकारणं ।
दोलायमानं गोविन्दं पुण्ये वृन्दावने वने ॥ १४ ॥
दृष्टिमात्रेण विप्रेन्द्र परं निर्व्वाणकारणं ।
निर्व्वाणं दृष्टिमात्रेण मञ्चस्थं मधुसूदनं ॥ १५ ॥
रथस्थं वामनञ्चैव निर्व्वाणं दृष्टिमात्रतः ।
कार्त्तिकीपूर्णिमायाञ्च राधार्च्चादृष्टिपूजनं ॥ १६ ॥
यत्र तत्र न नियमो परं निर्व्वाणकारणं ।
परं शिवचतुर्द्दश्यां शिवं संस्थाप्य पूजनं ॥ १७ ॥
तद्दिनेऽनशनं विप्र परं निर्व्वाणकारणं ।
शुभाशुभञ्च यत्कर्म तत्तत्कर्मनिकृन्तनं ॥ १८ ॥
स्मरणं श्रीहरेः पादपद्मं निर्व्वाणकारणं ।
वैशाख्यां पुष्करस्नानं परं निर्व्वाणकारणं ॥ १९ ॥
गङ्गासागरतोये च मृत्युर्निर्व्वाणकारणं ।
कार्त्तिक्याञ्च शिलादानं पृथ्वीविपुलदानकं ॥ २० ॥
कार्त्तिके तुलसीदानं परं निर्व्वाणकारणं ।
ब्रह्मसंस्थापनञ्चैव परं निर्व्वाणकारणं ॥ २१ ॥
कन्यादानं वैष्णवे च परं निर्व्वाणकारणं ।
परं निर्वाणवीजञ्च वैष्णवोच्छिष्टभक्षणं ॥ २२ ॥

विष्णुमन्त्रोपासकानां द्विजानाञ्च द्विजर्षभ ।
तत्पादोदकभक्षञ्च परं निर्वाणकारणं ॥ २३ ॥
स्वर्णशृङ्गनिबद्धानां गवां लक्षप्रदानकं ।
पृथ्वीदानञ्च विप्रेन्द्र परं निर्वाणकारणं ॥ २४ ॥
परे नारायणक्षेत्रे लक्षनाम हरेर्जपेत् ।
नाशनं सर्व्वपापानां परं निर्वाणकारणं ॥ २५ ॥
शिवलक्षार्च्चनं भक्त्या क्षेत्रे नारायणे मुने ।
विधिवद्दक्षिणादानं परं निर्वाणकारणं ॥ २६ ॥
परं राधेशयोर्मन्त्रग्रहणं वैष्णवाद्द्विजात् ।
शुद्धे नारायणक्षेत्रे परं निर्वाणकारणं ॥ २७ ॥
ग्रन्थाष्टादशसाहस्रं द्वादशस्कन्धसम्मितं ।
शुकप्रोक्तं भागवतं श्रुत्वा निर्वाणतां व्रजेत् ॥ २८ ॥
पुरा भगवता प्रोक्तं कृष्णेन ब्रह्मणे मुने ।
पुराणसारं शुद्धं तत्तेन भागवतं विदुः ॥ २९ ॥
ब्रह्मवैवर्त्तश्रवणं परं निर्वाणकारणं ।
यत्रैव विवृतं ब्रह्म शुद्धनिर्गुणमीप्सितं ॥ ३० ॥
ब्राह्म[1]प्रकृतिगाणेशकृष्णाविर्भाववर्णनं ।
चतुःखण्डपरिमितं ब्रह्मवैवर्त्तमीप्सितं ॥ ३१ ॥
पराशरकृतं पुण्यं धन्यं विष्णुपुराणकं ।
भक्त्या तच्छ्रवणं वत्स परं निर्वाणकारणं ॥ ३२ ॥

---

[1] गाणेशेति B.

यत्र तत्र दिने वत्स हरेर्नामानुकीर्त्तनं ।
परं निर्वाणवीजञ्च श्रीकृष्णव्रतपूजनं ॥ ३३ ॥
यद्यत्कृतं सतां कर्म कृष्णे भक्त्या तदर्पणं ।
कर्मनिर्मूलनं तच्च स्मरणं मुक्तिकारणं ॥ ३४ ॥
यदेकशब्दश्रवणं पञ्चरात्रेषु पञ्चसु ।
उपदिष्टं ब्राह्मणाच्च परं निर्व्वाणकारणं ॥ ३५ ॥
पतिव्रतानां भक्त्या च भर्तृश्चरणसेवनं ।
द्विजार्च्चनञ्च शूद्राणां परं निर्वाणकारणं ॥ ३६ ॥
चतुर्णामपि वर्णानां गुरुकृष्णार्च्चनं परं ।
द्विजानां वैष्णवानाञ्च सेवनं मुक्तिकारणं ॥ ३७
आषाढीकार्त्तिकीमाघीवैशाखीपूर्णिमासु च ।
तीर्थस्नानं प्रदानञ्च परं निर्वाणकारणं ॥ ३८ ॥
पितृमातृगुरूणाञ्च सेवनं मुक्तिकारणं ।
निग्रहश्च हृषीकानां केवलं मुक्तिकारणं ॥ ३९ ॥
स्वधर्माचरणं शुद्धं विधर्माच्च निवर्त्तनं ।
वेदोक्ताचरणं विप्र परं निर्वाणकारणं ॥ ४० ॥
दानं हिंसाविहीनञ्च कृतञ्चानशनं मुने ।
निर्लिप्तं शोभनं कर्म परं निर्वाणकारणं ॥ ४१ ॥
देवानां सात्त्विकी पूजा शुभदा मुक्तिदा मुने ।
अहिंसा परमो धर्मः परं निर्वाणकारणं ॥ ४२ ॥
सत्यत्रेताद्वापरेषु संन्यासग्रहणं सतां ।
दण्डग्रहणमात्रेण परं निर्वाणकारणं ॥ ४३ ॥

कलौ दण्डग्रहेणैव परं निर्वाणकारणं ।
परं वेदविरुद्धञ्च विपरीताय कल्पते ॥ ४४ ॥
पञ्चबन्धुविहीनानां पालनञ्च स्वयोषितां ।
परस्त्रीवर्जनञ्चैव परं निर्वाणकारणं ॥ ४५ ॥
तत्पालने लभेन्मोक्षं ब्रह्महत्याञ्च वर्जनं ।
अनाथाभगिनीकन्यावधूनां परिपालकं ॥ ४६ ॥
केवलं मोक्षवीजञ्च तत्त्यागे नरकं ध्रुवं ।
शिशूनामपि पुत्राणां भ्रातॄणाञ्च तथैव च ॥ ४७ ॥
परित्यागे च नरकं पालनं मोक्षकारणं ।
मन्त्रं कन्याप्रदानञ्च सुविप्रे मोक्षकारणं ॥ ४८ ॥
जीवाभयप्रदानञ्च शरणागतरक्षणं ।
अज्ञानाय ज्ञानदानं परं निर्वाणकारणं ॥ ४९ ॥
मुक्ति[2]ज्ञानञ्च कथितं संक्षेपेण [3]यथागमं ।
कापिले पञ्चरात्रेषु कृष्णेनोक्तं सुविस्तरं ॥ ५० ॥
आध्यात्मिकञ्च कथितं प्रथमं ज्ञानमीप्सितं ।
भक्तिज्ञानं द्वितीयञ्च कृष्णस्य परमात्मनः ॥ ५१ ॥
मुक्तिज्ञानं तृतीयं च कथितं तद्यथाक्रमं ।
ज्ञानद्वयञ्चावशिष्टं यौगिकं मायिकं मुने ॥ ५२ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे शिवनारदसंवादे द्वितीयरात्रे मुक्तिज्ञानकथने सप्तमोऽध्यायः ॥ ७ ॥

---

[2] दानमेति B [3] यथाक्रमम् P



श्रीमहादेव उवाच ।

योगज्ञानञ्च दुर्बोधमसतां विषमं परं ।
श्रूयतामिदमेवेति वक्ष्यामि च यथागमं ॥ १ ॥
अणिमा लघिमा व्याप्तिः प्राकाम्यं महिमा तथा ।
ईशित्वञ्च वशित्वञ्च तथा कामावसायिता ॥ २ ॥
दूरश्रवणमिष्टार्थसाधनं स्रष्टिपत्तनं ।
मनोयायित्वमेवेदं परकायप्रवेशनं ॥ ३ ॥
प्राणिनां प्राणदानञ्च तेषां प्राणापहारकं ।
कायव्यूहञ्च वाक्सिद्धं सिद्धं सप्तदश स्मृतं ॥ ४ ॥
कृष्णभक्तिव्यवहितं भक्तानां नाभिवाञ्छितं ।
कृष्णचेतनभुग्भोक्तुं करोति वासना मुने ॥ ५ ॥
मूलाधारं स्वाधिष्ठानं मणिपूरमनाहतं ।
विशुद्धमपि चाज्ञाख्यं षट्चक्रं परिकीर्त्तितं ॥ ६ ॥
शक्तिकुण्डलिनीयुक्तः स्वे स्वे स्थाने स्थितं मुने ।
योगोपयुक्तं नियतं योगविद्भिः प्रकीर्त्तितं ॥ ७ ॥
मेधा सा मनसा युक्ता सुनिद्राजननी नृणां ।
इडा सा मनसा युक्ता प्राणिनां बुद्धिवर्धिनी ॥ ८ ॥
पिङ्गला मनसा युक्ता तृष्णा माता च प्राणिनां ।
सुषुम्ना मनसा युक्ता निद्राभङ्गाय कल्पते ॥ ९ ॥

चञ्चला मनसा युक्ता सम्भोगेच्छाविवर्द्धिनी ।
सुस्थिरा मनसा युक्ता त्वय्यामेव विचेतनी ॥ १० ॥
मनश्च नाडीषट्केषु क्रमेणैव भ्रमेद्ध्रुवं ।
अत्र नास्ति यथासङ्ख्यं स्वेच्छाधीनञ्च चञ्चलं ॥ ११ ॥
योनिशिश्नोपरिस्थानं मूलाधारस्य नारद ।
स्वाधिष्ठानं नाभिदेशे मणिपूरञ्च वक्षसि ॥ १२ ॥
अनाहतं तदूर्द्ध्वं च विशुद्ध कण्ठदेशतः ।
आज्ञाख्यं चक्षुषोर्मध्ये चक्रस्थानं प्रकीर्त्तितं ॥ १३ ॥
मूलाधारौकसीडा सा स्वाधिष्ठाने च पिङ्गला ।
सुषुम्ना मणिपूरे सा सुस्थिरा साप्यनाहते ॥ १४ ॥
चञ्चला सा विशुद्धे च मेध्याख्या परिकीर्त्तिता ।
नाडिस्थानञ्च कथितं योगविद्भिः प्रकीर्त्तितं ॥ १५ ॥
नाडीयुक्तेषु चक्रेषु शश्वद्वायुश्चरेद्ध्रुवो ।
बद्धो भवति स्वाज्ञाख्ये ततो मृत्युश्च प्राणिनां ॥ १६ ॥
योगी च बद्धनिश्वासो वायुधारणया मुने ।
तस्य मृत्युश्च न भवेत् साध्यवायुर्महान् वशी ॥ १७ ॥
वह्निस्तम्भं जलस्तम्भं मृदाञ्च मनसस्तथा ।
वायुस्तम्भं बहुविधं योगी जानाति नारद ॥ १८ ॥
सहस्रदलपद्मञ्च सर्व्वेषां मस्तके मुने ।
तत्रैव तिष्ठति गुरुः सूक्ष्मरूपेण सन्ततं ॥ १९ ॥
तद्गुरोः प्रतिबिम्बश्च सर्व्वत्र नररूपकः ।
गुरुरूपी स्वयं कृष्णः शिष्याणां हितकाम्यया ॥ २० ॥

गुरौ तुष्टे हरिस्तुष्टो हरौ तुष्टे जगत्त्रयं ।
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ॥ २१ ॥
गुरुर्देवः परं ब्रह्म गुरुः पूज्यः परात्परः ।
[1]हरौ रुष्टे गुरौ तुष्टे गुरूरक्षितुमीश्वरः ॥ २२ ॥
सर्व्वे तुष्टा गुरौ रुष्टे न कोऽपि रक्षितुं क्षमः ।
गुरुश्च ज्ञानोद्गिरणाज्ज्ञानं तन्मन्त्रतन्त्रयोः ॥ २३ ॥
तत्तन्त्रं स च मन्त्रः स्यात् कृष्णभक्तिर्यतो भवेत् ।
स एव बन्धुः स पिता स मैत्री जननी च सा ॥ २४ ॥
स च भ्राता पतिः पुत्रो यः कृष्णवर्त्म दर्शयेत् ।
जलबुद्बुदवत् सर्व्वं विश्वञ्च सचराचर ॥ २५ ॥
भज राधेश्वरं विप्र श्रीकृष्णं प्रकृतेः परं ।
स गुरुः परमो वैरी भ्रष्टं वर्त्म प्रदर्शयेत् ॥ २६ ॥
तज्जन्मनाशं कुरुते शिष्यहत्यां भवेद्ध्रुवं ।
सहस्रदलपद्मे च हृदयस्थो हरिः स्वयं ॥ २७ ॥
सर्व्वेषां प्राणिनां विप्र परमात्मा निरञ्जनः ।
इति ते कथितं सर्व्वं योगज्ञानञ्चतुर्थकं ॥
यथागमञ्च संक्षेपं किं भूयः श्रोतुमिच्छसि ॥ २८ ॥

नारद उवाच ।

भक्तिज्ञानञ्च भक्तानां योगज्ञानञ्च योगिनां ।
केषां वर्त्म प्रशस्तञ्च तन्मां कथितुमर्हसि ॥ २९ ॥

---

[1] हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥

श्रीमहादेव उवाच ॥

ध्यायन्ते योगिनः सर्व्वे ज्योतीरूप सनातनं ।
निर्गुणस्य शरीरञ्च न मन्यन्ते च योगिनः ॥ ३० ॥
शरीरं प्राकृतं सर्व्वं निर्गुणाः प्रकृतेः परः ।
गुणेन सज्जते देहो निर्गुणस्य कुतो भवेत् ॥ ३१ ॥
इति सर्व्वं योगशास्त्रं योगविद्भिः प्रकीर्त्तितं ।
वैष्णवास्तं न मन्यन्ते कुमाराद्या वयं द्विज ॥ ३२ ॥
वदन्ति वैष्णवाः सर्वे तेजस्तेजस्विनां वरं ।
क सम्भवेद्वा क भवेदिति दुर्णयमेव च ॥ ३३ ॥
कृष्णो नित्यः शरीरी च तस्य तेजो हि वर्त्तते ॥
तेजोऽभ्यन्तर एवाह कृष्णमूर्त्तिः सनातनः ॥ ३४ ॥
ध्यायन्ते योगिनः सर्व्वे तत्तेजो भक्तिपूर्व्वकं ।
सुपक्कभक्त्या कालेन योगी च वैष्णवो भवेत् ॥ ३५ ॥
तेजोऽभ्यन्तररूपञ्च ध्यायन्ते वैष्णवाः सदा ।
दासानाञ्च कुतो दास्य विना देहेन नारद ॥ ३६ ॥
वैष्णवानां मतं शस्तं सर्वेभ्योऽपि च नारद ।
न वैष्णवात् परो ज्ञानी ब्रह्माण्डेषु च ब्रह्मणः ॥ ३७ ॥
इति ते कथितं वत्स सङ्क्षेपेण यथागमं ।
को वा जानाति कात्स्नेन कृष्णमाहात्म्यमीप्सितं ॥ ३८ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे शिवनारदसंवादे द्वितीयरात्रे योगशास्त्रकथनेऽष्टमोऽध्यायः ॥ ८ ॥ इति द्वितीयरात्र सम्पूर्ण ।

३ रात्रं ॥

प्रथमोऽध्यायः ।

श्रीशिव उवाच ।

शृणु नारद वक्ष्यामि मन्त्रयन्त्रक्रियादिकान् ।
पुरा व्यासेन ये प्रोक्ताः शुकं प्रति महामते ॥ १ ॥
प्रातःकृत्यविधिर्योऽत्र तथा स्नानविधिर्मुने ।
तथा पूजादिकं सर्वं मन्त्राक्षरसमुद्भवं ॥ २ ॥
मन्त्रार्थश्च यथा येन ध्यायते पुरुषेण हि ।
पुरा कैलासशिखरे सुखसेव्ये निरन्तरं ॥ ३ ॥
पार्वती मां पुरा भक्त्या परिपप्रच्छ यत् शिवं ।
तत्सत् शृणु महाबाहो ममैकाग्रमना मुने ॥ ४ ॥

पार्वत्युवाच ।

देव देव महादेव संसारार्णवतारक ।
वक्तुमर्हसि देवेश मन्त्रतन्त्रविधिं गुरो ॥ ५ ॥
श्रीराधायाश्च कृत्यस्य तथा पूजाविधिं मम ।
मन्त्रार्थञ्च तथा योगान् नाम्नामष्टोत्तरं शतं ॥ ६ ॥
सहस्रञ्च तथा नाम्नां प्रकृतिं मम साम्प्रतं ।
यद्यस्ति मयि कारुण्यं यद्यस्ति मयि दोहदं ॥ ७ ॥

[1]तदा प्रब्रूहि राधाया नाम्नामष्टोत्तरं शतं ।
सहस्रञ्च तथा देव मन्त्रयन्त्रविधिं मम ॥ ८ ॥

श्रीमहादेव उवाच ।

शृणु देवि प्रवक्ष्यामि मन्त्रतन्त्रविधिं प्रिये ।
शुकं प्रति पुरा प्रोक्तं वेदव्यासेन धीमता ॥ ९ ॥
ततोऽहं संप्रवक्ष्यामि शृणुष्वैकमनाः प्रिये ।
यावतो मन्त्रवर्णांस्तु श्रीकृष्णस्य परात्मनः ॥ १० ॥

व्यास उवाच ।

कला तु माया नरकान्तमूर्त्तिः
कलङ्कणद्वेणुनिनादरम्यः ।
श्रितो हृदि व्याकुलयंस्त्रिलोकीं
श्रियेऽस्तु गोपीजनवल्लभो वः ॥ ११
गुरुचरणसरोरुहद्वयोत्थान्
महितरजःकणकान् प्रणम्य मूर्ध्ना ।
गदितमिह विवेच्य नारदाद्यै-
र्यजनविधिं कथयामि साङ्गपाणेः ॥ १२ ॥
सर्व्वेषु वर्णेषु तथाश्रमेषु
नारीषु नानासु यजन्मस्थेषु ।
दाता फलानामभिवाञ्छितानां
द्रागेव [2]गोपालकमन्त्र एषः ॥ १३ ॥

---

[1] सख T

[2] गोपीकेश T

शृणु वत्स प्रवक्ष्यामि पूजनं शार्ङ्गधन्वनः ।
यन्नारदाय कथितं ब्रह्मणा पद्मयोनिना ॥ १४ ॥
प्रातःकृत्यादिकं वक्ष्ये तथा पूजाविधिं सुत ।
जगत्कल्पतरोर्वत्स शृणुष्व गदतो मम ॥ १५ ॥

नूनमच्युतकटाक्षपातने
कारणं भवति भक्तिरञ्जसा ।
तच्चतुष्टयफलाप्तये ततो
भक्तिमानधिकृतो गुरौ हरौ ॥ १६ ॥

स्नातो निर्मलसूक्ष्मशुद्धवसनो
धौताङ्घ्रिपाण्याननः साचान्तः
सपवित्रमुद्रितकरः श्वेतोर्द्ध्वपुण्ड्रोज्ज्वलः ।
प्राचीदिग्वदनो निबध्य सुदृढं
पद्मासनं स्वस्तिकं वाऽऽसीनः स्वगुरून्
गणाधिपमथो वन्देत बद्धाञ्जलिः ॥ १७ ॥

ततोऽस्त्रमन्त्रेण विशोध्य मायी
चिताग्निदिग्बन्धकृताग्निशालान् ।
विधाय भूतात्मकमेतदङ्ग
विशोधयेच्छुद्धमतिः क्रमेण ॥ १८ ॥

रुद्रा वक्त्रे धूम्रं सततगति बीजं सलवकं
स्मरेत्पूर्वं मन्त्री सकलभुवनोच्छोषणकरं ।
स्वके देहे तेन प्रततवपुषाऽऽपूर्य सकलं
विशोध्य च्यामुश्चेत् पवनमथ मार्गेण स्वमयोः ॥ १९

तेनैव मार्गेण विलीनमारुतं
बीजं विचिन्त्यारुणमाशुशुक्षणेः ।
आपूर्य्य देहं परिदह्य वामतो
मुञ्चेत् समीरं सह भस्मना बहिः ॥ २० ॥
[1]उपरमतीव शुद्धममृतांशुपथेन विधुं
नयतु ललाटचन्द्रममृतः सकलार्णमयीं ।
लपरजपान्निपात्य रचितकृताञ्च सकलं
वपुरमृतौघदृष्टिमथ सत्ययुगाद्यमिदं ॥ २१ ॥
शिरोवदनवृत्तदृक्श्रवणघोणगण्डौष्ठक-
द्वयेषु सशिरोमुखेषु च इति क्रमात् विन्यसेत् ।
हलश्च करपादसन्धिषु तदग्रकेष्वादरात्
सपार्श्वयुगपृष्ठनाभ्युदरकेषु याद्यानय ॥ २२ ॥
हृदयकक्षककुत्करमूलदोःपदयुगोदरवक्त्रगतान् बुधः ।
हृदयपूर्व्वमनेन पथाऽन्वहं न्यसतु शुद्धकलेवरसिद्धये ॥ २३ ॥
इत्यारचय्य वपुरर्णगताङ्ककेन
सार्द्धक्षपेशसविसर्गकशोभनैस्तैः ।
विन्यस्य केशवपुरःसरमूर्त्तियुक्तैः
कीर्त्यादिशक्तिसहितैर्न्यसतु क्रमेण ॥ २४ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे तृतीयरात्रे भाषरूपे
प्रथमोऽध्यायः ॥ १ ॥

---

[1] उपरमिति ५

द्वितीयोऽध्यायः ।



व्यास उवाच ।

अथ कथयाम्यर्णानां मूर्त्तीः
शक्तीः सकलभुवनमयीः ।
केशवकीर्त्तीनारायणौ
कान्तीमाधवन्तथ तुष्टौ ॥ १ ॥
गोविन्दः पुष्टियुतो
विष्णुधृती सूदनश्च माधवाद्यः ।
शान्तिस्त्रिविक्रमश्च क्रिया
पुनर्व्वामनो दयाऽच्युतः ॥ २
श्रीधरयुता च मेधा
हृषीकनाथश्च हर्षया युक्तः ।
अम्बुजनाभश्रद्धा
दामोदरसयुता पुनर्लज्जा ॥ ३ ॥
लक्ष्मी सवासुदेवा
सङ्कर्षणयुता सरस्वती प्रोक्ता ।
प्रद्युम्नः प्रीतियुतो-
ऽनिरुद्धको रतिविमा- स्वरोपेता. ॥ ४ ॥
-चक्रिजये गदिदुर्गे
शार्ङ्गी प्रभयान्वितस्तथा खड्गी ।

सत्या शंखी चक्रा
हलिवारुणौ मुषलियुक्सिलामिनिका ॥ ५ ॥
शूली विजया पाशी
विजया विश्वान्वितोऽङ्कुशी भयः ।
विनदा मुकुन्दयुता नन्दजसुमन्दे ॥ ६ ॥
स्मृतिश्च नन्दियुता
नव ऋद्धिः नवकृतासमृद्धिरथ शुद्धियुक् हरिः ।
कृष्णो भक्तियुतः सत्ययुता
बुद्धिर्मतियुक् च शाश्वतः ॥ ७ ॥
शौरिः क्षमया शूरो रमया
जनार्दनोमे च भूधरः ।
क्लेदिनी विश्वादिमूर्त्तियुक्ता क्लिन्ना
वैकुण्ठा पुरुषोत्तमश्च तथा
वसुधा बलिना च परायणा ॥ ८ ॥
सूक्ष्मोपेता भूयः परायणाख्या
बलेः सूक्ष्मा वृषप्रसन्ध्ये च । ·
सन्ध्या प्रज्ञा हंसप्रभा
वराहो निशा च विमलो मेघा ॥ ९ ॥
नरसिंहविद्युते च प्रणिगदिता
मूर्त्तयोऽलं शक्तियुताः ।
वर्णानुक्ता सार्द्धचन्द्रान् पुरस्तात्
मूर्त्तीः शक्तीर्द्धावसाना गतिश्च ॥ १

उक्ता न्यस्ये आदिभिः सप्त धातून-
ऽथ वसुदा प्राणबीजं क्रोधमप्यात्मने स्यात् ।
उद्यत्प्रद्योतनभयरुचिं तप्तहेमावदातं ।
पार्श्वद्वन्द्वे जलधिसुतया विश्वधात्र्या च जुष्टं ॥ ११ ॥
नानारत्नोल्लसितविविधाकल्पमापीतवस्त्र ।
विष्णुं वन्दे दरकमलगदाकौमदीचक्रपाणिं ॥ १२ ॥
ध्यात्वैवं परमाक्षरैर्यो
विन्यसेद्दिनमनु केशवादियुक्तैः ।
मेधायुःस्मृतिधृतिकीर्त्तिकान्तिलक्ष्मी-
सौभाग्यैश्चिरमुपबृंहितो भवेत् सः ॥ १४ ॥
अमुमेव रमापुरःसरं
प्रभजेद्यो मनुजो विधिं बुधः ।
समुपेत्य रमां प्रथीयसीं
पुनरन्ते हरितां व्रजत्यसौ ॥ १५ ॥
इत्यच्युतीकृततनुर्विधिवत्तु तत्त्व-
न्यासं नपूर्व्वमपराचरनत्युपेतं ।
भूयः पराय च तदाह्वयमात्मने च
नत्यन्तमुद्धरतु तत्त्वमनून् क्रमेण ॥ १६ ॥
सकलवपुषि बीजं प्राणमायोज्य मध्ये
न्यसतु मतिमदङ्गारं मनश्चेति मन्त्री ।
कमुगबहृदयगुह्याङ्घ्रिप्वथो शब्दपूर्व्वं
गुणगणमथ कर्णा[illegible]तं श्रोत्रपूर्व्वं ॥ १७

वागादीन्द्रियवर्गमात्मनिलयेष्वाकाशपूर्व्वं गवां
मूर्द्धास्ये हृदये शिरे चरणयोर्हृत्पुण्डरीकं हृदि ।
विम्बानि द्विपडष्टयुग्दशकलाख्यातानि सूर्य्योडुराड्-
वह्नीनाञ्च यतस्तु भूतवसुपर्य्यन्त्याद्यैर्मन्त्रवित् ॥ १८ ॥
अथ परमेष्ठिपुमांसौ विश्वनिवृत्ती सर्व्वहृत्युपनिषदं
न्यसेदाकाशादिस्थानस्थानघोयवलवार्थिः सलावः ।
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः
नारायणश्च क्रमशः परमेष्ठ्यादिभिर्युतः ॥ १९ ॥
ततः कोपतत्त्वं क्षरौ विन्दुयुक्तं
नृसिंहं न्यसेत् सर्व्वगात्रेषु तज्ज्ञः ।
क्रमेणेति तत्त्वात्मका न्यास उक्तः
स्वासान्निकृद्विश्वमूर्त्त्यादिषु स्यात् ॥ २० ॥
इतिकृतोऽधिकृतो भवति ध्रुवं
सकलवैष्णवमन्त्रजपादिषु ।
पवनसंयवलतत्त्वमनुना चरेत्
तत्त्वमिह जन्तुमसौ मनुमिच्छति ॥ २१ ॥
अथवाखिलेषु हि विधिमन्त्र-
जपविधिषु मूलमन्त्रतः ।
संयमनममलधीर्मरुतो
विधिनाभ्यसंश्चरतु तत्त्वसंख्यया ॥ २२ ॥
पुरतो जपस्य परतोऽपि
विहितमथ तच्चितयं बुधैः ।

षोडश य इह चरेद्दिनशः
परिपूयते स खलु मासतो हंसः ॥ २३ ॥
अथवाङ्गजन्ममनुनानुसंयमं
सकलेषु कृष्णमनुजापकर्मसु ।
सहितैकसप्तकृतिवारमभ्यसेत्
तनुयात् समस्तदुरितापहारिणा ॥ २४ ॥
अष्टाविंशतिसंख्यमिष्टफलदं मन्त्रं दशार्णं जपन्
नायच्छेत् पवनं सुसंयतमतिस्त्वष्टौ दशार्णेन चेत् ।
अभ्यस्यन्नविवारमन्यमनुभिर्वर्णानुरूपं जपन्
कुर्य्याद्रेचकपूर्व्वकर्मनिपुणः प्राणप्रयोगं नरः ॥ २५ ॥
रेचयेन्मारुतं दक्षया दक्षिणः
पूरयेद्वामया मध्यनाड्या पुनः ।
धारयेदीरित रेचकादित्रयं स्यात्
कलादन्तविद्याख्यमत्राच्युतं ॥ २६ ॥
प्राणायामं विधायेत्यथ-
निजवपुषा कल्पयेद्योगपीठं ।
न्यस्येदाधरशक्तिप्रकृति-
कमठक्ष्माक्षीरसिन्धून् ।
श्वेतद्वीपञ्च रत्नोज्ज्वलम-
हितमहामण्डपं कल्पवृक्षं ।
द्वन्द्वेंऽशदयोरूद्वय-
वदनकटीपार्श्वयुग्मेषु भूयः ॥ २७ ॥

धर्माद्यधर्मादि च पादगात्र-
चतुष्टयं हृद्यथ शेषमस्य ।
सूर्येन्दुवह्नीन् प्रणवांशयुक्ता-
नाद्यक्षरैः सत्त्वरजस्तमांसि ॥ २८ ॥
आत्मादित्रयमात्मबीजसहितं व्योमाग्निमायालवै-
र्ज्ञानात्मानमथाष्टदिक्षु परितो मध्ये च शक्तीर्नव ।
न्यस्त्वा पीठमनुञ्च तत्र विधिवत्तत्कर्णिकामध्यग
नित्यानन्दचितिप्रकाशममृतं संचिन्तयेत्साम तत् ॥ २९ ॥
विमलोत्कर्षणी ज्ञाना क्रिया योगेति शक्तयः ।
प्रह्वी सत्या तथेशाना ऽनुग्रा नवमी तथा ॥ ३० ॥
एवं हृदयं भगवान् विष्णुः सर्व्वान्वितश्च भूतात्मा ।
ङेन्ताः सवासुदेवाः सर्व्वात्मयुतश्च संयोगं ॥ ३१ ॥
योगावधश्च पद्मं पीठा ङेयुतो नतिश्चान्ते ।
पीठमहामनुव्यक्तः पर्य्याप्तोऽयं सपर्य्यासु ॥ ३२ ॥
करयोर्युगलं विधाय मन्त्रा-
त्मकमभ्यानभिराम्यमानमार्गात् ।
सकलं विदधीत मन्त्रवर्णैः
परमं ज्योतिरनुत्तमं हरेस्तत् ॥ ३३ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे तृतीयरात्रे प्रातःकृत्यं नाम
द्वितीयोऽध्यायः ॥ २ ॥

अशीतितमोऽध्यायः ॥



व्यास उवाच ।

अथ वक्ष्ये महामन्त्रं शृणुष्वावहितो मुने ।
यं लब्ध्वा न पुनर्गच्छेत् सद्गतिं पामरोऽपि हि ॥ १ ॥

वक्ष्ये मनुं त्रिभुवनप्रथितात्मभाव-
मक्षीणपुण्यनिचयैर्मुनिभिर्विमृग्यं ।
पक्षीन्द्रकेतुविषयं वसुधर्मकाम-
मोक्षप्रदं सकलकर्मखिलकमदक्षं ॥ २ ॥

अतिगुह्यमबोधतूलराशि
ज्वलवागधिपानदं नराणां ।
दुरितापहं विपापमृत्यु
ग्रहरोगादिनिवारणैकहेतुं ॥ ३ ॥

अभयदं प्रधनेऽभयदं विपिने
सलिलप्लवने सुखतारणदं ।
नरसंततिरथद्विपवृद्धिकरं
सुतगोधरणीधनधान्यकरं ॥ ४ ॥

बलवीर्यशौर्यनिचयप्रतिभा-
सुरवर्णकान्तिसुभगत्वकरं ।

ब्रह्माण्डकोटिमणिमादिगुणा-
ष्टकदं किमत्र बहुनाखिलदं ॥ ५ ॥
शार्ङ्गी सोत्तुरदन्तः परो रामाच्चियुक् द्वितीयार्णं ।
शूली शौरिर्बालो बलानुजद्वयमथाक्षरचतुष्टयं ॥ ६ ॥
शूरस्तुरीयः सानन आदृत्तः स्यात् सशुमोऽष्टमोऽग्निसखः ।
तद्दयिताक्षरयुग्मं तदुपरिगस्त्वेवसुद्धरेन्मन्त्रं ॥ ७ ॥
प्रकाशितो दशाक्षरो मनुस्त्वयं मधुद्विषः ।
विशेषतः पदारविन्दयुग्मभक्तिवर्द्धनः ॥ ८ ॥
नारदो मुनिरस्य कीर्त्तितः
छन्द उक्तमृषिभिर्विराडपि ।
देवतासकललोकमङ्गलो
नन्दगोपतनयः समीरितः ॥ ९ ॥
अङ्गानि पञ्च हुतभुग्दयितासमेतै-
श्चक्रैरमुष्य मुखवृत्तविपूपपक्षैः ।
त्रैलोक्यरक्षणसुजाप्यसुरान्तकाख्य-
पूर्व्वैश्च चेह कथितानि विभक्तियुक्तैः ॥ १० ॥
हृदये नतिः शिरसि पावकप्रिया
सवषट्शिखाहुमितिवर्मणि स्थितं ।
सफडस्त्रमित्युदितमङ्गपञ्चकं
सचतुर्थिवौषडुदितं दृशोर्यदि ॥ ११ ॥
मन्त्रार्णैर्द्दशभिरुपेतचन्द्रखण्डै-
रङ्गानां दशकमुदीरितं नमोऽन्तं ।

हृच्छीर्षं तदनु शिखातनुचमन्त्रं
पार्श्वद्वन्द्वसकटिपृष्ठमूर्द्धयुक्तं ॥ १२ ॥
रक्षे मन्त्रस्यास्य बीजञ्च शक्ति-
चक्री शक्री वामनेत्रप्रदीप्तः ।
सप्रद्युम्नो बीजमेतत्प्रदीप्तं
मन्त्रः प्रद्युम्नो जगन्मोहनोऽयं ॥ १३ ॥
हंसो मेदो वक्रहस्ताभ्युपेतः
पोत्री नेत्राद्यन्वितोऽसौ युगार्णो ।
प्रोक्ता शक्तिः सर्व्वगीर्व्वाणवन्द्ये-
र्वन्द्यस्याग्नेर्व्वल्लभा कामदेयं ॥ १४ ॥
विनियोगस्य मन्त्रस्य पुरुषार्थचतुष्टये ।
ऋष्यं प्रकृतिरित्युक्ता दुर्गाधिष्ठातृदेवता ॥ १५ ॥
गोपायति सकलमिदं
गोपायति परं पुमांसमिति गोपी ।
प्रकृतेस्तस्या जातं
जन इति महदादिकं पृथिव्यन्तं ॥ १६ ॥
अनयोर्गोपीजनयोः समीरणादाश्रितो व्याप्तश्च ।
वल्लभ इत्युपदिष्टं सान्द्रानन्दं निरञ्जनं ज्योतिः ॥ १७ ॥
स्वाहेत्यात्मानं गमयामीत्यतेजसे तस्मै ।
यः कार्य्यकारणेशः परमात्मेत्यच्युतैकतास्य मनोः ॥ १८ ॥

अथवा गोपीजन इति समस्तजगदवनशक्ति-
समुदायस्तस्य आनन्यस्य स्वामी वल्लभ इत्युपदिष्टः ।
अथवा व्रजयुवतीनां दयिताय जुहोमि मां मदीय-
मपीत्यर्पयेत् समस्तं ब्रह्मणि सुगणे समस्तसम्पत्त्यै ॥ १९ ॥
कृपशब्दः सत्तार्थो णश्चानन्दात्मकस्ततः ।
कृष्णोः भक्तायकर्षणादपि तद्वर्णत्वाच मन्त्रमयवपुष ॥२०॥
गोः शब्दवाचत्वाज्ज्ञान तेनोपलभ्यत इति गोविन्दः
वेत्तीति शब्दराशिं गोविन्दो गोविचारणादपि ।
एतेऽभिख्येऽनुक्रमतस्तूर्य्यविभक्त्या
मन्त्रात् पूर्व्वं मन्मथबीजादथ पश्चात्
स्याताश्चेदष्टादशवर्णो मनुवर्य्यो
गुह्यात् गुह्यो वाञ्छितचिन्तामणिरेषः ॥ २१ ॥
पूर्व्वप्रदिष्टे मुनिदेवतेऽस्य
छन्दस्तु गायत्रमुशन्ति सन्तः ।-
अङ्गानि मन्त्रार्णचतुष्कैर्वर्माविसानानियुगार्णमस्त्र
बीजं शक्तिः प्रकृतिः विनियोगश्चापि पूर्व्ववदमुष्य ॥ २२ ॥
पूर्व्वतरस्य मनोरथं कथयामि
न्यासमखिलसिद्धिकरं ।
व्यापय्याथो हस्तयोमस्त-
वाह्ये पार्श्वे तानरु[3]द्व वुधेन ॥

---

[3] वन्ध T.

न्यासो वर्णिसारयुग्मान्तरस्थै-
विन्दूस्तंसोहाद्दकृत्यैर्विधेयः ॥ २३ ॥
शाखासु त्रीणि पूर्व्वाण्यधि दशसु
पृथग्दक्षिणाङ्गुष्ठपूर्व्वं वामाङ्गुष्ठावसानं
न्यसतु विषदधीः सृष्टिरुक्ता करस्था।
अङ्गुष्ठद्वन्द्वपूर्व्वा स्थितिरुभयकरे
संहृतिर्वामपूर्व्वो दक्षाङ्गुष्ठान्तिके तत्
त्रयमपि सृजति स्थित्युपेतञ्च कार्य्यं ॥ २४ ॥
ततः स्थितिक्रमाद्बुधो दशाङ्गकानि विन्यसेत्।
तदङ्गपर्व्वकं तथा विधिः समीरितः करे ॥ २५ ॥
पुटितैर्मनुनाथ मातृकार्णै-
रभिविन्यस्य सविन्दुभिः पुरावत्।
अणुसंकृतिसृष्टिमार्गभेदा
क्षयतवानि च मन्त्रवर्णभाञ्जि ॥ २६ ॥
संहृतावन् गतो मनुवर्य्यः
सृष्टि*वर्त्मनि भवेत् प्रतियातः।
उद्धृतिः खलु पुरोक्तवदेषां
न्यासकर्म कथयाम्यधुनाहं ॥ २७ ॥

इति श्रीनारदपञ्चरात्रे तृतीयरात्रे तृतीयोऽध्यायः ॥ ३ ॥

---

* रात्मनि T

चतुर्थोऽध्यायः ।

व्यास उवाच ।

महीसलिलपावकानिलवियन्ति गर्वो महान्
पुनः प्रकृतिपूरुषौ पर इमानि तत्त्वान्यथ ।
पदान्धुहृदयास्यकान्यधि पञ्चमध्ये द्वयं
चयं सकलगं ततो न्यसतु तद्विपर्य्यासतः ॥ १ ॥
गुप्ततमोऽयं न्यासः संप्रोक्तस्तत्त्वदशकपरिक्लृप्तः ।
कार्य्योऽन्येष्वपि गोपालमनु झटिति फलसिद्धौ ॥ २ ॥
आकेशादापादं दोर्भ्यां भुवपुटितमनु-
वरं न्यसेद्वपुर्भिश्चापि पूर्व्ववदमुष्य ।
मूर्द्धन्यक्षणः श्रुत्योर्घ्राणे मुखहृदय-
शिरजानुजठरपत्सु तथाक्षराणि ॥ ३ ॥
न्यसेद्यक्ता सृष्टिः स्थितिरपि मुनिभि
रभिहिता हृदादिमुखान्तिका ।
संहारोऽङ्घ्र्यादिमूर्द्धान्तस्त्रितय
मिति विरचयतु सृष्टिपूर्व्वं
मनुस्थितिं न्यासः संहारान्तो
मक्षावखैखानसेषु विहितोऽयं ॥ ४ ॥
स्थित्यन्तो गृहमेधिषु सृष्ट्यन्तो वर्णिनामिति प्राहुः ।
वैराग्ययुजि गृहस्थे संहारं केचिदाहुराचार्य्याः ॥ ५ ॥

सहजानौ वनवासिनि स्थितिश्च विद्यार्थिनां सृष्टिं ।
शिरसि निहिता मध्यासैराक्षितर्जनिकान्विता ॥
शिरसि रहिताङ्गुष्ठाज्येष्ठान्वितौ परनिष्ठिकानेसि च ॥६॥
मनोऽनुरञ्जनं हरिचरणाब्जभक्तिवर्द्धनं ।
स्फूर्त्तयेऽथास्य [1]कोर्त्त्यते मूर्त्तिपञ्जरं ॥
आर्त्तिग्रहविषाविघ्नं कीर्त्तिश्रीकान्तिपुष्टिदं ॥ ७ ॥

केशवादियुगपट्कमूर्त्तिभिर्द्वीः
पूर्व्वामिहिरानुमोन्तिकान् ।
द्वादशाचरभवाक्षरैः सुरैः
क्लीववर्णरहितेश्च क्रमान्न्यसेत् ॥ ८ ॥
भालोदरहृद्भतूपतले
वामे तव पार्श्वभुजान्लगले
वामचयपृष्ठककुत्सु तथा
मूर्द्धन्यनुपट्घगावन्त मनुं ।
चेतन्यामृतवपुरर्ककोटितेजा
मूर्द्धिस्थौ वपुरखिलं स.वासुदेवः ॥ ९ ॥
ऊधस्य विमलपाथसीव सिक्त
व्याप्नोति प्रकटितमन्त्रवर्णकीलं ।
सृष्टिस्थिती दशपञ्चाङ्गयुग्मं
न्यासादिनितयकास्यहृत्सु ॥ १० ॥

विन्यस्यतु ग्रथयित्वा तु मुद्रां
भूयो दिशां दृशकं बन्धनीयं।
तारं ह्राह्रं विश्वमूर्त्तिश्च शार्ङ्गी
मासान्तं ते वायुमध्ये सुदेवाः ॥
षड्‌वन्द्वार्णो मन्त्रवर्य्यः स उक्तः
साक्षाद्द्वारं मोक्षपुर्य्या अगम्यं ॥ ११ ॥
धातर्य्यमभिचाख्या वरुणांशुभगा विवस्वदिन्द्रयुताः।
पुषाह्वयपर्ज्जन्यो त्वष्टा विष्णुश्च भानवः प्रोक्ताः ॥ १२ ॥
अथ तु युगरन्ध्रार्णस्य मनोर्न्यसनं ब्रुवे
रचयतु करद्वन्द्वेऽङ्गुलिपञ्चकेष्वङ्गपञ्चकं।
तन्मन्त्रमन्वं व्यापय्याथ विप्रः प्रणवं सकृन्-
मनुजलिपयो न्यस्या भूयः पदानि च सादरं ॥ १३ ॥
कचभुवि ललाटभ्रूयुग्मान्तरश्रवणाक्षिणो-
र्युगलवदनग्रीवाहृन्नाभिकव्युभयाङ्घ्रिपु।
न्यसतु ध्रितधीर्जान्वङ्घ्रोरक्षराणि शिरसि भ्रुवं
नयनमुखहृद्गुह्याङ्घ्रिष्वर्पयेत् पदपञ्चकं ॥ १४ ॥
पञ्चाङ्गानि न्यसेद्भूयो मुन्यादीनप्यन्यत् सर्व्वं।
तुल्यं पूर्व्वेणाथो वक्ष्ये मुद्रा वध्या मन्त्रोर्य्याः स्युः ॥ १५ ॥
अनङ्गुष्ठा ऋजवो दक्षहस्त-
शाखा भवेन्मुद्रा हृदये शीर्षके च।
अधोऽङ्गुष्ठा खलु मुष्टिः शिखायां
करद्वन्द्वाङ्गुलयो वर्मणि स्युः ॥ १६ ॥

नाराचमुष्ट्युद्धृतबाहुयुग्मं
व्यङ्गुष्ठतर्जन्युदितो ध्वनिस्तु।
विष्वग्विषक्ता कथिताऽस्त्रमुद्रा
यत्राक्षिणी तर्ज्जनीमध्यमे तु ॥ १६ ॥
ओष्ठे वामकराङ्गुष्ठो लग्नस्तस्य कनिष्ठिका।
दक्षिणाङ्गुष्ठसंयुक्ता तत्कनिष्ठा प्रसारिता ॥ १७ ॥
तर्ज्जनीमधमाऽनामाः किञ्चित् संकुच्य चालिताः।
वेणुमुद्रेय कथिता सुगुप्ता प्रेयसी हरेः ॥ १८ ॥
नोच्यन्तेऽत्र प्रसिद्धत्वान्मालाश्रीवत्सकौस्तुभाः।
उच्यतेऽच्युतमुद्राणां भद्रा विल्वफलाकृतिः॥ १९ ॥
अङ्गुष्ठं वाममुद्दण्डितमितरकराङ्गुष्ठकेनाथ बद्धा
तस्याग्रं पीडयित्वाङ्गुलिभिरपि च तां वामहस्ता-
ङ्गुलीभिः।
बद्धा गाढं हृदि स्थापयतु विमलधीर्व्याहरेन्मारवीजं
विल्वाख्या मुद्रिकैषा स्फुटमिह कथिता गोपनीया
विधिज्ञैः ॥ २० ॥
मनोवाणीदेहैर्यदिह च दिवारात्रिविहितं
अमत्या मत्या वा तदखिलमसौ दुष्कृतचयं।
इमां मुद्रां जानन् क्षपयति नरस्तं सुरगणा
नमन्त्यस्याधीना भवति सततं सर्व्वजनता ॥ २१ ॥
प्रणवद्वन्द्वरवसान
स चतुर्थीसुदर्शनतथास्त्रपदं।

उक्ता फडन्तममुना
ग्रथयेन् मनुमस्त्रमुद्रया हरितः ॥ २२ ॥
इति विधाय समस्तजगज्जनि-
स्थितिविनाशविधानविशारदं ।
श्रुतिविधानकरं मनुविग्रहं
स्मरतु गोपवधूजनवल्लभं ॥ २३ ॥

इति श्रीनारदपञ्चरात्रे तृतीयरात्रे ज्ञानामृतसारे चतुर्थोऽध्यायः ॥ ४ ॥

पञ्चमोऽध्यायः ॥



श्रीव्यास उवाच ॥

अथ प्रकटसौरभोत्कलितफुल्लमाध्वीकसत्-
प्रसूननवपल्लवप्रकरनम्रशाखैर्द्रुमैः ।
प्रफुल्लनवमुञ्जरीललितवल्लरीवेष्टितैः
स्मरेच्छिशिरितं शिवं शितमतिस्तु वृन्दावनं ॥ १ ॥
विकाशिसुमनोरसास्वदनमञ्जुलैः सञ्चर-
च्छिलीमुखमुखोद्गतैर्मुखरितान्तरं झंकृतैः ।
कपोतशुकसारिकापरभृतादिभिः पत्रिभि-
विराजितमितस्ततो भुजगशत्रुनृत्याकुलं ॥ २ ॥
कलिन्दद्गुहितृस्थलल्लहरिविप्रुषां वाहिभि-
र्विनिद्रसरसीरुहोदररजश्चयोत्पिञ्जलैः ।

प्रदीपितमनोभवव्रजविलासिनीवाससां
[1]विलोलनपरैर्निषेवितमनारतं मारुतैः ॥ ३ ॥
प्रवालनवपल्लवं मरकतच्छदं वज्रमौ-
क्तिकप्रसवकोरकं कमलरागनानाफलं ।
स्थविष्ठमखिलर्त्तुभिः सततसेवितं कामदं
तदन्तरपि कल्पकाङ्घ्रिपमुदञ्चितं चिन्तयेत् ॥ ४ ॥
सहेमशिखरावनेरुदितभानुवद्भास्वरा-
मधोऽस्य कनकस्थलीममृतशीकरं वारिणः ।
प्रदीप्तमणिकुट्टिमां कुसुमरेणुपुञ्जोज्ज्वलां
स्मरेत् पुनरतन्द्रितो विगतषट्तरङ्गो बुधः ॥ ५ ॥
तद्रत्नकुट्टिमनिविष्टमहिष्ठयोग-
पीठेऽष्टपत्रमरुणं कमलं विचिन्त्य ।
उद्यद्विरोचनसरोऽचिरमुष्य मध्ये
संचिन्तयेत् सुखनिविष्टमथो मुकुन्दं ॥ ६ ॥
सद्दामरत्नदलिताञ्जनमेघपुञ्ज-
प्रत्यग्रनीलजलजन्मसमानभासं ।
सुस्निग्धनीलघनकुञ्चितकेशजालं
राजन्मनोज्ञशितिकण्ठशिखण्डचूडं ॥ ७ ॥
रोलम्बलालितसुरद्रुमसूनकल्पितो-
त्तंसं समुत्कचनवोत्पलकर्णपूरं ।

---

[1] विघोलनविशारदैः सततसेवितं मारुतैरिति P

लोलालकस्फुरितभालतलप्रदीप्तं
गोरचनातिलकमुज्ज्वलचित्रमाल्यं ॥ ८ ॥
आपूर्णशारदगताङ्कशशाङ्कबिम्ब-
कान्ताननं कमलपत्रविशालनेत्रं।
रत्नस्फुरत्कनककुण्डलरश्मिदीप्त-
गण्डस्थलीमुकुरमुन्नतचारुनासं ॥ ९ ॥
सिन्दूरसुन्दरतराधरमिन्दुकुन्द-
मन्दारमन्दहसितद्युतिदीपिताशं।
वन्यप्रवालकुसुमप्रचयावक्लृप्त-
ग्रैवेयकोज्ज्वलमनोहरकम्बुकण्ठं ॥ १० ॥
मत्तभ्रमद्भ्रमरजुष्टविलम्बमान-
सन्तानकप्रसवदामपरिष्कृतांसं।
हारावलीभगणराजितपीवरोरो-
व्योमस्थलीललितकौस्तुभभानुमन्तं ॥ ११ ॥
श्रीवत्सलक्षणसुलक्षितमुन्नतांस-
माजानुपीनपरिवृत्तसुजातबाहुं।
आबन्धुरोदरमुदारगभीरनाभिं
भृङ्गाङ्गनानिकरमञ्जुलरोमराजिं ॥ १२ ॥
नानामणिप्रघटिताङ्गदकङ्कणोर्मि-
ग्रैवेयसारकलनूपुरतुन्दबन्धं।
दिव्याङ्गरागपरिपिञ्जरिताङ्गयष्टि-
मापीतवस्त्रपरिधीतनितम्बबिम्बं ॥ १३ ॥

चारूरुजानुमनुवृत्तमनोज्ञजङ्घ-
कान्तोन्नतप्रपदनिन्दितकूर्मकान्तिं।
माणिक्यदर्पणलसन्नखराजिराज-
द्रक्ताङ्गुलिच्छदनसुन्दरपादपद्मं ॥ १४ ॥
मत्स्याङ्कुशारिदवकेतुयवाब्जवज्र-
संलक्षितारुणतराङ्घ्रितलाभिरामं।
लावण्यसारसमुदायविनिर्मिताङ्ग-
सौन्दर्य्यनिर्जितमनोभवदेहकान्तिं ॥ १५ ॥
आस्यारविन्दपरिपूरितवेणुरन्ध्र-
लोलत्कराङ्गुलिसमीरितदिव्यरागैः।
शश्वद्द्रवीकृतविकृष्टसमस्तजन्तु-
सन्तानसन्ततिमनन्तसुखाम्बुराशिं ॥ १६ ॥
गोभिर्मुखाम्बुजविलीनविलोचनाभि-
रूधोभरस्खलितमन्थरमन्दगाभिः।
दन्ताग्रदष्टपरिशिष्टतृणाङ्कुराभि-
रालम्बिवालधिलताभिरथाभिनीतं ॥ १७ ॥
सप्रस्नवस्तनविचर्षणपूर्णनिश्च-
लास्यावटच्चरितफेणिलदग्धमुग्धैः।
वेणुप्रवर्त्तितमनोहरमन्दगीति-
दत्तोच्चकर्णयुगलैरपि नर्त्तकैश्च ॥ १८ ॥
प्रत्यग्रशृङ्गमृदुमस्तकसंप्रहार-
संरम्भवल्गनविलोलखुराग्रपातैः।

आमेदुरैर्विहरलसाम्नगलैरुदग्र-
पुच्छैश्च वत्सतरवत्सतरीनिकायैः ॥ १९ ॥
हुङ्कारविस्तम्भितदिग्वलयैर्महद्भि-
रप्युक्षभिः पृथुककुद्भरभारखिन्नैः ।
उत्तम्भितश्रुतिपुटीपरिपीतवंश-
ध्वानामृतोद्भृतविकाशिविशालघोषैः ॥ २० ॥
गोपैः समानगुणशीलवयोविलास-
वेशैश्च मूर्च्छितकलस्वरवेणुवीणैः ।
मन्द्रोच्चतालपटुगानपरैर्विलोल-
दोर्वल्लरीललितलास्यविधानदक्षैः ॥ २१ ॥
जङ्घान्तपीवरकटीरतटीनिबद्ध-
व्यालोलकिङ्किणिघटावलितैरटद्भिः ।
मुग्धैस्तरक्षुनखकल्पितकण्ठभूषै-
रव्यक्तमञ्जुवचनैः पृथुकैः परीतं ॥ २२ ॥
अथ सुललितगोपसुन्दरीणां
पृथुविशिष्टनितम्बमन्थराणां ।
गुरुकुचभरभङ्गुरावलग्न-
त्रिवलिविजृम्भितरोमराजिभाजां ॥ २३ ॥
तदतिमधुरचारुवेणुवाद्या-
मृतरसपल्लविताङ्गजाङ्घ्रिपाणां ।
मुकुलविसररम्यरोमोद्गम-
समलंकृतगात्रवल्लरीणां ॥ २४ ॥

तदतिरुचिरमन्दहासचन्द्रा-
तपपरिजृम्भितरागवारिराशेः
तरलतरतरंगविप्रुट्प्रकर-
समभ्रमबिन्दुसन्ततानां ॥ २५ ॥
तदतिललितमन्दचिच्चिचाप-
च्युतनिशितेक्षणमारबाणदग्धा ।
दलितसकलमर्मविह्वलांग-
प्रविसृतदुःसहवेपथुव्यथानां ॥ २६ ॥
तदतिसुभगकम्ररूपशोभा-
ऽमृतरसपानविधानलालसानां ।
प्रणयसलिलपूरवाहिनीना-
मलसविलोलविलोचनाम्बुजाभ्यां ॥ २७ ॥
विस्रंसत्कबरीकलापविगतोत्फुल्लप्रसूनस्रवन्-
माध्वीलम्पटचञ्चरीकघटया संसेवितानां मुहुः ।
मारोन्मादमदस्खलन्मृदुगिरामालोलकाञ्च्युच्छ्वस-
न्नीवीविश्लथमानचीनसिचयान्ताविर्नितम्बत्विषां ॥२८॥
स्खलितललितपादाम्भोजमन्दाभिघात-
क्वणितमणितुलाकोट्याकुलाशामुखानां ।
चलदधरकुलानां कुट्मलोत्पक्ष्मलाक्षि-
द्वयसरसिरुहाणामुल्लसत्कुण्डलानां ॥ २९ ॥
द्राघिष्ठश्वसनसमीरणाभिताप-
प्रम्लानीभवदरुणोष्ठपल्लवानां

नानोपायनविलसत्कराम्बुजाना-
मालीभिः सततनिषेवितं समन्तात् ॥ ३० ॥
तासामायतलोलनीलनयनव्याकोषनीलाम्बुज-
स्रग्भिः संपरिपूरिताखिलतनूनानाविनोदास्पदं ।
तन्मुग्धाननपङ्कजप्रविगलन्माध्वीरसास्वादिनीं
बिभ्राणं प्रणमोन्मदाक्षिमधुकृन्मालां मनोहारिणीं ॥३१॥
गोपीगोपपशूनां
वहिः स्मरेदग्रतोऽस्य गीर्वाणघटां ।
वित्तार्थिनीं विरिञ्चि-
त्रिनयनशतमन्युपूर्व्विकां स्तोत्रपरां ॥ ३२ ॥
तद्दक्षिणतो मुनि
जननिकरवसुधर्मानादाय परं ।
योगीन्द्रानथ पृष्ठे
मुमुक्षुमाणान् समाधिना सनकाद्यान् ॥ ३३ ॥
सव्ये सकान्तानथ सिद्धयक्ष-
गन्धर्व्वविद्याधरचारणांश्च ।
सकिन्नरानप्सरसश्च मुख्यान्
कामार्थिनो नर्त्तनगीतवाद्यैः ॥ ३४ ॥
शंखेन्दुकुन्दधवलं सकलागमज्ञं
सौदामिनीततिपिसङ्गजटाकलापं ।
तत्पादपङ्कजगतामचलाञ्च भक्तिं
वाञ्छन्तमुज्झिततरान्यसमस्तसङ्गं ॥ ३५ ॥

नानाविधश्रुतिगणान्वितसप्तराग-
ग्रामत्रयीगतमनोहरमूर्च्छनाभिः ।
संप्रीणयन्तमुदिताभिरमुं महत्या ·
सञ्चिन्तयेन्नभसि धातृसुतं मुनीन्द्रं ॥ ३६ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे तृतीयरात्रे मन्त्रपूजाप्रकरणे पञ्चमोऽध्यायः ॥ ५ ॥

---

षष्ठोऽध्यायः ।

व्यास उवाच ।

इति ध्यात्वाऽऽत्मानं पटुविशदधीर्नन्दतनय
पुरो बुद्ध्वार्घ्यप्रभृतिभिरनन्तोपहृतिभिः ।
यजेद्भूयो भक्त्या स्ववपुषि बहिष्ठैश्च विभवै-
र्विधानं तद्ब्रूमो वयमतुलसान्निध्यदमथ ॥ १ ॥

आरचय्य भुवि गोमयाम्भसा
स्थण्डिलं निजसमुद्रविष्टरं ।
न्यस्य तत्र विहितास्पदोऽम्भसा
शङ्खमन्त्रमनुना विशोधयेत् ॥ २ ॥

तत्र गन्धसुमनोऽक्षतान्यथो
निःक्षिपेद्धृदयमन्त्रमुच्चरन् ।
पूरयेद्विमलपाथसा सुधी-
रक्षरैः प्रतिगतैः शिरोऽन्तकैः ॥ ३ ॥

पीठशङ्खसलिलेषु मन्त्रवित्
वह्निवासरनिशाकृतां क्रमात् ।
मण्डलानि चषकस्रवोक्षरै-
रर्च्चयेद्दहनपूर्व्वदीपितैः ॥ ४ ॥
न च तीर्थमनुनाभिराह्वयेत्
तीर्थसूर्यरविमण्डलात्ततः ।
स्वीयहृत्कमलतो हरिं तथा
मालिनीर्च्च शिखया प्रदर्शयेत् ॥ ५ ॥
तज्जलं नयनमन्त्रवीक्षितं
वर्मणा समवगुण्ठ्य दोर्युजा ।
मूलमन्त्रसकलीकृतं न्यसे-
दङ्कुशेन कलयेद्दिशोऽस्त्रतः ॥ ६ ॥
अक्षतादियुतमच्युतीकृतं
सस्पृहञ्जपतु मन्त्रमष्टशः ।
किञ्चन क्षिपतु वर्द्धनीजले
प्रोक्षयेन्निजतनुं ततोऽमुना ॥ ७ ॥
त्रिःकरेण मनुनाऽखिलन्तथा
साधनं कुसुमचन्दनादिकं ।
शङ्खपूरणविधिः समीरितो
गुप्त एष यजनाग्रणीरिह ॥ ८ ॥
गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ ८ ॥

एष तीर्थमनुः प्रोक्तो दुरितौघविनाशनः ।
कनिष्ठाङ्गुष्ठकौ शक्तौ करयोरितरेतर ॥ १० ॥
तर्ज्जनीमध्यमाऽनामाः संहताऽऽभुग्नवर्ज्जिताः ।
मुद्रैषा गालिनी प्रोक्ता शङ्खस्योपरि चालिता ॥ ११ ॥

अथ मूर्द्धनि मूलचक्रमध्ये
निजनाथगणनायकं समर्च्य ।
न्यसनक्रमतनुः पीठमन्त्रै-
र्जलगन्धाक्षतधूपपुष्पदीपैः ॥ १२ ॥

प्रयजेदथ मूलमन्त्रतेजो
निजमूले हृदये भ्रुवोश्च मध्ये ।
चिंतय स्मरत स्मरेत्तदेकी-
कृतमानन्दघनं तडिल्लताभं ॥ १३ ॥

तत्ते यन्त्रे सावयवीकृत्य विभूत्या-
यङ्गान्त विन्यस्य यजेदासनपूर्व्वैः ।
भूषान्तैर्भूयो जलगन्धादिभिरर्च्चा
कुर्य्याङ्गत्वाद्यङ्गविधानावधि मन्त्री ॥ १४ ॥

भूयो वेणु वदनस्थ वक्षोदेशे वनमाला ।
वक्षोगोर्द्धं प्रयजेच्च श्रीवत्स कौस्तुभरत्नं ॥ १५ ॥

श्रीखण्डनिस्यन्दविचर्च्चिताङ्गो
मूलेन भालादिषु चित्रकाणि ।
लिख्यादथो पञ्जरमूर्त्तिमन्त्रै-
रत्नामयो दीपशिखाकृतीनि ॥ १६ ॥

पुष्पाञ्जलिं वितनुयादथ पञ्चकृत्वो
मूलेन पादयुगले तुलसीदयेन ।
मध्ये त्वयारियुगलेन च मूर्द्धि पद्म-
द्वन्द्वेन षड्भिरपि सर्व्वतनौ च सर्व्वैः ॥ १७ ॥

श्वेतानि दक्षभागेऽपि तच्चन्दनपङ्किलानि कुसुमानि ।
रक्तानि वामभागेऽरुणचन्दनपङ्कसिक्तानि ॥ १८ ॥

तद्वच धूपदीपौ समर्प्य विनयात् सुधारसैः कृष्णं ।
मुखवासाद्यं दत्वा समर्च्चयेद्गन्धपुष्पाद्यैः ॥ १९ ॥

ताम्बूलनर्त्तनगीतवाद्यैः सन्तोष्य चूर्णकसालनेन ।
ब्रह्मार्पणाख्यमनुना कुर्य्यात् स्वात्मार्पणं मन्त्री ॥ २० ॥

अथवा सङ्कुचितधिया ।
लयविधिमूर्त्तिपञ्चरादक्षः ।
वद्यष्टादशलिपिना
स्वान्तपादाङ्गेष्व वेणुपूर्व्वैः प्रोक्तः ॥ २१ ॥

सुप्रसन्नमथ नन्दतनूजं
भावयन् जपतु मन्त्रमनन्यः ।
सानुसंस्मृति यथाविधि सख्या-
पूरणं स्वयं मनो विदधीत ॥ २२ ॥

प्रणवपुटितं बीजं जप्या शत महिताष्टकं
निजगुरुमुखादात्मान् योगान् युनक्तु महामतिः ।
सदसत्तचिदानन्दात्मायं जपञ्च समापये-
दिति जपविधिः सम्यक् प्रोक्तो मनुद्वयमाश्रितः ॥ २३ ॥

य इमं भजते विधिं नरो
भविताऽसौ दयितः शरीरिणां।
अपराककमलैकमन्दिर
परमन्ते समुपैति तन्महः॥ २४॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे तृतीयरात्रे षष्ठोऽध्यायः॥ ६॥

---

सप्तमोऽध्यायः॥

व्यास उवाच।

कथ्यते खलु मन्त्रवर्य्ययोः
साधनं सकलसिद्धिसाधन।
यद्विधाय मुनयो महीयसीं
सिद्धिमापुरिह नारदादयः॥ १॥

विप्रं प्रध्वस्तकामप्रभृतिरिपुघटानिर्मलाङ्गं गरिष्ठं
भक्तिं कृष्णाङ्घ्रिपङ्केरुहयुगलरजोरागिनीमुद्वहन्तं।
वेत्तारं वेदशास्त्रागमविमलपथां सम्मतं सत्सु विद्वांसं
यो भक्त्या विवित्सुः प्रवणतनुमना देशिकं संश्रयेत॥ २॥

सन्तोषयेदकुटिलार्द्रतरात्मना तं
स्वैः स्वैर्धनैश्च वपुषाप्यनुकूलवाण्या।
अब्दत्रयं कमलनाभधियाऽथ धीर-
स्तुष्टे विवक्षतु गुरावथ मन्त्रदीक्षां॥ ३॥

प्रपञ्चसारप्रथिताऽच दीक्षा
संस्मार्य्यते संप्रति सर्व्वसिद्धैः ।
ऋते यया सन्ततजापिनोऽपि
सिद्धिं न यद्दास्यति मन्त्रपूगः ॥ ४ ॥
अथ पुरो विदधीत स्ववस्थली-
मविषमामधिवास्तुवलिं बुधः ।
अचलदोर्मितपञ्चभु मण्डपं
मकृणवेदिकमारचयेत्ततः ॥ ५ ॥
त्रिगुणतन्तुयुजा कुशमालया
परिवृतं प्रकृतिध्वजभूषितं ।
मुखचतुष्कयस्ततोरणं
सितवितानविराजितमुज्ज्वलं ॥ ६ ॥
वसुत्रिगुणिताङ्गुलिप्रमितखातवातायनं
वसोर्वसुपतेरथो ककुभि विएमस्मिन् बुधः ।
करोतु वसुमेखलं वसुगणार्द्धकोणं प्रति
जवस्थितगजध्वनिप्रतिमयोनिसंलक्षितं ॥ ७ ॥
ततो मण्डपे गव्यगन्धमधुसिक्ते
लिखेन्मण्डलं सम्यगच्छदाब्दं ।
सुवृत्तत्रयं राशिपीठाद्धि वीथी-
चतुर्द्वारशोभोपशोभासुयुक्तं ॥ ८ ॥
ततो देशिकस्नानपूर्व्वं विधानी
विधायात्मपूजावसानां विधिज्ञः ।

स्वरामायतः शङ्खमध्यर्घ्यपाद्या-
चमाद्यानि पात्रानि संपूरितानि
विधायान्यतः पुष्पगन्धाक्षताद्यं
करक्षालने पृष्ठतश्चापि पात्रं ।
प्रदीपावलीदीपिते सर्व्वमन्यत्
स्वतोऽङ्गाचारसाधनं चाददीत ॥ १० ॥
वायव्याशादीशपर्य्यन्तमर्च्या
पीठस्योदग्गौरवी पङ्क्तिरादौ ।
पूज्योऽन्यत्राप्याग्निकोयः कराब्जैः
पाशं दण्डं पुष्पभीती दधानः ॥ ११ ॥
आराध्याऽऽधारशक्त्याद्यमरचरणयोरप्ययो मध्यभागे
धर्मादीन् वह्नियक्षःपवनशिवगतान्दिक्ष्वधर्मादिकांश्च ।
मध्ये शेषाब्जतेजस्त्रितयगुणगणानात्मजान् केशराणां
मध्ये चाकीर्णवासादिकमभियजते पीठमन्त्रेण भूयः ॥ १२ ॥
ततः शालीन्मध्ये कमलममलांस्तण्डुलवरा-
नपि न्यस्येत् दर्भांस्तदुपरि च दूर्वाक्षतयुतान् ।
न्यसेत् प्रादक्षिण्यात्तदुपरि कृशानोर्द्दश कला-
यकाराद्यर्णाद्या यजतु च सुगन्धादिभिरिमाः ॥ १३ ॥
न्यसेत्कुम्भन्तत्र त्रिगुणितखसत्तन्तुकलितं
जपस्तारं धूपैः सुपरिमलितं जोङ्कमयैः
कभाद्यैः कुन्तिस्थिठउवसितिभिर्व्वर्णयुगलै-
स्तथान्यस्याभ्यर्च्यास्तदनु खमणेर्द्वादश कलाः ॥ १४ ॥

# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL

New Series, No 34



# THE NARADA PANCHARATRA.

EDITED

BY

Revd K M Banerjea

Fasciculus III.

---

CALCUTTA

PRINTED AT BISHOP'S COLLEGE PRESS

1862

## SANSKRIT WORKS PUBLISHED,

IN THE NEW SERIES

The Vaiseshika Sutras with Commentaries, by Pandita Jaya Narayana Tarkapanchanana Complete in five Fasc Nos 4 5, 6, 8 and 10

The Sândilya Sutras with Swapneswara s Commentary Edited by Dr J K Ballantyne L L D complete in one Fasciculus, No 11

The Kaushitaki Brahmaña Upanishad with Sankarananda s commentary edited with a translation by E B Cowell M A complete in two Fasciculi Nos 19 and 20

## SANSKRIT WORKS IN PROGRESS

A translation of the Surya Siddhanta and Siddhânta Siromañi, by Pandita Bapu Deva Sâstri under the superintendence of Archdeacon Pratt Fasc I, II Nos 1 and 13

The Dasa Rupa with the exposition of Dhanika Edited by F E Hall D C L, Fasc I II, Nos 12 and 24

The Narada Pancharâtra. Edited by Rev K M Banerjea Fasc I II Nos 17 and 25

The Kávyádarśa of Sri Dandin, Edited with a commentary by Pandita Prem chandra Tarkabágiśa. Fasciculus I No 30

एवं संकल्प्याग्निमाधाररूपं
　भानुन्तद्वत्कुम्भरूपं विधिज्ञः ।
न्यसेत्तस्मिन्नक्षताद्यैः समेतं
　कूर्चं स्वर्णरत्नवर्यैः प्रदीप्तं ॥ १५ ॥
अथ क्वाथतोयैः क्षकारादिवर्णै-
　र्वकारावसानैः समापूरयेत्तं ।
स्वमन्त्रविजापावसानं पयोभि-
　र्गवां पञ्चगव्यैर्जलैः केवलैर्वा ॥ १६ ॥
सकलजनस्थिथवसुयुगसंख्याः
　सुरगणपूर्व्वा न्यसतु तथैव ।
तदुपकलास्ताः सलिलसुगन्धाः
　स तु सुमनोभिस्तदनुयजेच्च ॥ १७ ॥
उदीच्यकुष्ठकुङ्कुमाम्बुलोहसज्जटासुरैः ।
सग्रीतमित्युदीरितं हरेः प्रियाष्टगन्धकं ॥ १८ ॥
क्वाथतोयपरिपूरितोदरे
　संविलङ्घ्य विधिमाऽष्टगन्धकं ।
सोमसूर्य्यशिखिनां पृथक् कला-
　सेवकर्म विनियोजयेत् सुधीः ॥ १९ ॥
तद्वदक्षरभवास्तु कादिभि-
　स्तादिभिः पुनरुकारजाः कलाः ।
पादिभिर्मलिपिजास्तु विन्दुजाः
　यादिभिः सुरगणेन नादजाः ॥ २० ॥

समावाहनान्ते सुसंस्थापनात् प्राक्
ऋचस्तच्च तत्रातिजप्या बुधेन ।
समभ्यर्च्य तास्ताः पृथक् तत्र पाथो-
ऽर्पयेन्मूलमन्त्रेण कुम्भे यथावत् ॥ २१ ॥
सहकारबोधपनसस्तवकैः
शतमन्युकरिष्ठकलितैः कलसं ।
पिधातु पुष्पफलतण्डुलकै-
रभिपूर्णया च शुभचक्रिकया ॥ २२ ॥
अभिवेष्टयेत्तदनु कुम्भमुख
नवनिर्मलांशुकयुगेन बुधः ।
समलङ्कृतेऽच कुसुमादिभि-
रप्यभिवाहयेत् परतरञ्च महः ॥ २३ ॥
सकलीविधाय कलसस्थममुं
हरिमस्तु तत्त्वमनुविन्यसनैः ।
परिपूजयेद्गुरुमथावहितः
परिवारयुक्तमुपचारगणैः ॥ २४ ॥
दत्त्वासनं स्वागतमप्युदीर्य्य
तथार्घ्यपाद्याचमनीयकानि ।
स्नानञ्च वासश्च विभूषणानि
साङ्गाय तस्मै विनियोज्य मन्त्री ॥ २५ ॥
गात्रे पवित्रैरथगन्धपुष्पैः
पूर्वं यजेन्न्यासविधानतोऽस्य ।

सृष्टिस्थितिसंवाङ्कयुगञ्च वेणुं
मालामभिज्ञानवराश्रमस्थौ ॥
मूलेन चार्घ्यार्च्चनवत् प्रपूज्य
समर्च्चयेदावरणानि भूयः ॥ २६ ॥
दिक्ष्वथ दामसुदामौ वसुदामः किङ्किनी च संपूज्याः ।
तेजोरूपास्तद्वद्वहिरङ्गानि कोणरेषु समुतिर्यजेत ॥२७॥
हुतवहनिर्ऋतिसमीरण-
शिवदिक्षु हृदादिवर्मपर्य्यन्तं ।
मुक्तेन्दुकान्तकुवलयहारि-
नीलहुताशप्रभाः प्रमदाः ॥ २८ ॥
अभयवरस्फुरितकराः
प्रधानतनवोऽङ्गदेवताः सर्थ्याः ।
रुक्मिण्याद्या महिषी-
रष्टौ संपूजयेद्दलेषु ततः ॥ २९ ॥
दक्षिणकरधृतकमला-
वसुभरितसुपात्रमुद्रितान्यकराः ।
रुक्मिण्याख्या सत्या
लक्ष्मा जित्या ह्वया सुनन्दा च ॥३०॥
भूयश्च मित्रविन्दा
सुलक्षणाप्यृक्षजा सुशीला च ।
तपनीयमरकताभाः
ससितविचित्राम्बरवेशास्त्वेताः ।

घृथुकुचभरालसाङ्ग्यो
विविधमालप्रकरविलसिताभरणाः ॥ ३१ ॥
ततो यजेद्दलाग्रेषु वसुदेवञ्च देवकीं ।
नन्दगोपं यशोदाञ्च बलभद्रं सुभद्रिकां ॥ ३२ ॥
गोपालगोपीस्तद्वक्के विलीनमितलोचनाः ।
ज्ञानमुद्राभयकरौ पितरौ पीतपाण्डरौ ॥ ३३ ॥
दिव्यमालाम्बरालेपभूषणे मातरौ पुनः ।
धारयन्त्यौ च वरदं पायसापूपपाचकं ॥ ३४ ॥
अरुणश्यामले हारमणिकुण्डलमण्डिते ।
बलः शंखेन्दुधवलो मुषलं लाङ्गलं दधत् ॥ ३५ ॥
हलालोलानीलवासा हेलावानेककुण्डलः ।
कलायश्यामला भद्रा सुतदा भद्रभूषणा ॥ ३६ ॥
वराभययुता पीतवसना रूढयौवना ।
वेणुवीणावेत्रयष्टिशङ्खशृङ्गादिपाणयः ॥ ३७ ॥
गोपागोप्यश्च विविधोपायनात्तकराम्बुजाः ।
मन्दरादींश्च तद्वाह्ये पूजयेत् कल्पपादपान् ॥ ३८ ॥
मन्दारसन्तानकपारिजात-
कल्पद्रुमाख्यान् हरिचन्दनञ्च ।
मध्ये चतुर्दिक्ष्वभिवाञ्छितार्थ-
दानैकदीक्षान्वितनम्रशाखान् ॥ ३९ ॥

इति श्रीनारदपञ्चरात्रे तृतीयरात्रे सप्तमोऽध्यायः । ७ ।

अष्टमोऽध्यायः ।



व्यास उवाच ॥

हरिहव्यवाट्तरणिजक्षपाटवा-
पतिवायुसोमशिवशेषपद्मजान् ।
प्रयजेत स्वदिक्ष्वमलधीः स्वजा-
त्यधीश्वरहेतिपचपरिवारसमेतान् ॥ १ ॥
कपिशकपिलनीलश्यामलश्वेतधूम्रा-
मलसितशुचिरक्तवर्णतो वासवाद्याः ।
करकमलविराजत्स्वायुधा दिव्यवेशा
विविधमणिगणोग्रस्फुरद्भूषणाढ्याः ॥ २ ॥
दम्भोलिशक्त्यभिधदण्डकृपाणपाश-
चण्डाङ्कुशाङ्गदाचिशिखारिपथाः ।
अर्च्या बहिर्निजसुलक्षणलक्षितमौलियुक्ताः
स्वस्वायुधाभयसमुद्यतपाणिपद्माः ॥ ३ ॥
कनकरजततोयदाश्वचम्पा-
रुणहिमनीलजवाप्रवालभासः ।
क्रमत इति रुचात्तवज्रपूर्वा
रुचिरविलेपनवस्त्रमाल्यभूषाः ॥ ४ ॥
कथितमाहृतिसप्तकमच्युता-
र्चणविधयाति सर्व्वसुखावहं ।

प्रयजेदथवाङ्गपुरन्दरा-
ग्निमुखैस्त्रितयावरणं त्विदं ॥ ५ ॥
इत्या जयित्वा जलगन्धपुष्पैः
कृष्णाष्टकेनाप्यथ कृष्णपूजां ।
कुर्य्याद्बुधस्तानि समाह्वयानि
वक्ष्यामि तारादिनमोऽन्तिकानि ॥ ६ ॥
श्रीकृष्णो वासुदेवश्च नारायणसमाह्वयः ।
देवकीनन्दनो यदुश्रेष्ठो वार्ष्णेय इत्यपि ॥ ७ ॥
असुराक्रान्तशब्दान्ते भारहारीति सप्तमः ।
धर्मसंस्थापकश्चैव चतुर्थ्यन्ताः क्रमादिमे ॥ ८ ॥
एभिरेवाथ वा कार्य्या पूजा वै कंसवैरिणः ।
संसारसागरोत्तीर्थ्यै सप्तकामाप्तये बुधैः ॥ ९ ॥
साराङ्गारद्युतविलुलितैर्जर्जरैः संविकीर्णै-
र्गुग्गुल्वाद्यैर्घनपरिमलैर्धूपमासाद्य मन्त्री ।
दद्यान्नीचैर्द्दनुजमय मायाप्रवेशाय दोष्णा
घण्टां गन्धाक्षतसुमनकैरर्चितां वादयानः ॥ १० ॥
तदुद्दीप्तं सुरभिघृतसंसिक्तकर्पूररक्तं
दीपं दद्यात् स्तुतिविशदधीः पद्मपर्य्यन्तमुच्चैः ।
दत्त्वा पुष्पाञ्जलिमपि विधायार्पयित्वा च पाद्यं
साचामं कल्पयेत्तद्विपुलमपि तदा स्वर्णपात्रे निवेद्यं ॥११॥
सुरभितरेण दुग्धहविषा सुशृतेन शिता
समुदंशकैरुचिरसत्य विचित्रवासैः ।

दधिनवनीतनूतनसितोपलपूपनिका-
घृतगुडनारिकेलकदलीफलपुष्परसैश्च ॥ १२ ॥
अम्लोक्षितं तदरिमुद्रिकयाऽतिरक्ष्य
वायव्यतापपरिशोषितमग्निदोषा ।
संदह्य वामकरसौधरसाभिपूर्णं
मन्त्रास्मृतीकृतमथाभिमृषन् प्रजप्येत् ॥ १३ ॥
मनुमष्टशः सुरभिमुद्रिकया
परिपूर्णमर्चयतु गन्धपुष्पैः ।
हरिमर्चयेदथ कृतप्रसरा-
ञ्जलिरास्यतोऽस्य विसरेच्च महः ॥ १४ ॥
वीतिहोत्रदयितान्तमुच्चरन्
मूलमन्त्रमथ निःक्षिपेज्जलं ।
अर्पयेत्तदमृतात्मकं हवि-
र्होमिजासकुसुमं समुच्चरन् ॥ १५ ॥
निवेदयामि भगवते जुषानेदं हविर्हविः ।
निवेद्यार्पणमन्त्रोऽयं सर्वार्थासु निजाख्यया ॥ १६ ॥
ग्रासमुद्रां वामदोष्णा विकचोत्पलसन्निभां ।
प्रदर्शयन् दक्षिणेन प्राणादीनाञ्च दर्शयेत् ॥ १७ ॥
स्पृशेत् कनिष्ठोपकनिष्ठिके द्वे
साङ्गुष्ठमूला प्रथमेह मुद्रा ।
तथापरा तर्जनिमध्यमे स्या-
दनामिकामध्यमिके च मध्या ॥ १८ ॥

अनामिकातर्जनिमध्यमाः स्यात्
तदङ्गुष्ठौ सकनिष्ठिकास्ताः।
स्यात् पञ्चमी तद्वदिति प्रदिष्टाः
प्राणादिमुद्रा निजमन्त्रयुक्ताः ॥ १९ ॥
प्राणापानव्यानसमानोदानाः क्रमाच्चतुर्थ्या युक्ताः।
ताराधारवद्धा चेष्टा कृष्णाध्वनस्ततो मनवः ॥ २० ॥
ततो निवेद्य मुद्रिकां प्रधानया करद्वये।
स्पृशत्वनामिकां निजां मनुं जपन् प्रदर्शयेत् ॥ २१ ॥
नन्दजोऽम्बुमनुविन्दयुङ्नति-
र्वामपार्श्वउदरात्मनि च।
रुद्र आत्मनि निवेद्यमात्मभू-
र्मां स पार्श्वमनिलस्तया नियुक् ॥ २२ ॥
मण्डलमभितो मन्त्री-
बीजाङ्कुरभाजनानि विन्यस्य।
पिष्टमयानपि दीपान्
घृतपूर्णान् विन्यस्येत् सुदीप्तशिखान् ॥ २३ ॥

इति श्रीनारदपञ्चरात्रे तृतीयरात्रेऽष्टमोऽध्यायः ॥ ८ ॥

---

व्यास उवाच ॥

अथ संस्कृते हुतवहे
  विमलधीरभिवाद्य सम्यगभिपूज्य ।
हरिं जुहुयात् सिताघृत-
  युतेन पयःपरिसाधितेन सितदीदिविना ॥ १ ॥
अष्टोत्तरसहस्रं
  समाप्य होमं पुनर्बलिं दद्यात् ।
वशिष्ठाधिनाथेभ्यो
  नक्षत्रेभ्यस्ततश्च करणेभ्यः ॥ २ ॥
सपाद्य पाणी च सुधां समर्प्य
  दत्त्वाम्भ उद्वास्य मुखार्चिरास्ये ।
नैवेद्यमुद्धृत्य निवेद्य विष्वक्-
  सेनाय पृथ्वीमुपलिप्य भूयः ॥ ३ ॥
गण्डूषदन्तधवनाचमनास्यहस्त-
  सूक्ष्मानुलेपमुखवासकमाल्यभूषाः ।
ताम्बूलमप्यतिनिवेद्य स्वराद्यन्वृत्य-
  गीतैः सुहृत्समभिपूजयतात् पुरेव ॥ ४ ॥
गन्धादिभिः सपरिवारमथार्घ्यमस्मै
  दत्त्वा विधाय कुसुमाञ्जलिमादरेण ।

स्तुत्वा प्रणम्य शिरसा चुलुकोदकेन
आत्मानमर्पयतु तच्चरणारविन्दे ॥ ५ ॥
इति पूर्वं प्राणबुद्धिदेहधर्माधिकारतः ।
जाग्रत्स्वप्नसुषुप्ताख्यावस्थासु मनसा वाचा ॥ ६ ॥
कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत् स्मृतं ।
यदुक्तं यत् कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा ॥ ७ ॥
मां मदीयञ्च सकलं हरयेऽहं समर्पये ।
ओं तत्सदिति संप्रोक्तो मन्त्रः स्वात्मार्पणे शुभः ॥ ८ ॥
[1]अनुस्मरन् कलसगमच्युत
जपन् सहस्रकं बुधो वपुष्य-
योदितोज्झितः समा चितीर्विना-
प्यतस्तदपि नयेत् सुधात्मतां ॥ ९ ॥
ध्वजतोरणदिक् कलसादिगता-
मपि मण्डपमण्डलकुण्डलतां ।
अभियोज्य चितिं कलसे कुसुमैः
परिपूज्य जपेत् पुनरष्टशतं ॥ १० ।
अथ शिष्य उपोषितः प्रभाते
कृतनित्यः सुसिताम्बरः सुवेशः ।
धरणीधनधान्यगोबहुलै-
र्विनयाद्धिप्रवरान् हरेः प्रसाद्य ॥ ११ ॥

[1] स्रा,कोऽय न समीचीनतया छन्दोनदोऽसम्भदखावो भ्रान्तिरचानु-मीयते ।

भूयः परीत्य प्रणिपात्य देशिकं
तस्मै परस्मै पुरुषाय देहिने ।
तां वित्तशाठ्यं परिहृत्य दक्षिणां
दत्त्वा तनुं स्वाञ्च समर्पयेत् सुधीः ॥ १२ ॥
अथाभिषेकमण्डपे सुखोपविष्टमासने ।
गुरुर्विशोधयेदमुं पुरेव शोषणादिभिः ॥ १३ ॥
पीठन्यासावसानं वपुषि विमलधीर्न्यस्य तस्यासिकाया
मन्त्रेणाभ्यर्च्य दूर्वाक्षतकुसुमयुतां रोचनां के निधाय ।
आशीर्भिर्द्विजानां विशदपटुरवैर्गीतवादित्रघोषै-
र्मङ्गल्यैरानयत्तं कलसमभितस्तत्समीपं प्रतीतः ॥ १४ ॥
तेनाभिलीनमणिमन्त्रमहौषधेन
धाम्ना परेण परमामृतरूपभाजा ।
संपूरयन् वपुरमुष्य ततो वितन्वन्
तत्साभवर्ण्यमभिषेचयतात् यथावत् ॥ १५ ॥
क्षाद्यैराऽऽन्तिमवर्णै-
रङ्गिश्च पूर्णतनुस्त्रिव्यक्तमन्त्रान्तैः ।
परिधृतसिततरवसन-
द्वितयो वाचयमः समाचान्तः ॥ १६ ॥
बहुशः प्रणम्य देशिक-
नामानं हरिमथोपसंपूज्य ।
तद्दक्षिणतस्तिष्ठे-
दभिमुख एकाग्रमानसः शिष्यः ॥ १७ ॥

न्यासैर्यथाविधि तमच्युतसान्निधाय
गन्धाक्षतादिभिरलंकृतवर्ष्मणोऽस्य।
ऋष्यादियुक्तमथ मन्त्रवरं यथावत्
ब्रूयात् त्रिशो गुरुरनर्घ्यमवाकमन्ते॥ १८॥
गुरुणा विधिवत् प्रसाधितं
मनुमष्टोत्तरशतं प्रजप्य बुधः।
अभिवन्द्य ततः शृणोति सम्यक्
समयान् भक्तिभरेण नम्रमूर्त्तिः॥ १९॥
दत्त्वा शिष्याय मनुं
न्यस्याथ गुरुः कृतात्मज यजनविधिः।
अष्टोत्तरसहस्र
स्वशक्तिहानानवाप्तये जप्यात्॥ २०॥
कुम्भादिकञ्च सकलं गुरवे निवेद्य
संपूजयेत् द्विजवरानपि भोज्यजातैः।
"कुर्व्वन्त्यनेन विधिना य इहाभिषेकं
ते सम्पदां निलयनं हि त एव धन्याः॥ २१॥
संक्षिप्य किञ्चिदुदिता
समर्थ्य दीक्षा संस्मरणाय विषमधियां।
एनां प्रविश्य मन्त्री
सर्व्वान् मन्त्रान् जपेत् जुहुयात् यजेत॥ २२॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे तृतीयरात्रे नवमोऽध्यायः॥ ९॥

दशमोऽध्यायः ।



श्रीव्यास उवाच ।

चैत्रेन्दुतन्मासि तमीसपक्षे
पुण्यक्षेत्रे देशिकात् प्राप्य दीक्षां ।
तेनादिष्टः पूर्व्वसेवां द्वितीये
मासि द्वादश्यामारभेतामलायां ॥ १ ॥
कृत्वा स्नानाद्यं कर्म देहार्च्चनान्तं
वर्त्माश्रित्य प्रागीरितं मन्त्रिमुख्यः ।
शुद्धो मौनी ब्रह्मचारी निशाशी
जप्याच्छान्तात्मा शुद्धपद्माक्षदाम्ना ॥ २ ॥
तन्वन् शुश्रूषां गोषु ताभ्यः प्रयच्छन्
ग्रासं भूतेषु प्रोद्वहंश्चानुकम्पां ।
मन्त्राधिष्ठात्रीं देवतां वन्दमानो
दुर्गां दुर्बोधध्वान्तभानुं गुरुञ्च ॥ ३ ॥
कुर्व्वन्नात्मीयं कर्म वर्णाश्रमस्थ
मन्त्रं जप्ताऽद्भिः स्नानकारिणीभिः सिञ्चेत् ।
आचमेन पार्थस्तत्त्वसख्य प्रशस्त
भुञ्जानश्चानु सप्तजप्तान् जनाद्यः ॥ ४ ।
अद्रेः शृङ्गे नद्यास्तटे विल्वमूल
तोये ह्रद्ये गोकुले विष्णुगेहे ।

अश्वत्थादधस्तादथुवेश्चापि तीरे
स्थानेष्वेतेष्वासीनास्त्वेकैकशस्तु ॥ ६ ॥
प्रजपेदयुतचतुष्कं
दशाक्षरं मनुवरं पृथक् क्रमशः ।
अष्टादशाक्षरं च-
दयुतद्वयमीरिता संख्या ॥ ७ ॥
शाकं मूल फल गोस्तनभवदधिनीभैक्षमन्नञ्च शक्तून्
दौग्धान्नं चाददानः क्षितिधरशिखरादौ क्रमात् स्थानभेदे ।
एकं वै पानशक्तौ गदितमिति मया पूर्व्वसेवाविधानं
निष्पलेऽस्मिन् भूयः प्रजपतु विधिवत् सिद्धये साधकेन्द्रः ॥ ८ ॥
देहार्च्चनान्ते दिनशो दिनादौ
दीचोक्तमार्गंदितयं विधानं ।
आश्रित्य कृष्णं प्रयजेद्दिवित्त-
गेहेषु निष्ठो हुतशिष्टभोजी ॥ ९ ॥
दशलक्षमक्षयफलदं मनुं
प्रतिजप्य निर्मलमतिर्दशाक्षरं ।
जुहुयाद्गुडाज्यमधुसंयुतैर्नवै-
र्वरुणायुजैर्हुतवहे दशायुतं ॥ १० ॥
गुपिलयुगलवर्णञ्चेममनुं पञ्चलक्षं
प्रजपतु जुहुयाच्च प्रोक्तकृसार्द्धलक्षं ।

अमलमतिरलाभे पायसैरम्बुजानां
घृतसहितसिताभैरारभेद्धोमकर्म ॥ ११ ॥
अशक्तानां होमे निगमरसनागेन्द्रगुणितो
जपः कार्य्यस्त्विति द्विजनृपविशामाहुरपरे ।
स होमस्त्वेदेषां सम इह जपो होमवलितो
य उक्तो वर्णानां स खलु विहितस्तत्त्व न हृशां ॥ १२ ॥
यं वर्णमाश्रितो यः
शूद्रः स च तनुतां ध्रुवं विहितं ।
विदधीत जपं विधिवत्
श्रद्धावान् भक्तिभवावनम्रतनुः ॥ १३ ॥
पुनरभिषिक्तो गुरुणा
विधिवत् विश्राणय्य दक्षिणां तस्मै ।
अभ्यवहार्य्य च विप्रान्
विभवैः संप्रीणयेच्च भक्तियुतः ॥ १४ ॥
इति मन्त्रवरं हितयान्यवरं
परिवाध्य जपादिभिरच्युतधीः ।
प्रयजेत् सवनत्रितये दिनशो
विधिनाथ मुकुन्दममन्दमतिः ॥ १५ ॥
अथ श्रीमदुद्यानसंवीत हेम-
स्थलोद्भासिरत्नस्फुरन्मण्डपान्तः ।
लसत्कल्पवृक्षाध उद्दीप्तरत्न-
स्थलाधिष्ठिताम्भोजपीठाधिरूढं ॥ १६ ॥

महानीलनीलाभमत्यन्तबालं
गुडस्निग्धवक्रान्तविस्रस्तकेशं ।
अनिर्ब्रातपश्यांकुलोत्फुल्लपद्म-
प्रमुग्धाननं श्रीमदिन्दीवराक्षं ॥ १७ ॥
चलत्कुण्डलोल्लासिसोत्फुल्लगण्डं
सुघोणं सुशोणाधरं सुस्मितास्यं ।
अनेकाश्मरश्म्युल्लसत्कण्ठभूषं
लसन्तं वहन्तं नखं पौण्डरीकं ॥ १८ ॥
समभूषरोरःस्थलं वेणुधन्या
सुपुष्टाङ्गमष्टापदाकल्पदीप्तं ।
कटीरस्थले चारुजङ्घान्तयुग्मे
पिनद्धं कणत्किङ्किनीजालदाम्ना ॥ १९ ॥
हसन्तं हसद्बन्धुजीवप्रसून-
प्रभं पाणिपादाम्बुजोदारकान्त्या ।
करे दक्षिणे पायसं वामहस्ते
दधानं नवं शुद्धहैयङ्गवीनं ॥ २० ॥
महीभारभूतामरारातियूथा-
ननःपूतनादीन्निहन्तुं प्रवृत्तं ।
प्रभुं गोपिकागोपवृन्दैः परीतं
सुरेन्द्रादिभिर्वन्दितं देववृन्दैः ॥ २१ ॥
मगे पूजयित्वेत्यनुस्मृत्य कृष्णं
तदङ्गेन्द्रवज्रादिभिर्भक्तिनम्रः ।

सिताभे च हैयङ्गवीनैश्च दध्ना
विमिश्रेण दौग्धेन संप्रीणयेत्तं ॥ २२ ॥

इति श्रीनारदपञ्चरात्रे तृतीयरात्रे दशमोऽध्यायः ॥ १० ॥

---

एकादशोऽध्यायः ।

---

श्रीव्यास उवाच ।

इति प्रातरर्च्चयेदच्युतं यो
नरः प्रत्यहं शश्वदांत्निकयुक्तः ।
लभेत् सोऽचिरेणैव लक्ष्मीं समग्रा-
मिह प्रेत्य शुद्धिं परं धाम भूयात् ॥ १ ॥
अह्नो मुखेऽनुदिनमित्यभिपूज्य शौरिं
दध्नाथवा गुडयुतेन निवेद्य तोयैः ।
श्रीमन्मुखे समतितर्प्य तद्धिया तं
जप्यात् सहस्रमथ साष्टकमादरेण ॥ २ ॥
मध्यन्दिने जपविधानविशिष्टरूपं
वन्द्यं सुरर्षियतिखेचरमुख्यवृन्दैः ।
गोगोपवनितानिकरैः परीतं
सान्द्राम्बुदच्छविसुजातमनोज्ञराङ्गं ॥ ३ ॥

मायूरपचपरिक्लृप्तवतंसरम्यं
धम्मिल्लमुक्तसितचिल्लिकमम्बुजाक्षं ।
पूर्णेन्दुविम्बवदनं मणिकुण्डलश्री-
गण्डं सुनासमतिसुन्दरमन्दहासं ॥ ४ ॥
पीताम्बरं रुचिरनूपुरहारकाञ्ची-
केयूरकामिकटकादिभिरुज्ज्वलाङ्गं ।
दिव्यानुलेपनविषङ्गितमंसराज-
दम्लानचित्रवनमालमनङ्गदीप्तं ॥ ५ ॥
वेणुं धमन्तमथवा स्वकरे दधानं
सव्येतरे पशुपयष्टिमुदारवेशं ।
दक्षे मणिप्रवरमीप्सितदानदक्षं
ध्यात्वैवमङ्गयतु नन्दजमिन्दिराद्यैः ॥ ६ ॥
दामादिकाङ्गदयितासुहृदङ्घ्रिपेन्द्र-
वज्रादिभिः समभिपूज्य यथा विधानं ।
दीक्षाविधानकथितञ्च निवेद्यजातं
हैमे निवेदयतु पात्रवरे यथावत् ॥ ७ ॥
अष्टोत्तरशतमथो जुहुयात्पयोऽग्नेः
सर्पिर्युतैः सुसितशर्करया विमिश्रैः ।
दद्याद्बलिञ्च निजदिक्षु सुरर्षियोगि-
रथोपदैवतगणेभ्य उदारचेताः ॥ ८ ॥
नवनीतमिलितपायसधियाञ्चनान्ते जनैर्मुखं तस्य ।
संतर्प्य जपतु मन्त्री सहस्रमष्टोत्तरशतं वापि ॥ ९ ॥

अग्नौ मध्ये बल्लवीवल्लभं त
नित्यं भक्त्याभ्यर्चयेद्यो नराग्र्यः ।
देवाः सर्वे तं नमस्यन्ति ग्रश्व-
द्दर्शेरन् वै तद्वशे सर्वलोकाः ॥ १० ॥
मेधायुःश्रीकान्तिसौभाग्ययुक्तः
पुत्रैर्मित्रैर्गोमहीरत्नजातैः ।
भोगैश्चान्यैर्भूरिभिः सन्निशाद्यो
भूयाद्धामाऽन्ते च तस्याच्युताख्यं ॥ ११ ॥
तृतीयकालपूजायामस्ति कालविकल्पना ।
सायाह्ने निशि वेत्यत्र वदन्त्येके विपश्चितः ॥ १२ ॥
दशाक्षरेण चेद्राचौ सायाह्नेऽष्टादशन्ततः ।
उभयोमुभयेनैव कुर्यादित्यपरे जगुः ॥ १३ ॥
सायाह्ने द्वारवत्यान्तु चित्रोद्यानोपशोभिते ।
द्वाष्टसाहस्रसंख्यातैर्भवनैरभिसंवृते ॥ १४ ॥
हंससारससंकीर्णैः कमलोत्पलशालिभिः ।
सरोभिरमलाम्भोभिः परीते भवनोत्तमे ॥ १५ ॥
उद्यत्प्रद्योतनोद्योतसद्युतौ मणिमण्डपे ।
महास्तरे सुखासीनं हेमाम्भोजासने हरिं ॥ १६ ।
नारदाद्यैः परिवृतमात्मतत्त्वविनिर्णये ।
तेभ्यो मुनिभ्यः स्वं धाम दिशन्त परमक्षरं ॥ १७ ॥
इन्दीवरनिभं सौम्यं पद्मपत्रायतेक्षणं ।
स्निग्धकुन्तलसम्भिन्नकिरीटमुकुटोज्ज्वलं ॥ १८ ॥

चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलं ।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनं ॥ १९ ॥
काश्मीरकपिशोरस्कं पीतकौशेयवाससं ।
हारकेयूरकटकरसनाद्यैः परिष्कृतं ॥ २० ॥
हृतविश्वम्भराभूरिभारं मुदितमानसं ।
शंखचक्रगदापद्मराजद्भुजचतुष्टयं ॥ २१ ॥
एवं ध्यात्वाऽर्चयेन्मन्त्री स्यादङ्गैः प्रथमाऽऽवृतिः ।
द्वितीया महिषीभिस्तु तृतीयायां समर्चयेत ॥ २२ ॥
नारदं पर्व्वतं जिष्णुं निशठोद्धवदारुकान् ।
विश्वक्सेनञ्च सैनेयं दिक्ष्वग्रे विनतासुतं ॥ २३ ॥
लोकेशैस्तत्प्रहरणैः पुनरावरणद्वयं ।
इति संपूज्य विधिवत् पायसेन निवेदयेत् ॥ २४ ॥
तर्पयित्वा खण्डमिश्रदुग्धबुद्ध्या जलैर्हरिं ।
जपेदष्टशतं मन्त्री भावयन् पुरुषोत्तमं ॥ २५ ॥
पूजासु होमं सर्व्वासु कुर्य्यान्मध्यन्दिनेऽथवा ।
आसनाद्यर्घ्यपर्य्यन्तं कृत्वा स्तुत्वा नमेत् सुधीः ॥ २६ ॥
समर्प्यात्मानमुद्वास्य तं सुहृत्सरसीरुहे ।
विन्यस्य तन्मयो भूत्वा पुनरात्मानमर्चयेत् ॥ २७ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे तृतीयरात्रे एकादशोऽध्यायः ॥११॥

द्वादशोऽध्याय ।



श्रीव्यास उवाच ।

सायाह्ने वासुदेवं यो नित्यमेवं यजेन्नरः ।
सर्व्वान् कामानवाप्यान्ते स याति परमां गतिं ॥ १ ॥
रात्रौ चेन्मन्मथाक्रान्तमानसं देवकीसुत ।
यजेद्रासपरिश्रान्तं गोपीमण्डलमध्यग ॥ २ ॥

पृथुं सुवृत्त मसृण वितस्ति-
मात्रोन्नतं कौ विलिखन्नशङ्क ।
आक्रम्य पङ्क्त्यामितरेतरा तु
हस्तैर्भ्रमोऽय खलु रासगोष्ठी ॥ ३ ॥
स्थलनीरजमसृणपरागभृता
लहरीकणजालभरेण सुता ।
मरुता परितापहताध्युषिते
सुषिते यमुनापुलिने विपुले ॥ ४ ॥
अशरीरनिशातशरोन्मथित-
प्रमदाशतकोटिभिराकुलिते ।
उडुनाथकरैर्विशदीकृतसु-
प्रसरे विचरद्भ्रमरीनिकरे ॥ ५ ॥
विद्याधरकिन्नरसिद्धसुरै-
र्गन्धर्व्वभुजङ्गमचारणकैः ।

द्वारोपहितैः सुविमानगतैः
खस्थैरतिहृष्टसुपुष्पचये ॥ ६ ॥
इतरेतरबद्धतरप्रमदा-
गमकल्पितरासविहासविधौ ।
मणिशङ्कुगमप्यमुना वपुषा
बहुधा विहितस्वकदिव्यतनुं ॥ ७ ॥
सुदृशामुभयोः पृथगन्तरगं
दयिताकुलबद्धभुजद्वितयं ।
निजसङ्गविजृम्भदनङ्गशिखि-
ज्वलिताङ्गलसत्पुलकालियुजां ॥ ८ ॥
विविधश्रुतिभिन्नमनोज्ञतया
सुरसप्तकमूर्च्छनतानगणैः ।
भ्रममाणमसुभिद्दारमणि-
स्फुटमन्त्रनसिञ्जितचारुतरं ॥ ९ ॥
इति भिन्नतनुं मणिभिर्मनितं
तपनीयमयैरिव मारकतं ।
मणिनिर्मितमध्यगशङ्कुलस-
द्विपुलारुणपङ्कजमध्यगतं ॥ १० ॥
अतसीकुसुमावतनुं तरुणं
तरुणारुणपद्मपलाशदृशं ।
नवपल्लवचित्रगुलुच्छुलस-
च्छिखिपिच्छपिनद्धकरप्रचयं ॥ ११ ॥

चटुलभ्रुवमिन्दुसमानमुखं
　मणिकुण्डलमण्डितगण्डयुगं ।
शशिवन्नसदृग्वदनच्छदनं
　मणिराजदनेकविधाभरणं ॥ १२ ॥
असनप्रसवच्छदनोज्ज्वलस-
　द्वसनं सुविलासनिवासभुवं ।
नवविद्रुमभद्रकराङ्घ्रितलं
　भ्रमराकुलदामविराजभुजं ॥ १३ ॥
तरुणीकुचयुक्परिरम्भमिल-
　न्मलयारुणवक्षसमुक्षगतिं ।
शिवधेनसमीरितगोपवरं
　स्मरविह्वलितं भुवनैकगुरुं ॥ १४ ॥
प्रमदेति पीठवरे विधरं
　प्रयजेदिति रूपमरूपमजं ।
प्रथमं परिपूज्य तदङ्गहृतिः
　मिथुनानि यजेद्रसशालिमतः ॥ १५ ॥
दलषोडशके स्मरमूर्त्तिगणं
　सहशक्तिकमुत्तमरासगतं ।
सरमासदन स्वकलासहितं
　मिथुनाङ्गमथेन्द्रपरिप्रमुखान् ॥ १६ ॥
इति सम्यगमुं परिपूज्य हरिं
　चतुराहृतिमंहतमार्द्रमतिः ।

रजतारचिते चषके सशितं
सघृतं सुपयोऽस्य निवेदयतात् ॥ १७ ॥
विभवे सति कांस्यमयेषु पृथक्
स्वकरेषु च षोडशसु क्रमशः ।
मिथुनेषु निवेद्य पयः सशितं
विदधीत पुरोवदथो सकलं ॥ १८ ॥
सकलभुवनमोहनविधिं यो
नियतममुंनिशि निश्चदारचेताः ।
भवति स खलु सर्व्वलोकपूज्यः
श्रियमतुलां समवाप्य यात्यनन्तं ॥ १९ ॥
निशि वा दिनान्तसमये
प्रपूजयेन्नित्यशो हरिं भक्त्या ।
समफलमुभयं हि ततः
संसाराब्धिं समुत्तितीर्षति यः ॥ २० ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे तृतीयरात्रे द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयदशोऽध्यायः ।

श्रीव्यास उवाच ।

इत्येवं मनुमिममुद्धं मधुरिपुं यो रात्रिकालं यजेत्
तस्यैवाखिलजन्तुजातदयितस्याशोधिजा वेश्मनः ।

हस्ते धर्मसुखार्थमोक्षविभवाः सद्वर्गसंप्रार्थिताः
सान्द्रानन्दमहारसद्रवमुचो येषां फलश्रेणयः ॥ १ ॥
अथोच्यते पूर्व्वसमीरितानां
पूजावसाने परमस्य पुंसः।
कल्पस्तु काम्येष्वपि तर्पणानां
विनापि पूजां खलु यैः फलं स्यात् ॥ २ ॥
सन्तर्प्य पीठमन्त्रं
शक्तीः सकृत् प्रथममच्युतं तच।
आवाह्य पूजयेत्तं
तोयैरेवार्थितैः समुपचारैः ॥ ३ ॥
बद्धाथ धेनुमुद्रां
तोयैः सम्पाद्य तर्पणद्रव्यं।
तद्वद्वाञ्जलिना तं
सुवर्णचषकीकृतेन तर्पयतु ॥ ४ ॥
विंशतिरष्टोपेता
कालचयतर्पणेषु संख्योक्ता।
भूयः स कालविहितान्
सकृत् सकृत्तर्पयेच्च परिवारान् ॥ ५ ॥
प्रातर्दधिगुडमिश्रं
मध्याह्ने पायसं सनवनीतं।
क्षीरं तृतीयकाले
ससितोपलमित्युदीरितं द्रव्यं ॥ ६ ॥

तर्पयामि पदं योज्यं मन्त्रान्तेष्वेषु नामसु ।
द्वितीयान्तेषु तु पुनः पूजाशेषं समापयेत् ॥ ७ ॥
अभ्युच्य तत्प्रसादाङ्घ्रिरात्मानं प्रपिवेदपः ।
तज्जसांस्त्वभ्रसोद्वास्य तन्मयः प्रजपेन्मनुं ॥ ८ ॥
अथ द्रव्याणि काम्येषु वक्ष्यन्ते तर्पणेषु यत् ।
तानि प्रोक्तविधानानामाश्रित्यान्यतमं यजेत् ॥ ९ ॥

द्रव्यैः षोडशभिरमुं
तर्पयेदेकशश्चतुर्व्वारं ।
स चतुः क्षीराद्यन्तैः
सकृज्जलाद्यन्तमच्युतं भक्त्या ॥ १० ॥
पायसदाधिककृसर
गौडान्नं पयो दधीनि नवनीतं ।
आज्यं कदलीमोचा-
चोचाद्यामोदकापूपं ॥ ११ ॥
पृथुका लाजसमेता
द्रव्याणां कथितमिह षोडशकं ।
लाजान्तेऽन्यचौरा
प्राक् समर्प्यं सितोपलापुञ्जं ॥ १२
प्रागे चतुःसप्ततिवारमित्थ
प्रतर्पयेद्योऽनुदिनं नरो हरिं ।
अनन्यधीस्तस्य समाप्तसम्पदः,
करस्थिता मण्डलतोऽभिवाञ्छिताः ॥ १३ ॥

धारोष्णपक्कपयसी
दधिनवनीते घृतञ्च दौग्धान्नं ।
मत्स्याण्डौ मध्वमृतं
द्वादशभस्तर्पयेन्नवभिरेभिः ॥ १४ ॥
तर्पणविधिरयमपरः
पूर्व्वोदितः सफलोऽष्टशतसंख्यः ।
कर्मणि कर्मणि विज्ञतौ
जनसंवलनैर्विशेषतो विहित. ॥ १५ ॥
सखण्डधारोष्णधिया मुकुन्दं
व्रजन् पुरं ग्राममपि प्रतर्प्य ।
लभेत भोज्यं सरसं सभृत्यै-
र्वासांसि धान्यानि धनानि मन्त्री ॥ १६ ॥
यावत्सन्तर्पयेन्मन्त्री तावत्संख्यं जपेन्मनु ।
तर्पणेनैव साध्यानि साधयेदखिलान्यपि ॥ १७ ॥
द्विजो भिक्षावृत्तिर्य इह दिनेशो नन्दतनयः
स्वयं भूत्वा भिक्षामटति हसनो गोपसुदृशां ।
असावेताभिः खेलैर्ललितललितैर्नर्मविधिभि-
र्दधिक्षीराज्याभ्यां प्रचुरतरभिक्षां स लभते ॥ १८ ॥
मध्ये कोणेषु षट्स्वग्न्यनलपुरपुटस्याखिखत् कर्णिकायां
कन्दर्पासाध्ययुक्तं विवरगतषडर्णं द्विशः केशरेषु ।
शक्तिः श्रीपूर्व्वकालिद्विनवलिपिमनोरक्षवाणीच्छदानां
मध्ये वर्णान् दशानां दशलिपिमनुवर्य्यस्य चैकैकशोऽञ्जं
॥ १९ ॥

भूपद्मनाभिहतमद्दणमन्मथेन
गोरोचनाभिलिखितं तपनीयसूच्या ।
पट्टे हिरण्मयरचिते गुलिकीकृतन्तं
गोपालमन्त्रमखिलार्थदमेतदुक्तं ॥ २० ॥
सम्पातसिक्तमभिजप्तमिदं महद्भि-
र्धार्य्यं जगत्त्रयवशीकरणैकदक्षं ।
रक्षायशःसुतमहीधनधान्यलक्ष्मी-
सौभाग्यलिप्सुभिरजस्रमनर्घ्यवीर्य्यं ॥ २१ ॥
भूतोन्मादापस्मृति
विषमूर्च्छाविभ्रमज्वरार्त्तानां ।
ध्यायन् शिरसि प्रजपे-
न्मन्त्रमिदं झटिति शमयितुं विक्षतीः ॥ २२ ॥
स्मरस्त्रिविक्रमाक्रान्तः कृष्णाय हृदिमित्यसौ ।
षडक्षरोऽयं संप्रोक्तः सर्वसिद्धिकरो मनुः ॥ २३ ॥
श्रीडासुदीप्तो मायावी नवलाञ्छितमस्तकः ।
सैषा शक्तिः परा सूक्ष्मा नित्या संवित्स्वरूपिणी ॥ २४ ॥
अस्याग्निगोविन्दनवैर्लक्ष्मीबीज समीरितं ।
आद्यामष्टादशा लिपिः स्याद्विंशत्यक्षरो मनुः ॥ २५ ॥
शालग्रामे मणौ यन्त्रे मण्डले प्रतिमासु च ।
नित्यं पूजा हरेः कार्य्या न तु केवलभूतले ॥ २६ ॥
इति जपहुतपूजातर्पणाद्यैर्मुकुन्दं
य इह भजति मन्त्रैरेकमाश्रित्य नित्यं ।

स तु सुचिरमयत्नात् प्राप्य भोगानशेषान्
पुनरमलतरं तद्धाम, विष्णोः प्रयाति ॥ २७ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे तृतीयरात्रे त्रयोदशोऽध्यायः ॥ १३ ॥



चतुर्दशोऽध्यायः ॥

श्रीव्यास उवाच ॥

विनियोगानथो वच्ये मन्त्रयोरुभयोः समान् ।
तदर्थकारिणोऽनन्तवीर्य्यान्मन्त्रांश्च कांश्चन ॥ १ ॥
वन्दे तं देवकीसूनुं सद्योजातं सुसप्रभं ।
पीताम्बरं करलसच्चक्रशङ्खगदाम्बुजं ॥ २ ॥
एवं ध्यात्वा जपेन्मन्त्रं लक्षं ब्राह्मे मुहूर्त्तके ।
स्वादुप्लुतैश्च कुसुमैः पलाशैरयुतं हुनेत् ॥ ३ ॥
मन्त्रोरन्यतरेणैव कुर्य्याद्यः सुसमाहितः ।
स्मृतिं मेधामतिबलाल्लब्ध्वा स कविवाग्भवेत् ॥ ४ ॥
स्यान्मनुस्तन्मयः पूर्व्वो ध्यानहोमफलोऽपरः ।
श्रीमन्मुकुन्दचरणौ सदेति शरणं ततः ॥ ५ ॥
अहं प्रपद्य इत्युक्तो मौकुन्दाष्टादशाक्षरः ।
नारदोऽस्य तु गायत्री मुकुन्दश्चर्पिपूर्व्विका ॥ ६ ॥
प्रातः प्रातरिवोत्थाय जप्त्वा योऽष्टोत्तरं शतं ।
अनेन षड्भिर्मासैः स भवेत् श्रुतिधरो नरः ॥ ७ ॥

उपसंहृतदिव्याङ्गं पुरोऽवन्मातुरङ्गकं ।
चलन्नीश्वारणं बालं नीलाभासं स्मरन् जपेत् ॥ ८ ॥
अयुतं तावदेवाज्यैर्जुहुयाच्च हुताशने ।
स लभेदचलां श्रद्धां भक्तिं शान्तिञ्च शाश्वतीं ॥ ९ ॥
मनुनैतत् समस्तान्तो मरुन्नामितशब्दतः ।
बाललीलात्मने हुं फट् नम इत्यमुनाथवा ॥ १० ॥
नलकूवरगायत्री बालकृष्णा इतीरिता ।
कृष्याद्याः सिद्धयः सर्व्वाः स्युर्जपाद्यैरथामुना ॥ ११ ॥
लम्बिते बालशयने रुदन्तं वल्लभीजनैः ।
प्रेङ्खमानं दुग्धबुद्धा तर्पयेत् सोऽश्नुते फलं ॥ १२ ॥
अमुना वानुरूपान्ते रसरूपपदं वदेत् ।
ओष्ठं रूपनमोदन्द्वमन्त्राधिपतये मम ॥ १३ ॥
अन्नं प्रयच्छ स्वाहेति त्रिंशदर्णोऽन्नदो मनुः ।
नारदानुष्टवन्नाधिपतयोऽस्यर्पिपूर्व्विकाः ॥ १४ ॥
भूतवालग्रहोन्मादस्मृतिभ्रंशाद्युपद्रवैः ।
पूतनास्तनपातारं ग्रस्तं मूर्द्ध्नि स्मरन् जपेत् ॥ १५ ॥
सास्यचूषणनिर्व्विसासर्व्वाङ्गीं क्रन्दतीञ्च तां ।
आविश्य सर्व्वं तं मुक्ता विद्रवन्ति द्रुतं ग्रहाः ॥ १६ ॥
जुहुयात् घरमञ्जर्यां मञ्जरीभिर्विभावसौ ।
प्रश्नतैः पञ्चगव्याद्यैः पूतनाहन्तुराननं ॥ १७ ॥
प्राशयेच्छिष्टगव्यं तत् कलसेनाभिषेचयेत ।
साध्यं सहस्रजप्तेन सर्व्वोपद्रवशान्तये ॥ १८ ॥

मनुनाष्टादशान्तेन हुंफट्स्वाहान्तिकेन वा ।
ऋष्याद्या ब्रह्मगायत्री ग्रहव्यूहरयोऽस्य तु ॥ १९ ॥
निजपादाम्बुजाक्षिप्तशकटं चिन्तयन् जपेत् ।
अयुतं मन्त्रयोरेकं सर्व्वविघ्नोपशान्तये ॥ २० ॥
अङ्गानमीषां मन्त्राणामाचक्रादिभिरर्च्चना ।
अङ्गैरिन्द्रादिवज्राद्यैरुदिता सम्पदे सदा ॥ २१ ॥
बालो नीलतनुर्दोर्भ्यां दध्युत्थं पायस दधत् ।
हविर्वोढा दीपनखकिङ्किनीजालमण्डितः ॥ २२ ॥
ध्यात्वैवमग्नौ जुहुयाच्छतवीर्य्याङ्कुरत्रिकैः ।
पयःसर्पिःप्लुतैर्लक्षमेकन्तावज्जपेन्मनुं ॥ २३ ॥
गुरवे दक्षिणान्दत्त्वा भोजयेद्द्विजपुङ्गवान् ।
स त्वब्दानां शत जीवेन्नीरोगो नात्र संशयः ॥ २४ ॥
अथाप्यन्यो मनुर्दाशार्णान्ते श्रीपुरुषोत्तमः ।
आयुर्मे देहि सम्भाष्य विष्णवे प्रभविष्णवे ॥ २५ ॥
नमोऽन्ता द्व्यधिका त्रिंशदर्णोऽस्यर्षिस्तु नारदः ।
छन्दोऽनुष्टुब्देवता च श्रीकृष्णाङ्गान्यतो ब्रुवे ॥ २६ ॥
रविभूतेन्द्रियवसुनेत्रान्तैरात्मना युतैः ।
महानन्दप्रतिज्योतिर्म्मयो विद्यादिभिः क्रमात् ॥ २७ ॥
जप्त्वा लक्षमिमं मन्त्रं पायसैरयुतं हुनेत् ।
पूर्व्ववत् दूर्वया जुह्वदायुर्दीर्घतरं लभेत् ॥ २८ ॥
दारयन्तं वक्रं दोर्भ्यां कर्णां सगृह्य तुण्डयोः ।
स्मरन् त्रियूनामाचष्टे स्पष्टान्यतरमभ्यसेत् ॥ २९ ॥

यज्ञमतिलजाभ्यङ्गाङ्गवेयुः सुखिनश्च ते ।
अथाप्यन्यो मनुर्बालवपुषे वह्निवल्लभा ॥ ३० ॥
गोरक्षायाङ्कणदेणुं चारयन्तं पशूंस्तथा ।
उक्त्वा गोपालकपदं पुनर्व्वेशधराय च ॥ ३१ ॥
वासुदेवाय वर्मस्ते शिरांस्यष्टादशाक्षरः ।
मनुर्नारदगायत्रीकृष्णाथ्योदिवलेन.वा ॥ ३२ ॥
कुर्य्यान्नोवालसंरचामाचक्राद्यङ्गिना बुधः ।
कुम्भीनसादिक्ष्वेडार्त्तों दृष्टमूर्द्धि स्मरन् हरिं ॥ ३३ ॥
न्टत्यन्तं कालियफणामध्येऽन्यतरमभ्यसेत् ।
दृष्ट्वा पीयूषवर्षिण्या सिञ्चन्तं तत्तनुं बुधः ॥ ३४ ॥
तर्ज्जयन् वामतर्ज्जन्या तन्द्रान्मोचयते विषात् ।
आपूर्य्य कलसं तोयैः स्मृत्वा कालियमर्द्दनं ॥ ३५ ॥
जप्त्वाष्टशतमासिञ्चेद्विषिणं स सुखी भवेत् ।
कारमध्ये निजस्यान्तिफणामध्ये दिवर्णकान् ॥ ३६ ॥
उक्त्वा पुनर्वदेन्नृत्यं करोति तमनन्तरं ।
नमामि देवकीपुत्रमित्युक्त्वा न्टत्यशब्दतः ॥ ३७ ॥
राजानमच्युतं ब्रूयादिति दन्तलिपिर्मनुः ।
अस्याङ्गान्यङ्घ्रिभिर्व्यस्तैः समस्तैर्नारदो मुनिः ॥ ३८
छन्दोऽनुष्टब्देवता च कृष्णः कालियमर्द्दनः ।
कृष्णालूर्चा मनुवरं होतव्यं सर्पिषाऽयुतं ॥ ३९ ॥
अष्टदिक्पालवज्राद्यैरर्चनाऽस्य समीरिता ।
क्रियानेनैव वा सर्व्वा विषघ्नी प्रागुदीरिता ॥ ४० ॥

सहस्रशोऽनेन जगति नास्ति चेडहरो मनुः ।
अङ्गैः सुरतरोः पिष्टे गुडिकाधेनुवारिणा ॥ ४१ ॥
विषग्रीपाननस्याञ्जनालेपैः साधिताऽमुना ।
उद्दण्डवामदोर्दण्डधृतगोवर्द्धनाचलं ॥ ४२ ॥
अन्यहस्ताङ्गुलिव्यक्तस्वरवंशार्पिताननं ।
ध्यायन् जपन् हरिं मन्त्रोरेक रूपं विना व्रजेत् ॥ ४३ ॥
वर्षवाताशनिभ्यः स्याद्भयं तस्य न हि क्वचित् ।
मोघमेघौघयत्नोपगतं तं स्मरन् हुनेत् ॥ ४४ ॥
गोलैरयुतसंख्यातैरनावृष्टिनं संशयः ।
क्रीडन्तं यमुनातोये मज्जन्तं प्लवनादिभिः ॥ ४५ ॥
तच्छीकरजलासारैः सिच्यमानं प्रियाजनैः ।
ध्यात्वाऽयुतं पयःसिक्तैर्हुनेद्वानीरतर्पणैः ॥ ४६ ॥
वृष्टिर्भवत्यकालेऽपि महती नात्र संशयः ।
अमुमेव स्मरन् मूर्द्धि विस्फोटकज्वरादिभिः ॥ ४७ ॥
सदाहमोहैरार्त्तस्य जपाच्छान्तिर्भवेत्क्षणात् ।
अथवा गरुडारूढं बालप्रद्युम्नसंयुतं ॥ ४८ ॥
निजज्वरविनिष्पिष्टज्वराभिष्टुतमच्युतं ।
ध्यात्वा जुह्वति भूतस्य मूर्द्धन्यज्वरमभ्यसेत् ॥ ४९ ॥
शान्तिं व्रजेदसाध्योऽपि ज्वरस्योपद्रवः क्षणात् ।
ध्यात्वैवमश्वावम्भसो यथोक्तैश्चतुरङ्गुलैः ॥ ५० ॥
जुहुयादमृताखण्डैरयुतं ज्वरशान्तये ।
निशातशरनिर्भिन्नभीष्मतापहरं हरिं ॥ ५१ ॥

स्पृत्वा स्पृशन् जपेदार्त्तं पाणिभ्यां रोगशान्तये ।
अपमृत्युविनाशाय सान्दीपनिसुतप्रदं ॥ ५२ ॥
ध्यात्वाऽमृतलताखण्डैः चीराक्तैरयुतं हुनेत् ।
मृतपुत्राय विप्राय साजंनं ददतं सुतान् ॥ ५३ ॥
ध्यात्वा लक्षं जपेदेकं मन्त्रोः सुतविवृद्धये ।
पुत्रजीवेन्धनचिते जुहुयादनलेऽयुतं ॥ ५४ ॥
तत्फलैर्मधुराक्तैः स्युः पुत्रा दीर्घायुषोऽस्य तु ।
चीरिद्रुक्वाथसंपूर्णमभ्यर्च्य कलसं निशि ॥ ५५ ॥
जप्त्वाऽयुतं प्रगे नारीमभिषिञ्चेद् द्विषड्दिनं ।
सा वन्ध्यापि सुतान् दीर्घजीविनो गदवर्ज्जितान् ॥ ५६ ॥
लभते नात्रसन्देहस्तज्ज्ञानाशिनी सती ।
प्रातर्व्वाचंयमा नारी रोधिच्छदपुटे जलं ॥ ५७ ॥
अष्टोत्तरशतं जप्तं मासं पुत्रीयती पिवेत् ।
देवकीसुत गोविन्द वासुदेव जगत्पते ॥ ५८ ॥
देहि मे तनयं देव त्वामहं शरणं गतः ।
प्रहितां काशिराजेन कृत्यां जित्वा निजारिणा ॥ ५९ ॥
तत्तेजसा तु नगरीं दहन्तं भावयन् हरिं ।
सुस्निग्धाक्तैर्हुनेद्राचौ सर्षपैः सप्त वासरान् ॥ ६० ॥
कृत्याकर्त्तारमेवासौ कुपिता नाशयेत् ध्रुवं ।
आसीनमाश्रमे दिव्ये वदरीषण्डमण्डिते ॥ ६१ ॥
स्पृशन्तं पाणिपादाभ्यां घण्टाकर्णकलेवरं ।
ध्यात्वाऽच्युतं तिलैर्लचं हुनेत्त्रिमधुराप्लुतैः ॥ ६२ ॥

जपेद्वा सर्व्वपापानां शान्तये कान्तये तनोः।
दीपयन्तं रुक्मिवल्लौ द्यूतासक्तौ स्मरन् हरिं॥ ६३॥
जुहुयाद्दिष्टयोर्हिंस्त्रौ गुडिका गोमयोद्भवाः।
ज्वलद्वह्निमुखैर्बाणैर्वर्षन्तं गरुडस्थितं॥ ६४॥
ध्यायमानं रिपुगणमनुधावन्तमच्युतं।
ध्यात्वैवमभ्यसेन्मन्त्रोरेकं सप्तसहस्रकं॥ ६५॥
उच्चाटनं भवेदेतद्रिपूणां सप्तभिर्द्दिनैः।
उत्क्षिप्तवत्सकं ध्यायन् कपित्थफलहारिणं॥ ६६॥
अयुतं प्रजपेत् साध्यमुच्चाटयति तत्क्षणात्।
आत्मानं कंसमथनं ध्यात्वा मञ्चान्निपातितं॥ ६७॥
कंसात्मानमरिं कर्षन् गतासुं प्रजपेन्मनुं।
अयुतं जुहुयाच्चास्य जन्मोरु हुततर्पणैः॥ ६८॥
अपि सेवितपीयूषो म्रियतेऽरिर्नसंशयः।
अथवा निम्बतैलाक्तैर्हुनेदेधोभिरक्षतैः॥ ६९॥
अयुतं प्रयतो रात्रौ मरणाय रिपोः क्षणात्।
दीपारिष्टदलव्योपकर्पाधास्थिकलैर्न्निशि॥ ७०॥
हुनेदेरण्डतैलाक्तैः श्मशानस्थोऽरिशान्तये।
न शस्तं मारणं कर्म कुर्य्याच्चेदयुतं जपेत्॥ ७१॥
हुनेद्वा पायसैस्तद्वच्छान्तये शान्तमानसः।
जयकामो जपेत्तच्चं पारिजातहरं हरिं॥ ७२॥
स्मरन् पराजयस्तस्य न कुतश्चिद्भविष्यति।
पार्थे दिशन्तं गीतार्थं व्याख्यामुद्राकरं हरिं॥ ७३॥

रथस्थं भावयन् जप्याद्धर्मसंघौ समाय ;च ।
लक्षं पलाशकुसुमैर्हुनेद्यो मधुराप्लुतैः ॥ ७४ ॥
व्याख्याता सर्व्वशास्त्राणां स कविर्वादिराड्भवेत् ।
विश्वरूपधरं प्रोद्यद्भास्करकोटिसमप्रभं ॥ ७५ ॥
द्रुतचामीकरनिभमग्नीषोमात्मकं हविः ।
अर्कााग्निद्योतदस्याङ्घ्रिपङ्कज दिव्यभूषया ॥ ७६ ॥
नानायुधधरं व्यासं विश्वाकाशावकाशकं ।
राष्ट्रपुर्ग्रामवास्तूनां शरीरस्य च रक्षणे ॥ ७७ ॥
प्रजपेन्मन्त्रयोरेकतरं ध्यात्वैवमादरात् ।
अथवा व्यस्तसर्व्वाङ्घ्रिरचिताङ्गार्ज्जुनर्षिकं ॥ ७८ ॥
त्रिष्टुप्छान्दसिकं विश्वरूपविष्णवधिदैवतं ।
जपेद्गीतामनुं स्थाने हृषीकेशाद्यमाद्यकैः ॥
हुनेद्वा सर्व्वरक्षायै सर्व्वविघ्नोपशान्तये ॥ ७९ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे तृतीयरात्रे चतुर्दशोऽध्यायः ॥१४॥

---

## पञ्चदशोऽध्यायः ॥

—॥॥—

श्रीव्यास उवाच ॥

वक्ष्येऽक्षयधनावाप्त्यै प्रतिपत्तिं श्रियः पते ।
सुगुप्तां धननाथाद्यैर्धान्यैर्या क्रियते सदा ॥ १ ॥
द्वारवत्या सहस्रार्कभास्वरैर्भवनोत्तमैः ।
अनल्पैः कल्पवृक्षैश्च परीते मणिमण्डपे ॥ २ ॥

ज्वलद्रत्नमयस्तम्भद्वारतोरणकुड्यके।
फुल्लस्रगुल्लसच्चित्रवितानालम्बिमौक्तिके ॥ ३ ॥
पद्मरागस्थलीराजद्रत्नवयोश्च मध्यतः।
अनारतगलद्रत्नसुमध्यस्तम्भबन्धनैः ॥ ४ ॥
रत्नप्रदीपावलिभिः प्रदीपितदिगन्तरे।
उद्यदादित्यसङ्काशमणिसिंहासनाम्बुजे ॥ ५ ॥
समासीनोऽच्युतो ध्येयो द्रुतहाटकसन्निभः।
समानोदितचन्द्रार्कतडित्कोटिसमद्युतिः ॥ ६ ॥
सर्व्वाङ्गसुन्दरः सौम्यः सर्व्वाभरणभूषितः।
पीतवासाश्चक्रशङ्खगदापद्मोज्ज्वलद्भुजः ॥ ७ ॥
अनारतोज्ज्वलद्रत्नधारौघकलसं स्पृशन्।
वामपादाम्बुजाग्रेण मुष्णता पल्लवच्छविं ॥ ८ ॥
रुक्मिणीसत्यभामेऽस्य मूर्ध्नि रत्नौघधारया।
सिञ्चन्त्यौ दक्षवामस्थे स्वदोःस्थकलसोत्थया ॥ ९ ॥
नाग्नजिती सुनन्दा च दिशन्त्यौ कलसौ तयोः।
ताभ्याञ्च दक्षवामस्थे मित्रविन्दासुलक्षणे ॥ १० ॥
रत्ननद्योः समुद्धृत्य रत्नपूर्णघटौ तयोः।
जाम्बुवती सुशीला च दिशन्त्यौ दक्षवामगे ॥ ११ ॥
वहिः षोडशसाहस्रसंख्याताः परितः प्रियाः।
ध्येयाः कनकरत्नौघधारायुक्कलसोज्ज्वलाः ॥ १२ ॥
तद्वहिश्चाष्टनिधयः पूरयन्त्यो धनैर्धरां।
तद्वहिर्वृष्णयः सर्व्वे पुरोवच्च सुरादयः ॥ १३ ॥

ध्यात्वैवं परमात्मानं विंशत्यन्तं मनुं जपेत् ।
चतुर्लक्षं हुनेदाज्यैश्चत्वारिंशत्सहस्रकं ॥ १४ ॥
शक्तिःश्रीपूर्व्विकेत्यष्टादशार्णो विंशतर्णकः।
मन्त्रोऽनेन सदृक्षोऽन्यो मनुर्नहि जगत्त्रये ॥ १५ ॥
ऋषिर्ब्रह्माऽस्य गायत्री छन्दः कृष्णस्तु देवता ।
पूर्व्वप्रोक्तवदेवास्य बीजशक्त्यादिकल्पना ॥ १६ ॥
कल्पः सनत्कुमारोक्तो मन्त्रस्यास्योच्यतेऽधुना ।
पीठन्यासान्तिकं कृत्वा पूर्व्वोक्तक्रमतः सुधीः ॥ १७ ॥
करद्वन्द्वाङ्गुलितलेष्वङ्गषट्कं प्रविन्यसेत् ।
मन्त्रेण व्यापकं कृत्वा मातृकां मनुसंपुटां ॥ १८ ॥
संहारसृष्टिमार्गेण दश तत्त्वानि विन्यसेत् ।
पुनश्च व्यापकं कृत्वा मन्त्रवर्णांस्तनौ न्यसेत् ॥ १९ ॥
मूर्द्ध्नि भाले भ्रुवोर्मध्ये नेत्रयोः कर्णयोर्नसोः ।
आनने चिवुके गण्डे दोर्मूले हृदि तुण्डके ॥ २० ॥
नाभौ लिङ्गे तथाधारकट्योर्जान्वोश्च जङ्घयोः ।
गुल्फयोः पादयोर्न्यसेत् सृष्टिरेषा समीरिता ॥ २१ ॥
स्थितिर्हृदादिनासान्ता संहृतिश्चरणादिका।
विधायैवं पञ्चशत्वः स्थित्यन्तं मूर्त्तिपञ्जरं ॥ २२ ॥
सृष्टिस्थिती च विन्यस्य षडङ्गन्यासमाचरेत् ।
गुणाब्धिवेदकरणाक्षाक्षरैरतिशंमनोः ॥ २३ ॥
मुद्रां बद्धा किरीटाख्यां दिग्बन्धं पूर्व्ववच्चरेत् ।
एव ध्यात्वार्चयेद्देवं मूर्त्तिपञ्जरपूर्व्वकं ॥ २४ ॥

अथवा ह्यर्च्चयेद्विष्णुं तदर्थं मन्त्रमुच्यते ।
गोमयेनोपलिप्योर्व्वीं तत्र पीठं निधापयेत् ॥ २५ ॥
विलिप्य गन्धपङ्केन लिखेदष्टदलाम्बुजं ।
कर्णिकायान्तु षट्कोणं स साध्यस्तत्र मन्मथं ॥ २६ ॥
शिष्टैस्तं सप्तदशभिरक्षरैर्वेष्टयेत् स्मरं ।
प्राग्रक्षोऽनिलकोणेषु श्रियं शिष्टेषु संविदं ॥ २७ ॥
षडक्षर सन्धिषु च केशवेषु चिशस्त्रिशः ।
बिलिखेत् स्मरगायत्रीमालामन्त्रं दलाष्टके ॥ २८ ॥
षट्शः संलिख्य तद्बाह्ये वेष्टयेन्मातृकाक्षरैः ।
भूबिम्बञ्च लिखेद्बाह्ये दलानां दिग्विदिक्ष्वपि ॥ २९ ॥
एतन्मन्त्रं स्फाटकादिपात्रेष्वालिख्य पूर्व्ववत् ।
साधितं धारयेद्घोरैः सोऽर्च्यते त्रिदशैरपि ॥ ३० ॥
स्याद्गायत्री कामदेवपुष्पवाणौ च ङेऽन्तकौ ।
विद्महेधीमहियुतौ तन्नोऽनङ्गः प्रचोदयात् ॥ ३१ ॥
जप्याज्जपादौ गोपालमनूनां जनरञ्जनीं ।
नत्यन्ते कामदेवाय ङेऽन्तं सर्व्वजनप्रिय ॥ ३२ ॥
उक्ता सर्व्वजनान्ते तु सम्मोहनपदं तथा ।
ज्वल ज्वल प्रज्वलेति प्रोक्तो सर्व्वजनस्य च ॥ ३३ ॥
हृदयञ्च मम ब्रूयात् वशं कुरुयुग शिवः ।
प्रोक्तो मदनमन्त्रोऽष्टचत्वारिंशद्भिरक्षरैः ॥ ३४ ॥
जपादौ मारवीजाद्यो जगत्त्रयवशीकरः ।
भूगृहं चतुरस्रं स्यादष्टवज्रविभूषित ॥ ३५ ॥

पीठं पूर्व्ववदभ्यर्च्य मुक्तिं संकल्प्य पौरुषीं ।
तत्रावाह्याच्युतं भक्त्या सकलीकृत्य पूजयेत् ॥ ३६ ॥
आसनादिविभूषान्तं पुनर्न्यासक्रमान्न्यसेत् ।
सृष्टिस्थिती षडङ्गञ्च किरीटं कुण्डलद्वयं ॥ ३७ ॥
चक्रं शंखं गदां पद्मं मालां श्रीवत्सकौस्तुभौ ।
गन्धाक्षतप्रसूनैश्च मूलेनाभ्यर्च्च्य पूर्व्ववत् ॥ ३८ ॥
आदौ वह्निपुरद्वन्द्वकोणेष्वङ्गानि पूजयेत् ।
सत्कच्छिरःशिखावर्म्मनेत्रमन्त्रमिति क्रमात् ॥ ३९ ॥
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ।
अग्न्यादिदलमूलेषु शान्तिर्लक्ष्मीः सरस्वती ॥ ४० ॥
रतिश्च दिग्दलेष्वस्यास्ततोऽष्टौ महिषीर्यजेत् ।
रुक्मिण्याद्या दक्षसव्यक्रमात् पत्राग्रकेषु च ॥ ४१ ॥
ततः षोडशसाहस्रं सकृदेवार्चयेत् प्रियाः ।
इन्द्रादीनामुकुन्दाद्यान् मकरानन्दकच्छपान् ॥ ४२ ॥
शङ्खपद्मादिकांश्चापि निधीनष्टौ क्रमाद्यजेत् ।
तद्वहिश्चेन्द्रवज्राद्या आवृतीः संप्रपूजयेत् ॥ ४३ ॥
इति सप्तावृतिवृतमभ्यर्च्याच्युतमादरात् ।
प्रीणयेद्दधिखण्डाज्यमिश्रेण तु पयोऽम्भसा ॥ ४४ ॥
राजोपचारान्दत्त्वा च स्तुत्वा नत्वा च केशवं ।
उद्वासयेत् स्वहृदये परिवारगणैः सह ॥ ४५ ॥
न्यस्तात्मानं समभ्यर्च्य तन्मयः प्रजपेन्मनुं ।
रत्नाभिषेकध्यानेज्या विशत्यर्णाश्रिते रता ॥ ४६ ॥

जपहोमार्चनध्यानैर्योऽमुं प्रभजते मनुं ।
तद्देश्म पूर्य्यते रत्नस्वर्णधान्यैरनावृतं ॥ ४७ ॥
पृथ्वी पृथ्वी करे तस्य सर्व्वसस्यकुलाकुला ।
पुत्रैर्मित्रैः स सम्पन्नः प्रयात्यन्ते परां गतिं ॥ ४८ ॥
वह्नावभ्यर्च्य गोविन्दं शुक्लपुष्पैः सतण्डुलैः ।
आज्याक्तैरयुतं हुत्वा भस्म तन्मूर्द्ध्नि धारयेत् ॥ ४९ ॥
तस्यान्नानां समृद्धिः स्यात्तद्दशे सर्व्वयोषितः ।
आज्यैर्लक्षं हुनेद्रक्तपद्मैर्व्वा मधुराप्लुतैः ॥ ५० ॥
श्रिया तस्येन्द्रमैश्वर्य्यं क्षपणेशाय ते ध्रुवं ।
शुक्लादिवस्त्रलाभाय शुक्लाय कुसुमैर्हुनेत् ॥ ५१ ॥
त्रिमध्वक्तैर्द्द्विशतमाज्याक्तैर्व्वाष्टसंयुतं ।
चौद्रसिक्तैः सितैः पुष्पैरष्टोत्तरसहस्रकं ॥ ५२ ॥
हुनेन्नित्यं सैष आसीत् पुरोधा नृपतेर्भवेत् ।
दशाष्टादशवर्णोक्तं जपध्यानहुतादिकं ॥ ५३ ॥
विदधात् कर्म चानेन ताभ्यामप्यत्र कीर्त्तितं ।
वाग्भवं मारवीजञ्च कृष्णाय भुवनेश्वरी ॥ ५४ ॥
गोविन्दाय रमागोपीजनवल्लभ ते शिवः ।
चतुर्द्दशस्वरोपेतः शुक्रः सद्दी तदूर्द्ध्वतः ॥ ५५ ॥
द्वाविंशत्यक्षरो मन्त्रो वागीशत्वप्रदायकः ।
अष्टादशार्णवत्सर्व्वं षडृष्यादिकमस्य तु ॥ ५६ ॥
पूजा च विंशत्यर्णोक्ता प्रतिपत्तिस्तु कथ्यते ।
वामोर्द्ध्वहस्ते दधतं विद्यासर्व्वस्वपुस्तकं ॥ ५७ ॥

अक्षमालाञ्च दक्षोर्द्ध्वे स्फाटिकीं मातृकामयीं ।
शब्दब्रह्ममयं वेणुमधः पाणिद्वयेरितं ॥ ५८ ॥
गायन्तं पीतवसनं श्यामलं कोमलच्छविं ।
बर्हिवर्हकृतोत्तंसं सर्व्वज्ञं सर्व्ववेदिभिः ॥ ५९ ॥
उपासितं मुनिगणैरुपतिष्ठेद्धरिं सदा ।
ध्यात्वैवं प्रमदावेशविलासभवनेश्वरं ॥ ६० ॥
चतुर्लक्षं जपेन्मन्त्रमिमं मन्त्री सुसंयतः ।
पालाशपुष्पैः स्वादक्तैश्चत्वारिंशत्सहस्रकं ॥ ६१ ॥
जुहुयात् कर्म्मणानेन ततः सिद्धो भवेद्ध्रुवं ।
योऽस्मिन्निष्णातधीर्मन्त्री वर्त्तते वक्रगह्वात् ॥ ६२ ॥
गद्यपद्यमयी वाणी तस्य गङ्गाप्रवाहवत् ।
सर्व्ववेदेषु शास्त्रेषु पुराणेषु च पण्डितः ॥ ६३ ॥
सम्पत्तिं परमां लब्ध्वा चान्ते[1] याति परं पदं ।
श्रीशक्तिस्मरकृष्णाय गोविन्दाय शिवो मनुः ॥ ६४ ॥
द्रूवर्णो ब्रह्मगायत्री कृष्णर्ष्यादिरथास्य तु ।
वेदैस्त्रिवेदयुग्माक्षैरङ्गषट्कमिहोदितं ॥ ६५ ॥
विंशत्यर्णोदितजपध्यानहोमार्चनक्रियः ।
मन्त्रोऽयं सकलैश्वर्य्यकाङ्क्षिभिः सेव्यतां बुधैः ॥ ६६ ॥
श्रीशक्तिकामपूर्व्वाङ्गजन्मशक्तिरमान्तिकः ।
दशाक्षरः स एवादौ स्याच्च शक्तिरमान्वितः ॥ ६७ ॥

---

[1] भूयादिति S.

मन्त्रौ विकृतिरव्यर्णावाचकाद्यङ्गिनाविमौ ।
विंशत्यर्णोक्तयजनविधा धायेदथाच्युतं ॥ ६८ ॥
वरदाभयहस्ताभ्यां श्लिष्यन्तं स्वाङ्कके प्रिये ।
पद्मोत्पलकरे ताभ्यां श्लिष्टं चक्रधरोज्ज्वलं ॥ ६९ ॥
दशलक्षं जपेदाज्यैस्तावत्साहस्रहोमतः ।
सिद्धाविमौ मूलसम्पत्सुखसौभाग्यदौ न्रुणां ॥ ७० ॥
मारशक्तिरसापूर्वौ दशार्णौ मनवस्त्रयः ।
एतेषां मनुवर्णानामङ्गन्यासादिदशार्णवत् ॥ ७१ ॥
शङ्खचक्रधनुर्बाणपाशाङ्कुशधरोऽरुणः ।
वेणुं धमन् धृतो दोर्भ्यां ध्येयः कृष्णो दिवाकरे ॥ ७२ ॥
आद्ये गणे ध्यानमेवं द्वितीये विंशदर्णवत् ।
दशार्णवत् तृतीयेऽङ्गदिक्पालाद्यैः समर्चना ॥ ७३ ॥
पञ्चलक्षं जपेत्तावदयुतं पायसैर्हुनेत् ।
ततः सिद्धास्तु मनवो न्रुणां सम्पत्तिकान्तिदाः ॥ ७४ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे तृतीयरात्रे मन्त्रपूजाहोमविधि-
र्पञ्चदशोऽध्यायः ॥ १५ ॥ समाप्तश्चेदं तृतीयरात्रं ॥

## ४ राचं ॥

प्रथमोऽध्यायः ।

श्रीमहादेव उवाच ।

[1]शृणु देवि प्रवक्ष्यामि भक्तिमुक्तिप्रसाधनं ।
नाम्नामष्टोत्तरशतं श्रीकृष्णस्य परात्मनः ॥ १ ॥
पूर्व्वकल्पे धरोद्धारे पृथिव्या शेषकेण च ।
संवादं परमाश्चर्य्यं शृणुष्व कमलानने ॥ २ ॥
नातः परतरं स्तोत्रं नातः परतरं तपः ।
नातः परतरा विद्या तीर्थं नातः परं परं ॥ ३ ॥
वेदानां च यथा साम तीर्थानां मथुरा परा ।
क्षेत्राणां काशिका देवि मन्त्राणां श्रीदशाक्षरः ॥ ४ ॥
वैष्णवानां वैष्णवीनां यथाहं त्वं तथा परा ।
आश्रमाणां यथा न्यासः सिद्धानां कपिलो यथा ॥ ५ ॥
आयुधानां यथा वज्रं धेनूनां कामधुग्यथा ।
मनोरथं प्रस्तवतां यथा नाम्नां शताष्टकं ॥ ६ ॥

---

[1] प्रथमादिरमापतेरित्यन्त श्लोकाष्टकं सर्व्वपु॰ नास्ति ॥

तत्तेऽहं संप्रवक्ष्यामि सावधानावधारय ।
प्रणम्य वसुधा देवी शेषं संकर्षणात्मकं ॥ ७ ॥
पप्रच्छ परया भक्त्या जनानां मुक्तिहेतवे ।
नाम्नामष्टोत्तरशतं श्रीकृष्णस्य रमापतेः ॥ ८ ॥

भूमिरुवाच ॥

कृष्णावतारे रोहिण्या रामेणापि त्वया सह ।
अलङ्कृतं जन्म पुंसामपि वृन्दावनौकसां ॥ ९ ॥
तस्य देवस्य कृष्णस्य लीलाविग्रहधारिणः ।
यस्योपाधिनियुक्तानि सन्ति नामान्यनेकशः ॥ १० ॥
तेषु मुख्यानि नामानि श्रोतुकामा चिरादहं ।
सङ्कर्षणात्मनः स्तोत्रं यतो जानासि वाङ्मयं ॥
तत्तानि यानि नामानि वासुदेवस्य वासुके ।
नातः परतरं स्तोत्रं त्रिषु लोकेषु विद्यते ॥ १२ ॥

श्रीशेष उवाच ॥

वसुन्धरे वरारोहे जनानामस्ति मुक्तिदं ।
सर्व्वमङ्गलमूर्द्धन्यमणिमाद्यष्टसिद्धिदं ॥ १३ ॥
महापातककोटिघ्नं सर्व्वतीर्थफलप्रदं ।
समस्तजपयज्ञानां फलदं पापनाशनं ॥ १४ ॥
शृणु देवि प्रवक्ष्यामि नाम्नामष्टोत्तरं शतं ।
सहस्रनाम्नां पुण्यानां चिरावृत्त्या तु यत्फलं ॥ १५ ॥
एकावृत्त्या तु कृष्णस्य नामैकं तत्प्रयच्छति ।
तस्मात् पुण्यतमञ्चैतत् स्तोत्रं पापप्रणाशनं ॥ १६ ॥

श्रीकृष्णस्याष्टोत्तरशतनाम्नां श्रीशेष ऋषिरनुष्टुप्छन्दः श्रीकृष्णो देवता
श्रीकृष्णाष्टोत्तरशतनामजपे विनियोगः ।

ओं

श्रीकृष्णः कमलानाथो वासुदेवः सनातनः ।
वसुदेवात्मजः पुण्यो लीलामानुषविग्रहः ॥ १७ ॥
श्रीवत्सकौस्तुभधरो यशोदावत्सलो हरिः ।
चतुर्भुजात्तचक्रासिगदाशङ्खाम्बुजायुधः ॥ १८ ॥
देवकीनन्दनः श्रीशो नन्दगोपप्रियात्मजः ।
यमुनावेगसंहारी बलभद्रप्रियानुजः ॥ १९ ॥
पूतनाजीवितहरः शकटासुरभञ्जनः ।
नन्दव्रजजनानन्दी सच्चिदानन्दविग्रहः ॥ २० ॥
नवनीतनवाहारी मुचुकुन्दप्रसादकः ।
षोडशस्त्रीसहस्रेशस्त्रिभङ्गो मधुराकृतिः ॥ २१ ॥
शुकवागमृताब्धीन्दुर्गोविन्दो गोविदां पतिः ।
वत्सपालनसञ्चारी धेनुकासरभञ्जनः ॥ २२ ॥
तृणीकृततृणावर्त्तो यमलार्जुनभञ्जनः ।
उत्तानतालभेत्ता च तमालश्यामलाकृतिः ॥ २३ ॥
गोपगोपीश्वरो योगी सूर्य्यकोटिसमप्रभः ।
इलापतिः परं ज्योतिर्यादवेन्द्रो यदूद्वहः ॥ २४ ॥
वनमाली पीतवासाः पारिजातापहारकः ।
गोवर्द्धनाचलोद्धर्त्ता गोपालः सर्व्वपालकः ॥ २५ ॥

अजो निरञ्जनः कामजनकः कञ्जलोचनः ।
मधुहा मथुरानाथो द्वारकानायको बली ॥ २६ ॥
वृन्दावनान्तसञ्चारी तुलसीदामभूषणः ।
स्यमन्तकमणेर्हर्त्ता नरनारायणात्मकः ॥ २७ ॥
कुब्जाकृष्णाम्बरधरो मायी परमपूरुषः ।
मुष्टिकासुरचानूरमहायुद्धविशारदः ॥ २८ ॥
संसारवैरिः कंसारिर्मुरारिर्नरकान्तकः ।
अनादिर्ब्रह्मचारी च कृष्णाव्यसनकर्षकः ॥ २९ ॥
शिशुपालशिरश्छेत्ता दुर्योधनकुलान्तकृत् ।
विदुराक्रूरवरदो विश्वरूपप्रदर्शकः ॥ ३० ॥
सत्यवाक् सत्यसङ्कल्पः सत्यभामारतो जयी ।
सुभद्रापूर्व्वजो विष्णुर्भीष्ममुक्तिप्रदायकः ॥ ३१ ॥
जगद्गुरुर्जगन्नाथो वेणुवाद्यविशारदः ।
वृषभासुरविध्वंसी बाणासुरबलान्तकृत् ॥ ३२ ॥
युधिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः ।
पार्थसारथिरव्यक्तो गीतामृतमहोदधिः ॥ ३३ ॥
कालीयफणिमाणिक्यरञ्जितश्रीपदाम्बुजः ।
दामोदरो यज्ञभोक्ता दानवेन्द्रविनाशनः ॥ ३४ ॥
नारायणः परं ब्रह्म पन्नगासनवाहनः ।
जलक्रीडासमासक्तगोपीवस्त्रापहारकः ॥ ३५ ॥
पुण्यश्लोकस्तीर्थकरो वेदविद्यादयानिधिः ।
सर्व्वतीर्थात्मकः सर्व्वग्रहरूपी परात्परः ॥ ३६ ॥

इत्येवं कृष्णदेवस्य नाम्नामष्टोत्तरं शतं ।
कृष्णेन कृष्णभक्तेन श्रुत्वा गीतामृतं पुरा ॥ ३७ ॥
स्तोत्रं कृष्णप्रियकरं कृतं तस्मान्मया परं ।
कृष्णनामामृतं नाम परमानन्ददायकं ॥ ३८ ॥
अनुपद्रवदुःखघ्नं परमायुष्यवर्द्धनं ।
दानश्रुततपस्तीर्थं यत्कृतन्त्विह जन्मनि ॥ ३९ ॥
पठतां शृखतां चैव कोटिकोटिगुणं भवेत् ।
पुत्रप्रदमपुत्राणामगतीनां गतिप्रदं ॥ ४० ॥
धनावहं दरिद्राणां जयेच्छूनां जयावहं ।
शिशूनां गोकुलानाञ्च पुष्टिदं पुष्टिवर्द्धनं ॥ ४१ ॥
वातग्रहज्वरादीनां शमनं शान्तिमुक्तिदं ।
समस्तकामदं सद्यः कोटिजन्माघनाशनं ।
अन्ते कृष्णस्मरणदं भवतापभयापहं ॥ ४२ ॥
कृष्णाय यादवेन्द्राय ज्ञानमुद्राय योगिने ।
नाथाय रुक्मिणीशाय नमो वेदान्तवेदिने ॥ ४३ ॥
इमं मन्त्रं महादेवि जपन्नेव दिवानिशं ।
सर्व्वग्रहानुग्रहभाक् सर्व्वप्रियतमो भवेत् ॥ ४४ ॥
पुत्रपौत्रैः परिवृतः सर्व्वसिद्धिसमृद्धिमान् ।
निर्विश्य भोगानन्तेऽपि कृष्णसायुज्यमाप्नुयात् ॥ ४५ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे चतुर्थरात्रे उमामहेश्वरसंवादे धरणीमेषसंवादे श्रीकृष्णाष्टोत्तरशतनामस्तोत्रं समाप्तं प्रथमोऽध्यायः ।

द्वितीयोऽध्यायः ।



शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजं ।
प्रसन्नवदनं ध्यायेत् सर्व्वविघ्नोपशान्तये ॥ १ ॥

ओँ नमः कृष्णाय पार्थाय श्रियै नारायणाय देव्यै च सरस्वत्यै नराय च ॥

ब्रह्मलोकादिह प्राप्तं नारदं भगवत्प्रियं ।
दृष्ट्वा नत्वा सभायान्तु प्रपच्छुर्मुनयो मुदा ॥ २ ॥

ऋषय ऊचुः ॥

ब्रह्मन् केन प्रकारेण सर्व्वपापक्षयो भवेत् ।
विना दानेन तपसा विना तीर्थैर्विना मखैः ॥ ३ ॥
विना वेदैर्विना ध्यानैर्विना चेन्द्रियनिग्रहैः ।
विना शास्त्रसमूहैश्च कथं मुक्तिरवाप्यते ॥ ४ ॥
दानेन तपसा तीर्थैर्मखैश्चापि विना मुने ।
देवाधिदेवो देवेशः स्थितस्तपसि शङ्करः ॥
कं समाराधयेद्देवं जपध्यानपरायणः ॥ ५ ॥

श्रीनारद उवाच ॥

इदमेव पुरा पृष्टः पार्व्वत्या परमेश्वरः ।
यदुवाच शृणुध्वं हि कथयामि सुविस्तरात् ॥ ६ ॥
कैलासशिखरासीनं देवदेवं जगद्गुरुं ।
प्रणिपत्य महादेवं पर्य्यपृच्छदुमापतिं ॥ ७ ॥

श्रीपार्व्वत्युवाच ।

भगवंस्त्वं परो देवः सर्व्वज्ञः सर्व्वपूजितः ।
त्वल्लिङ्गमर्च्यते देवैर्ब्रह्मसूर्य्यादिकैरपि ॥ ८ ॥
त्वत्तो लभन्तेऽभिमतां सिद्धिं सर्व्ववरप्रद ।
त्वं जन्ममृत्युरहितः स्वयम्भुः सर्व्वशक्तिमान् ॥ ९ ॥
सदा ध्यायसि किं स्वामिन् दिग्वासा मदनान्तकः ।
तपश्चरसि कस्मात्त्वं जटिलो भस्मधूसरः ॥ १० ॥
किं वा जपसि देवेश परं कौतूहलं हि मे ।
अनुग्राह्या प्रिया चाहं तन्मे कथय सुव्रत ॥ ११ ॥

श्रीमहादेव उवाच ।

नेदं कस्यापि कथितं गोपनीयमिदं मम ।
किन्तु वक्ष्यामि भद्रन्ते त्वं भक्तासि प्रियासि मे ॥ १२ ॥
पुरा सत्ययुगे देवि विशुद्धमतयोऽखिलाः ।
यजन्ति विष्णु मेवैकं ज्ञात्वा सर्व्वेश्वरेश्वरं ॥ १३ ॥
प्रयान्ति परमामृद्धिमैहिकामुष्मिकीं परां ।
या न प्राप्ताऽमरैः सर्व्वैरथवा लोकवर्ज्जिता ॥ १४ ॥
न तां सन्तः प्रपद्यन्ते विनाचाररतान्नरान् ।
मन्मुखादपि संश्रुत्य देवा विष्णुवहिर्मुखाः ॥ १५ ॥
वेदैः पुराणैः सिद्धान्तैर्भिन्नैर्व्विभ्रान्तचेतसः ।
निश्चयं नाधिगच्छन्ति किं तत्त्वं किं परं पदं ॥ १६ ॥
तुलापुरुषदानाद्यैरश्वमेधादिभिर्मखैः ।
वाराणसीप्रयागादितीर्थस्नानादिभिः प्रिये ॥ १७ ॥

गयाश्राद्धादिभिः पित्र्यैर्व्वेदपाठादिभिर्ज्जपैः ।
तपोभिरुग्रैर्नियमैर्धर्म्मैर्भूतदयादिभिः ॥ १८ ॥
गुरुशुश्रूषणैः सत्यैर्धर्म्मैर्वर्णाश्रमोदितैः ।
ज्ञानध्यानादिभिः सम्यक् चरितैर्जन्मजन्मभिः ॥ १९ ॥
न याति तत्परं श्रेयो विष्णुं सर्व्वेश्वरेश्वरं ।
सर्व्वभावैरनाश्रित्य पुराणं पुरुषोत्तमं ॥ २० ॥
अनन्यगतयो मर्त्या भोगिनोऽपि परन्तपाः ।
ज्ञानवैराग्यरहिता ब्रह्मचर्य्यादिवर्ज्जिताः ॥ २१ ॥
सर्वधर्मोज्झितो विष्णोर्नाममात्रैकजल्पकाः ।
सुखेन यां गतिं यान्ति न तां सर्व्वेऽपि धार्म्मिकाः ॥ २२ ॥
स्मर्त्तव्यः सततं विष्णुर्व्विस्मर्त्तव्यो न कर्हिचित् ।
सर्वे विधिनिषिद्धाः स्युरेतस्यैव हि किङ्कराः ॥ २३ ॥
किन्तु ब्रह्मादिभिर्द्देवैः पुरा दृष्ट्वा निरंहसः ।
निर्भयं विष्णुनाम्नैव यथेष्टं पदमागतान् ॥ २४ ॥
अलब्ध्य चात्मनः पूजां सम्यगाराधितो हरिः ।
मया चास्मादपि श्रैष्ठ्यं वाञ्छितोऽयं यतात्मना ॥ २५ ॥
ततः साक्षाज्जगन्नाथः प्रसन्नो भक्तवत्सलः ।
अंशांशेनात्मनो वैतान् पूजयामास केशवः ॥ २६ ॥
देवान् पितॄन् द्विजान् हव्यकव्याशान् करुणामयः ।
ततः प्रभृति पूज्यन्ते त्रैलोक्ये सचराचरे ॥ २७ ॥
ब्रह्माद्याः सुराः सर्व्वे प्रसाद्य शार्ङ्गधन्वनः ।
मान्चोवाच तदा मत्तः पूज्यश्रेष्ठो भविष्यसि ॥ २८ ॥

त्वामाराध्य यदा शम्भो ग्रहिष्यामि वरन्तव ।
द्वापरादौ युगे भूत्वा कलया मानुषादिषु ॥ २९ ॥
आगमैः कल्पितैस्त्वं हि जनान् मद्विमुखान् कुरु ।
माञ्च गोपयसे न स्यात् सृष्टिरेवोत्तरोत्तरा ॥
ततस्तं प्रणिपत्याहमुवाच परमेश्वरं ॥ ३० ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे चतुर्थरात्रे द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

श्रीमहादेव उवाच ।

ब्रह्महत्यासहस्राणां पापं शाम्येत् कथञ्चन ।
न पुनस्त्वय्यविज्ञाते कल्पकोटिशतैरपि ॥ १ ॥
यस्मान्मया कृता स्पर्द्धा पविष स्यात्कथं हरे ।
नश्यन्ति सर्व्वपापानि तन्मां वद सुरेश्वर ॥
तदाह देवो गोविन्दो मम प्रीत्या यथायथं ॥ २

श्रीभगवानुवाच ।

सदा नामसहस्रं मे पावनं मत्पदावहं ।
तत्पराऽनुदिनं शम्भो सर्व्वैश्वर्य्यं यदीच्छसि ॥ ३

श्रीमहादेव उवाच ।

तमेव तपसा नित्यं भजामि स्तौमि चिन्तये ।
तेनाद्वितीयमहिमो जगत्पूज्योऽस्मि पार्व्वति ॥ ४

श्रीपार्वत्युवाच ॥

तन्मे कथय देवेश यथाहमपि शङ्कर ।
शर्व्वेश्वरी निरुपमा तव स्यां सदृशी प्रभो ॥ ५ ॥

श्रीमहादेव उवाच ॥

साधु साधु त्वया पृष्टो विष्णोर्भगवतः शिवे ।
नाम्नां सहस्रं वक्ष्यामि मुख्यं त्रैलोक्यमङ्गलं ॥ ६ ॥

नमो

नारायणाय पुरुषोत्तमाय च महात्मने ।
विशुद्धसद्माधिष्ठाय महाहंसाय धीमहि ॥ ७ ॥

ओं

अस्य श्रीविष्णोः सहस्रनाममन्त्रस्य महादेव ऋषिः
परमात्मा देवता सूर्य्यकोटिप्रतीकाश इति बीजं ।
गङ्गा तीर्थोत्तमा शक्तिः प्रपन्नाशनि पञ्जर इति बीज
गङ्गा तीर्थोत्तमा शक्तिः प्रपन्नाशनिपञ्जर इति कीलक ॥
वासुदेव पर ब्रह्म इत्यङ्गुष्ठाभ्या नमः ।
मूलप्रकृतितर्ज्जनीभ्या नम· ।
भूमहावराह इति मध्यमाभ्या नमः ।
सूर्य्यवंशध्वजो राम अनामिकाभ्या नमः ॥
ब्रह्मादि कमधादिगदासूर्य्यकेशवमिति कनिष्ठाभ्यां नमः ।
शेष इति करतलपृष्ठाभ्या नमः । ८ ।

---

दिव्यास्त्र इत्यस्त्र सर्व्वपापक्षयार्थं सर्व्वाभीष्टसिद्ध्यर्थं श्रीविष्णोर्नामसहस्र जपे विनियोगः ॥

अथ ध्यानं ॥

विष्णुं भास्वत्किरीटाङ्गदवलयगणाकल्पहारोदराङ्घ्रि-
श्रोणीभूषं सुवक्षो मणिमकरमहाकुण्डलं मण्डितांसं ।
हस्तोद्यच्चक्रशङ्खाम्बुजगदममलं पीतकौशेयवासो-
विद्युद्भासं समुद्यद्दिनकरसदृशं पद्महस्तं नमामि ॥ ९ ॥

ओं

वासुदेवः परं ब्रह्म परमात्मा परात्परं ।
परं धाम परं ज्योतिः परं तत्त्वं परं पदं ॥ १० ॥
परं शिवं परो ध्येयः परं ज्ञानं परा गतिः ।
परमार्थः परं श्रेयः परानन्दः परोदयः ॥ ११ ॥
परो व्यक्तः परं व्योम परार्द्धः परमेश्वरः ।
निरामयो निर्व्विकारो निर्व्विकल्पो निराश्रयः ॥ १२
निरञ्जनो निरालम्बो निर्लेपो निरवग्रहः ।
निर्गुणो निष्कलोऽनन्तोऽचिन्त्योऽसावचलोऽच्युतः ॥ १३
अतीन्द्रियोऽमितोऽरोध्योऽनीहोऽनीशोऽव्ययोऽक्षयः ।
सर्व्वज्ञः सर्व्वगः सर्व्वः सर्व्वदः सर्वभावनः ॥ १४ ॥
सर्वः शम्भुः सर्वसाक्षी पूज्यः सर्वस्य सर्वदृक् ।
सर्वशक्तिः सर्वसारः सर्व्वात्मा सर्वतोमुखः ॥ १५ ॥
सर्व्वावासः सर्वरूपः सर्व्वादिः सर्वदुःखहा ।
सर्व्वार्थः सर्वतोभद्रः सर्वकारणकारणं ॥ १६ ॥

सर्वातिशायकः सर्वाध्यक्षः सर्वेश्वरेश्वरः ।
षड्विंशको महाविष्णुर्महागुह्यो महाहरिः ॥ १७ ॥
नित्योदितो नित्ययुक्तो नित्यानन्दः सनातनः ।
मायापतिर्योगपतिः कैवल्यपतिरात्मभूः ॥ १८ ॥
जन्ममृत्युजरातीतः कालातीतो भवातिगः ।
पूर्णः सत्यः शुद्धबुद्धस्वरूपो नित्यचिन्मयः ॥ १९ ॥
योगिप्रियो योगमयो भवबन्धैकमोचकः ।
पुराणः पुरुषः प्रत्यक् चैतन्यं पुरुषोत्तमः ॥ २० ॥
वेदान्तवेद्योदुर्ज्ञेयस्तापत्रयविवर्जितः ।
ब्रह्मविद्याश्रयोऽलङ्घ्यः स्वप्रकाशः स्वयंप्रभः ॥ २१ ॥
सर्वोपेय उदासीनः प्रणवः सर्वतः समः ।
सर्वानवद्यो दुष्प्रापस्तुरीयस्तमसः परः ॥ २२ ॥
कूटस्थः सर्वसंश्लिष्टो वाङ्मनोगोचरातिगः ।
सङ्कर्षणः सर्वहरः कालः सर्वभयङ्करः ॥ २३ ॥
अनुल्लङ्घ्यः सर्वगतिर्महारुद्रो दुरासदः ।
मूलप्रकृतिरानन्दः प्रज्ञाता विश्वमोहनः ॥ २४ ॥
महामायो विश्वबीज परशक्तिसुखैकभुक् ।
सर्वकाम्योऽनन्तलीलः सर्वभूतवशङ्करः ॥ २५ ॥
अनिरुद्धः सर्वजीवो हृषीकेशो मनःपतिः ।
निरुपाधिः प्रियो हंसोऽक्षरः सर्वनियोजकः ॥ २६ ॥
ब्रह्मा प्राणेश्वरः सर्वभूतहृद्देहनायकः ।
क्षेत्रज्ञः प्रकृतिस्वामी पुरुषो विश्वसूत्रधृक् ॥ २७ ॥

अन्तर्यामी [1]त्रिधामाऽन्तःसाक्षी त्रिगुण ईश्वरः ।
योगी मृग्यः पद्मनाभः शेषशायी श्रियः पतिः ॥ २८ ॥
श्रीसत्योपास्यपादाब्जोऽनन्तः श्रीःश्रीनिकेतनः ।
नित्यवक्षःस्थलस्थश्रीः श्रीनिधिः श्रीधरो हरिः ॥ २९ ॥
रम्यश्रीर्निश्चयश्रीदो विष्णुः क्षीराब्धिमन्दिरः ।
कौस्तुभोद्भासितोरस्को माधवो जगदार्त्तिहा ॥ ३० ॥
श्रीवत्सवक्षोनिःसीमः कल्याणगुणभाजनं ।
पीताम्बरो जगन्नाथो जगद्धाता जगत्पिता ॥ ३१ ॥
जगद्बन्धुर्जगत्स्रष्टा जगत्कर्त्ता जगन्निधिः ।
जगदेकस्फुरद्वीर्य्यो नाहंवादी जगन्मयः ॥ ३२ ॥
सर्व्वाश्चर्य्यमयः सर्व्वसिद्धार्थः सर्ववीरजित् ।
सर्वामोघोद्यमो ब्रह्मरुद्राद्युत्कृष्टचेतनः ॥ ३३ ॥
शम्भोः पितामहो ब्रह्मपिता शक्राद्यधीश्वरः ।
सर्व्वदेवप्रियः सर्व्वदेववृत्तिरनुत्तमः ॥ ३४ ॥
सर्व्वदेवैकशरणं सर्व्वदेवैकदैवतं ।
यज्ञभुग् यज्ञफलदो यज्ञेशो यज्ञभावनः ॥ ३५ ॥
यज्ञत्राता यज्ञपुमान् वनमाली द्विजप्रियः ।
द्विजैकमानदोऽहिंस्रः कुलदेवोऽसुरान्तकः ॥ ३६ ॥
सर्व्वदुष्टान्तकृत् सर्व्वसज्जनानन्दपालकः ।
सर्व्वलोकैकजठरः सर्वलोकैकमण्डलः ॥ ३७ ॥

[1] त्रिधामेत्यत्र त्रियामेति ख ग P

सृष्टिस्थित्यन्तकृच्चक्री शार्ङ्गधन्वा गदाधरः ।
शङ्खभृन्नन्दकीपद्मपाणिर्गरुडवाहनः ॥ ३८ ॥
अनिर्द्दिश्यवपुः सर्वः सर्वलोकैकपावनः[2] ।
अनन्तकीर्त्तिर्निःश्रीशः पौरुषः सर्वमङ्गलः ॥ ३९ ॥
सूर्य्यकोटिप्रतीकाशो यमकोटिविनाशनः ।
ब्रह्मकोटिजगत्स्रष्टा वायुकोटिमहाबलः ॥ ३० ॥
कोटीन्दुजगदानन्दी शम्भुकोटिमहेश्वरः ।
कुवेरकोटिलक्ष्मीवान् शत्रुकोटिविनाशनः ॥ ३१ ॥
कन्दर्पकोटिलावण्यो दुर्गकोटिविमर्द्दनः ।
समुद्रकोटिगम्भीरस्तीर्थकोटिसमाह्वयः ॥ ३२ ॥
हिमवत्कोटिनिष्कम्पः कोटिब्रह्माण्डविग्रहः ।
कोट्यश्वमेधपापघ्नो यज्ञकोटिसमार्च्चनः ॥ ३३ ॥
सुधाकोटिस्वास्थ्यहेतुः कामधृक्कोटिकामदः ।
ब्रह्मविद्याकोटिरूपः शिपिविष्टः शुचिश्रवाः ॥ ३४ ॥
विश्वम्भरस्तीर्थपादः पुण्यश्रवणकीर्त्तनः ।
आदिदेवो जगज्जैत्रो मुकुन्दः कालनेमिहा ॥ ३५ ॥
वैकुण्ठोऽनन्तमाहात्म्यो महायोगीश्वरेश्वरः ।
नित्यतृप्तो न सद्भावो निःशङ्को नरकान्तकः ॥ ३६ ॥
दीनानाथैकशरणं विश्वैकव्यसनापहा ।
जगत्क्षमाकृतो नित्यो कृपालुः सज्जनाश्रयः ॥ ३७ ॥

---

[2] पावन इत्यत्र उत्तम इति २ C. P

योगेश्वरः सदोदीर्णो वृद्धिक्षयविवर्जितः ।
अधोक्षजो विश्वरेता प्रजापतिसभाधिपः ॥ ३८ ॥
शक्रब्रह्मार्चितपदः शम्भुब्रह्मोर्द्धधामगः ।
सूर्य्यसोमेक्षणो विश्वभोक्ता सर्व्वस्य पारगः ॥ ३९ ॥
जगत्सेतुर्धर्मसेतुर्धीरोऽरिष्टधुरन्धरः ।
निर्ममोऽखिललोकेशो निःसङ्गोऽद्भुतभोगवान् ॥ ४० ॥
रम्यमायो विश्वविश्वो विश्वक्सेनो नगोत्तमः ।
सर्व्वाश्रयः पतिर्देव्याः सर्व्वभूषणभूषितः ॥ ४१ ॥
सर्व्वलक्षणलक्षण्यः सर्व्वदैत्येन्द्रदर्पहा ।
समस्तदेवसर्व्वस्वः सर्व्वदैवतनायकः ॥ ४२ ॥
समस्तदेवतादुर्गः प्रपन्नाशनिपञ्जरः ।
समस्तदेवकवचं सर्व्वदेवशिरोमणिः ॥ ४३ ॥
समस्तभयनिर्भिन्नो भगवान् विष्टरश्रवाः ।
विभुः सर्व्वहितोदर्को हतारिः सुगतिप्रदः ॥ ४४ ॥
सर्व्वदैवतजीवेशो ब्राह्मणादिनियोजकः ।
ब्रह्मशम्भुपरार्द्धायुर्ब्रह्मजेष्ठः शिशुःस्वराट् ॥ ४५ ॥
विराट् भक्तपराधीनः स्तुत्यः सर्व्वार्थसाधकः ।
सर्व्वार्थकर्त्ता कृत्यज्ञः स्वार्थकृत्यसदोज्झितः ॥ ४६ ॥
सदा नवः सदा भद्रः सदा शान्तः सदा शिवः ।
सदा प्रियः सदा तुष्टः सदा पुष्टः सदार्च्चितः ॥ ४७ ॥
सदा पूतः पावनाग्रो वेदगुह्यो वृषाकपिः ।
सहस्रनामा त्रियुगश्चतुर्मूर्त्तिश्चतुर्भुजः ॥ ४८ ॥

भूतभव्यभवन्नाथो महापूरुषपूर्व्वजः ।
नारायणो मुञ्जकेशः सर्व्वयोगविनिसृतः ॥ ४९ ॥
वेदसारो यज्ञसारः सामसारस्तपोनिधिः ।
साध्यश्रेष्ठः पुराणर्षिर्निष्ठाशान्तिपरायणः ॥ ५० ॥
शिवस्त्रिशूलविध्वंसी श्रीकण्ठैकवरप्रदः ।
नरकृष्णो हरिर्धर्मनन्दनो धर्मजीवनः ॥ ५१ ॥
आदिकर्त्ता सर्व्वसत्यः सर्वस्त्रीरत्नदर्पहा ।
त्रिकालो जितकन्दर्प उर्वशीदृङ्मुनीश्वरः ॥ ५२ ॥
आद्यः कविर्हयग्रीवः सर्ववागीश्वरेश्वरः ।
सर्वदेवमयो ब्रह्म गुरुर्वागीश्वरीपतिः ॥ ५३ ॥
अनन्तविद्याप्रभवो मूलाविद्याविनाशकः ।
सर्व्वार्हणो जगज्जाड्यनाशको मधुसूदनः ॥ ५४ ॥
अनन्तमन्त्रकोटीशः शब्दब्रह्मैकपावकः ।
आदिविद्वान् वेदकर्त्ता वेदात्मा श्रुतिसागरः ॥ ५५ ॥
ब्रह्मार्थवेदाभरणः सर्वविज्ञानजन्मभूः ।
विद्याराजो ज्ञानराजो ज्ञानसिन्धुरखण्डधीः ॥ ५६ ॥
मत्स्यदेवो महाशृङ्गो जगद्बीजवहित्रधृक् ।
लीलाव्याप्ताखिलाम्भोधिश्चतुर्वेदप्रवर्त्तकः ॥ ५७ ॥
आदिकूर्मोऽखिलाधारस्तृणीकृतजगद्भवः ।
अमरीकृतदेवौघः पीयूषोत्पत्तिकारणं ॥ ५८ ॥
आत्माधारो धराधारो यज्ञाङ्गो धरणीधरः ।
हिरण्याक्षहरः पृथ्वीपतिः श्राद्धादिकल्पकः ॥ ५९ ॥

समस्तपितृभीतिघ्नः समस्तपितृजीवनं ।
हव्यकव्यैकभुग्भव्यो गुणभव्यैकदायकः ॥ ६० ॥
लोमान्तलीनजलधिः क्षोभिताशेषसागरः ।
महावराहो यज्ञघ्नध्वंसनो याज्ञिकाश्रयः ॥ ६१ ॥
नरसिंहो दिव्यसिंहः सर्वारिष्टार्त्तिदुःखहा ।
एकवीरोऽद्भुतबलो यन्त्रमन्त्रैकभञ्जनं ॥ ६२ ॥
ब्रह्मादिदुःसहज्योतिर्युगान्ताग्न्यतिभीषणः ।
कोटिवज्राधिकनखो जगद्दुःप्रेक्ष्यमूर्त्तिधृक् ॥ ६३ ॥
मातृचक्रप्रमथनो महामातृगणेश्वरः ।
अचिन्त्यो मोघवीर्य्याढ्यः समस्तासुरघस्मरः ॥ ६४ ॥
हिरण्यकशिपुच्छेदी कालः सङ्कर्षणः पतिः ।
कृतान्तवाहनः सद्यः समस्तभयनाशनः ॥ ६५ ॥
सर्वविघ्नान्तकः सर्वसिद्धिदः सर्वपूरकः ।
समस्तपातकध्वंसी सिद्धमन्त्राधिकाह्वयः ॥ ६६ ॥
भैरवेशो हरार्त्तिघ्नः कालकल्पो दुरासदः ।
दैत्यगर्भस्राविनामा स्फुटद्ब्रह्माण्डवर्ज्जितः ॥ ६७ ॥
स्मृतिमात्राखिलत्राता भूतरूपो महाहरिः ।
ब्रह्मचर्मशिरःपट्टा दिक्पालोऽर्द्धाङ्गभूषणः ॥ ६८ ॥
द्वादशार्कशिरोदामा रुद्रशीर्षैकनूपुरः ।
योगिनीग्रस्तगिरिजात्राता भैरवतर्ज्जकः ॥ ६९ ॥
वीरचक्रेश्वरोऽत्युग्रो यमारिः कालसंवरः ।
क्रोधेश्वरो रुद्रचण्डीपरिवादी सुदुष्टभाक् ॥ ७० ॥

सर्वाक्षः सर्वमृत्युश्च मृत्युर्मृत्युनिवर्त्तकः ।
असाध्यः सर्वरोगघ्नः सर्वदुग्रहसौम्यकृत् ॥ ७१ ॥
गणेशकोटिदर्पघ्नो दुःसहोऽशेषगोत्रहा ।
देवदानवदुर्धर्षो जगद्भयप्रदः पिता ॥ ७२ ॥
समस्तदुर्गतित्राता जगद्भक्षकभक्षकः ।
उग्रेशोऽसुरमार्जारः कालमूषिकभक्षकः ॥ ७३ ॥
अनन्तायुधदोर्दण्डो नृसिंहो वीरभद्रजित् ।
योगिनीचक्रगुह्येशः शक्रारिः पशुमांसभुक् ॥ ७४ ॥
रुद्रो नारायणो मेषरूपशङ्करवाहनः ।
मेषरूपा शिवत्राता दुष्टशक्तिसहस्रभुक् ॥ ७५ ॥
तुलसीवल्लभो वीरोऽचिन्त्यमायोऽखिलेष्टदः ।
महाशिवः शिवारुद्रो भैरवैककपालभृत् ॥ ७६ ॥
भिल्लीचक्रेश्वरः शक्रो दिव्यमोहनरूपधृक् ।
गौरीसौभाग्यदो मायानिधिर्मायाभयापहः ॥ ७७ ॥
ब्रह्मतेजोमयो ब्रह्म श्रीमयश्च त्रयीमयः ।
सुब्रह्मण्यो बलिध्वंसी वामनोऽदितिदुःखहा ॥ ७८ ॥
उपेन्द्रो नृपतिर्विष्णुः कश्यपान्वयमण्डनः ।
बलिस्वाराज्यदः सर्वदेवविप्रान्नदोऽच्युतः ॥ ७९ ॥
उरुक्रमस्तीर्थपादस्त्रिदशश्च त्रिविक्रमः ।
व्योमपादः स्वपादाम्भःपवित्रितजगत्त्रयः ॥ ८० ॥
ब्रह्मेशाद्यभिवन्द्याङ्घ्रिर्द्रुतकर्मोद्रिधारणः ।
अचिन्त्याद्भुतविस्तारो विश्ववृक्षो महाबलः ॥ ८१ ॥

वहुमूर्द्धा पराङ्गच्छिद्गुपत्नीशिरोहरः ।
पापस्तेयः सदापुण्यो दैत्येशो नित्यखण्डकः ॥ ८२ ॥
पूरिताखिलदेवेशो विश्वार्थैकावतारकृत् ।
[3]अमरो नित्यगुप्तात्मा भक्तचिन्तामणिः सदा ॥ ८३ ॥
वरदः कार्त्तवीर्य्यादिराजराज्यप्रदोऽनघः ।
विश्वश्लाघ्योऽमिताचारो दत्तात्रेयो मुनीश्वरः ॥ ८४ ॥
परशक्तिसमायुक्तो योगानन्दमदोन्मदः ।
समस्तेन्द्रारितेजोहृत् परमानन्दपादपः ॥ ८५ ॥
अनसूयागर्भरत्नो भोगमोक्षसुखप्रदः ।
जमदग्निकुलादित्यो रेणुकाद्भुतशक्तिहृत् ॥ ८६ ॥
मातृहत्यादिनिर्लेपः [4]स्कन्दजिद्विप्रराज्यदः ।
सर्व्वक्षत्रान्तकृद्वीरदर्पहा कार्त्तवीर्य्यजित् ॥ ८७ ॥
योगी योगावतारश्च योगीशो योगतत्परः ।
परमानन्ददाता च शिवाचार्य्ययशःप्रदः ॥ ८८ ॥
भीमः परशुरामश्च शिवाचार्य्यैकविश्वभुः ।
शिवाखिलज्ञानकोषो भीष्माचार्य्योऽग्निदैवतः ॥ ८९ ॥
द्रोणाचार्य्यगुरुर्व्विश्वजैत्रधन्वा कृतान्तकृत् ।
अद्वितीयतमोमूर्त्तिर्ब्रह्मचर्य्यैकदक्षिणः ॥ ९० ॥
मनुश्रेष्ठः सतां सेतुर्महीयान् वृषभो विराट् ।
आदिराजः क्षितिपिता सर्व्वरत्नैकदोहकृत् ॥ ९१ ॥

---

[3] समाधानित्यगुप्तात्मेति ।

[4] स्कन्दजिद्विप्रराज्यश्च इति ।

पृथुजन्माद्येकदक्षो ह्रीः श्रीः कीर्त्तिः स्वयं धृतिः ।
जगद्वृत्तिप्रदश्चक्रवर्त्तिश्रेष्ठो दुरस्त्रधृक् ॥ ९२ ॥
सनकादिमुनिप्राप्यभगवद्भक्तिवर्द्धनः ।
वर्णाश्रमादिधर्माणां कर्त्ता वक्ता प्रवर्त्तकः ॥ ९३ ॥
सूर्य्यवंशध्वजो रामो राघवः सद्गुणार्णवः ।
काकुत्स्थवीरताधर्मोराजधर्मधुरन्धरः ॥ ९४ ॥
नित्यसुस्थाश्रयः सर्व्वभद्रग्राही शुभैकदृक् ।
नवरत्नं रत्ननिधिः सर्व्वाध्यक्षो महानिधिः ॥ ९५ ॥
सर्व्वश्रेष्ठाश्रयः सर्व्वशस्त्रास्त्रग्रामवीर्य्यवान् ।
जगद्वशी दाशरथिः सर्व्वरत्नाश्रयो नृपः ॥ ९६ ॥
धर्मः समस्तधर्मस्थो धर्मद्रष्टाखिलार्त्तिहृत् ।
अतीन्द्रो ज्ञानविज्ञानपारदृश्वा क्षमाम्बुधिः ॥ ९७ ॥
सर्व्वप्रकृष्टः शिष्टेष्टो हर्षशोकाद्यनाकुलः ।
पित्राज्ञात्यक्तसाम्राज्यः सपत्नोदयनिर्भयः ॥ ९८ ॥
गुहादेशार्पितैश्वर्य्यः शिवस्पर्द्धाजटाधरः ।
चित्रकूटाप्तरत्नाद्रिजगदीशो वनेचरः ॥ ९९ ॥
यथेष्टामोघशस्त्रास्त्रो देवेन्द्रतनयाक्षिहा ।
ब्रह्मेन्द्रादिनतैषीको मारीचघ्नो विराधहा ॥ १०० ॥
ब्रह्मशापहताशेषदण्डकारण्यपावनः ।
चतुर्द्दशसहस्राग्र्यरक्षोघ्नैकशरैकभृत् ॥ १०१ ॥
खरारिस्त्रिशिरोहन्ता दूषणघ्नो जनार्द्दनः ।
जटायुषोऽग्निगतिदो कबन्धस्वर्गदायकः ॥ १०२ ॥

लीलाधनुःकोट्यपास्तदुन्दुभ्यस्थिमहाचयः ।
सप्ततालव्यथाकृष्टध्वजपातालदानवः ॥ १०३ ॥
सुग्रीवे राज्यदो धीमान् मनसैवाभयप्रदः ।
हनूमद्रुद्रमुख्येशः समस्तकपिदेहभृत् ॥ १०४ ॥
अग्निदैवत्यबाणैकव्याकुलीकृतसागरः ।
सम्लिच्छकोटिबाणैकशुष्कनिर्दग्धसागरः ॥ १०५ ॥
सनागदैत्यधामैकव्याकुलीकृतसागरः ।
समुद्राद्भुतपूर्व्वैकबद्धसेतुर्यशोनिधिः ॥ १०६ ॥
असाध्यसाधको लङ्कासमूलोत्कर्षदक्षिणः ।
वरदृप्तजनस्थानपौलस्त्यकुलकृन्तनः ॥ १०७ ॥
रावणघ्नः प्रहस्तच्छित् कुम्भकर्णभिदुग्रहा ।
रावणैकमुखच्छेत्ता निःशङ्केन्द्रैकराज्यदः ॥ १०८ ॥
स्वर्गास्वर्गत्वविच्छेदी देवेन्द्रानिन्द्रताहरः ।
रक्षोदेवत्वहृद्धर्मा धर्महर्म्यः पुरुष्टुतः ॥ १०९ ॥
नातिमात्रदशास्यारिर्दत्तराज्यविभीषणः ।
सुधावृष्टिमृताशेषस्वसैन्यजीवनैककृत् ॥ ११० ॥
देवब्राह्मणनामैकधाता सर्व्वामरार्चितः ।
ब्रह्मसूर्य्येन्द्ररुद्रादिवन्द्योऽर्च्चितसतां प्रियः ॥ १११ ॥
अयोध्याखिलराजाग्रः सर्व्वभूतमनोहरः ।
स्वाम्यतुल्यकृपादण्डो हीनोत्कृष्टैकसत्प्रियः ॥ ११२ ॥
स्वपक्षादिन्यायदर्शी हीनार्थाऽधिकसाधकः ।
वाधव्याजानुचितकृत्तावकोऽखिलतुष्टिकृत् ॥ ११३ ॥

पार्व्वत्यधिकयुक्तात्मा प्रियात्यक्तः सुरारिजित् ।
साक्षात्कुशलवत्सच्छन्नेन्द्राग्निनातोऽपराजितः ॥ ११४ ॥
कोशलेन्द्रो वीरबाहुः सत्यार्थत्यक्तसोदरः ।
यशोदानन्दनो नन्दी धरणीमण्डलोदयः ॥ ११५ ॥
ब्रह्मादिकाम्यसान्निध्यसनाथीकृतदैवतः ।
ब्रह्मलोकाप्तचाण्डालाद्यशेषप्राणिसार्थपः ॥ ११६ ॥
स्वर्णीतगर्दभश्वादिचिरायोध्यावलैकजित् ।
रामाद्वितीयः सौमित्रिलक्ष्मणप्रहतेन्द्रजित् ॥ ११७ ॥
विष्णुभक्ताशिवांहःच्छित्पादुकाराज्यनिर्वृतः ।
भरतोऽसंख्यगन्धर्व्वकोटिघ्नो लवणान्तकः ॥ ११८ ॥
शत्रुघ्नो वैद्यराडायुर्वेदगर्भौषधीपतिः ।
नित्यानित्यकरो धन्वन्तरिर्यज्ञो जगद्धरः ॥ ११९ ॥
सूर्य्यविघ्नः सुराजीवो दक्षिणेशो द्विजप्रियः ।
छिन्नमूर्द्धोपदेशार्कतनूजकृतमेचिकः ॥ १२० ॥
शेषाङ्गस्थापितनरः कपिलः कर्द्दमात्मजः ।
योगात्मकध्यानभङ्गसगरात्मजभस्मकृत् ॥ १२१ ॥
धर्म्मो विश्वेन्द्रसुरभीपतिः शुद्धात्मभावितः ।
शम्भुत्रिपुरदाहैकस्थैर्य्यविश्वरथोद्वतः ॥ १२२ ॥
विश्वात्माशेषरुद्रार्थशिरश्छेदाद्धताकृतिः ।
वाजपेयादिनामाग्निर्वेदधर्मपरायणः ॥ १२३ ॥
श्वेतद्वीपपतिः सांख्यप्रणेता सर्व्वसिद्धिराट् ।
विश्वप्रकाशितध्यानयोगो मोहतमिस्रहा ॥ १२४ ॥

भक्तश्रम्भुजितो दैत्यामृतवापीसमस्तपः ।
महाप्रलयविश्वैकोऽद्वितीयोऽखिलदैत्यराट् ॥ १२५ ॥
शेषदेवः सहस्राक्षः सहस्राङ्घ्रिशिरोभुजः ।
फणी फणिफणाकारयोजिताभ्यम्बुदक्षितिः ॥ १२६ ॥
कालाग्निरुद्रजनको मुषलास्त्रो हलायुधः ।
नीलाम्बरो वारुणीशो मनोवाक्कायदोषहा ॥ १२७ ॥
स्वसन्तोषतृप्तिमाद्यः पातितैकदशाननः ।
[*]बलिसंयमनो घोरो रौहिणेयः प्रलम्बहा ॥ १२८ ॥
मुष्टिकघ्नो द्विविदहा कालिन्दीभेदनो बलः ।
रेवतीरमणः पूर्वभक्तिरेवाच्युताग्रजः ॥ १२९ ॥
देवकीवसुदेवोत्थोऽदितिकश्यपनन्दनः ।
वार्ष्णेयः सात्वतां श्रेष्ठः शौरिर्यदुकुलोद्वहः ॥ १३० ॥
नराकृतिः पूर्णब्रह्म सव्यसाची परन्तपः ।
ब्रह्मादिकामनानित्यजगत्पवितशैशवः ॥ १३१ ॥
पूतनाघ्नः शकटभिद्यमलार्जुनभञ्जनः ।
वत्सासुरारिः केशिघ्नो धेनुकारिर्गवीश्वरः ॥ १३२ ॥
दामोदरो गोपदेवो यशोदानन्दकारकः ।
कालीयमर्द्दनः सर्वगोपगोपीजनप्रियः ॥ १३३ ॥
लीलागोवर्द्धनधरो गोविन्दो गोकुलोत्सवः ।
अरिष्टमथनः कामोन्मत्तगोपीविमुक्तिदः ॥ १३४ ॥

---

[*] योनिसम्भव इति ।

सद्यः कुवलयापीडघाती चानूरमर्द्दनः ।
कंसारिरुग्रसेनादिराज्यस्थाप्यऽरिहाऽमरः ॥ १३५ ॥
सुधर्म्माङ्कितभूलोको जरासन्धवलान्तकः ।
त्यक्तभग्नजरासन्धभीमसेनयशःप्रदः ॥ १३६ ॥
सान्दीपनिमृतापत्यदाता कालान्तकादिजित् ।
रुक्मिणीरमणो रुक्मिशासनो नरकान्तकृत् ॥ १३७ ॥
समस्तनरकत्राता सर्व्वभूपतिकोटिजित् ।
समस्तसुन्दरीकान्तोऽसुरारिर्गरुडध्वजः ॥ १३८ ॥
एकाकी जितरुद्रार्कमरुदाद्योऽखिलेश्वरः ।
देवेन्द्रदर्पहा कल्पद्रुमालङ्कृतभूतलः ॥ १३९ ॥
बाणबाहुसहस्रच्छित्स्कन्धादिगणकोटिजित् ।
लीलाजितमहादेवो महादेवैकपूजितः ॥ १४० ॥
इन्द्रार्थार्ज्जुननिर्भत्सर्जयदः पाण्डवैकधृक् ।
काशीराजशिरश्छेत्ता रुद्रशक्त्येकमर्द्दनः ॥ १४१ ॥
विश्वेश्वरप्रसादाढ्यः काशीराजसुतार्द्दनः ।
शम्भुप्रतिज्ञापाता च स्वयम्भुगणपूजकः ॥ १४२ ॥
काशीशगणकोटिघ्नो लोकशिक्षाद्विजार्च्चकः ।
शिवतीव्रतपोवश्यः पुरा शिववरप्रदः ॥ १४३ ॥
गयासुरप्रतिज्ञाधृक् स्वांशशङ्करपूजकः ।
शिवकन्याव्रतपतिः कृष्णरूपशिवारिहा ॥ १४४ ॥
महालक्ष्मीवपुर्गौरीत्राणो दैवलवातहा ।
विनिद्रमुचकुन्दैकब्रह्मास्त्रयुवनाश्वहृत् ॥ १४५ ॥

अक्रूरोऽक्रूरमुख्यैकभक्तस्वच्छन्दमुक्तिदः ।
सबालस्त्रीजलक्रीडामृतवापीकृतार्णवः ॥ १४६ ॥
यमुनापतिरानीतपरिणीतद्विजात्मकः ।
श्रीदामशङ्कुभक्तार्थभूम्यानीतेन्द्रभैरवः ॥ १४७ ॥
दुर्वृत्तशिशुपालैकमुक्तिकोद्धारकेश्वरः ।
आचाण्डालादिकं प्राप्य द्वारकानिधिकोटिकृत् ॥ १४८ ॥
ब्रह्मास्त्रदग्धगर्भस्थपरीक्षिज्जीवनैकदृत् ।
परिणीतद्विजसुतानेताऽर्जुनमदापहः ॥ १४९ ॥
गूढमुद्राकृतिग्रस्तभीष्माद्यखिलगौरवः ।
पार्थार्थखण्डिताशेषदिव्यास्त्रः पार्थमोहहृत् ॥ १५० ॥
ब्रह्मशापच्छलध्वस्तयादवो विभवावहः ।
अनङ्गो जितगौरीशो रतिकान्तः सदेप्सितः ॥ १५१ ॥
पुष्पेषुर्विश्वविजयी स्मरः कामेश्वरीपतिः ।
उषापतिर्विश्वकेतुर्विश्वतृप्तोऽधिपूरुषः ॥ १५२ ॥
चतुरात्मा चतुर्व्यूहश्चतुर्वेदविधायकः ।
चतुर्विश्वैकविश्वात्मा सर्वोत्कृष्टांशु कोटिषु ॥ १५३ ॥
आश्रयात्मा पुराणर्षिर्व्यासः शास्त्रसहस्रकृत् ।
महाभारतनिर्माता कवीन्द्रो बादरायणः ॥ १५४ ॥
कृष्णद्वैपायनः सर्वपुरुषार्थैकबोधकः ।
वेदान्तकर्त्ता ब्रह्मैकव्यञ्जकः पुरुवंशकृत् ॥ १५५ ॥
बुद्धो ध्यानजिताशेषदेवदेवो जगत्प्रियः ।
निरायुधो जगज्जैत्रः श्रीधनो दुष्टमोहनः ॥ १५६ ॥

दैत्यवेदवहिष्कर्त्ता वेदार्थश्रुतिगोपकः ।
शुद्धोदनिर्नष्टदिष्टः सुखदः सदसत्पतिः ॥ १५७ ॥
यथायोग्याखिलकृपः सर्वशून्योऽखिलेष्टदः ।
चतुष्कोटिपृथक्तत्त्वं प्रज्ञापारमितेश्वरः ॥ १५८ ॥
पाषण्डश्रुतिमार्गेण पाषण्डश्रुतिगोपकः ।
कल्की *विष्णुयशःपूतः कलिकालविलोपकः ॥ १५९ ॥
समस्तम्लेच्छहन्ताग्रः सर्व्वशिष्टद्विजातिकृत् ।
सत्यप्रवर्त्तको देवद्विजदीर्घक्षुधापहः ॥ १६० ॥
अश्वरावादिवेदेन पृथ्वीदुर्गतिनाशनः ।
सद्यःक्ष्मानन्तलक्ष्मीकृत् नष्टनिःशेषधर्मकृत् ॥ १६१ ॥
अनन्तस्वर्गयागैकहेमपूर्णाखिलद्विजः ।
असाध्यैकजगच्छास्ता विश्ववन्द्यो जयध्वजः ॥ १६२ ॥
आत्मतत्त्वाधिपः कर्तृश्रेष्ठो विधिरुमापतिः ।
भर्तुः श्रेष्ठःप्रजेशाग्र्यो मरीचिजनकाग्रणीः ॥ १६३ ॥
कश्यपो देवराडिन्द्रः प्रह्लादो दैत्यराट् शशी ।
नक्षत्रेशो रविस्तेजःश्रेष्ठः शुक्रः कवीश्वरः ॥ १६४ ॥
महर्षिराट् भृगुर्विष्णुरादित्येशो वलिः स्वराट् ।
वायुर्वह्निः शुचिश्रेष्ठः शङ्करो रुद्रराट् गुरुः ॥ १६५ ॥
विद्वत्तमश्चित्ररथो गन्धर्व्वाग्र्यो वसूत्तमः ।
वर्णादिरग्र्या स्त्री गौरी शक्त्यग्र्या श्रीश्च नारदः ॥ १६६ ॥

---

* विष्णुयशःपुत्र इति P

देवर्षिराट् पाण्डवाग्रोऽर्जुनो नारदवादराट् ।
पवनः पवनेशानो वरुणो यादसाम्पतिः ॥ १६७ ॥
गङ्गातीर्थोत्तमोद्भूतं छत्रकाग्र्यं वरौषधं ।
अस्त्रं सुदर्शनास्त्राग्रो वज्रप्रहरणोत्तमं ॥ १६८ ॥
उच्चैःश्रवा वाजिराज ऐरावत इभेश्वरः ।
अरुन्धत्येकपत्नीशो ह्यश्वत्थोऽशेषवृक्षराट् ॥ १६९ ॥
अध्यात्मविद्याविद्यात्मा प्रणवश्छन्दसां वरः ।
मेरुर्गिरिपतिर्मार्गो मासाग्रः कालसत्तमः ॥ १७० ॥
दिनाद्यात्मा पूर्व्वसिद्धिः कपिलः सामवेदराट् ।
तार्क्ष्यः खगेन्द्र ऋत्वग्रो वसन्तः कल्पपादपः ॥ १७१ ॥
दातृश्रेष्ठः कामधेनुरार्त्तिघ्नाग्रः सुरोत्तमः ।
चिन्तामणिर्गुरुश्रेष्ठो माता हिततमः पिता ॥ १७२ ॥
सिंहो मृगेन्द्रो नागेन्द्रो वासुकिर्भूधरो नृपः ।
वर्णशो ब्राह्मणश्चान्तःकरणाग्र्यं नमो नमः ॥ १७३ ॥
इत्येतद्वासुदेवस्य विष्णोर्नामसहस्रकं ।
सर्व्वापराधशमनं परं भक्तिविवर्द्धनं ॥ १७४ ॥
अक्षयब्रह्मलोकादिसर्व्वार्थाप्त्येकसाधनं ।
विष्णुलोकैकसोपानं सर्व्वदुःखविनाशनं ॥ १७५ ॥
समस्तसुखदं सत्यं परं निर्व्वाणदायकं ।
कामक्रोधादिनिःशेषमनोमलविशोधनं ॥ १७६ ॥
शान्तिदं पावनं नृणां महापातकिनामपि ।
सर्व्वेषां प्राणिनामाशु सर्व्वाभीष्टफलप्रदं ॥ १७७ ॥

सर्व्वविघ्नप्रशमनं सर्व्वारिष्टविनाशनं ।
घोरदुःस्वप्रशमनं तीव्रदारिद्र्यनाशनं ॥ १७८ ॥
तापत्रयापहं गुह्यं धनधान्ययशस्करं ।
सर्व्वैश्वर्य्यप्रदं सर्व्वसिद्धिदं सर्व्वकामदं ॥ १७९ ॥
तीर्थयज्ञतपोदानव्रतकोटिफलप्रदं ।
अप्रज्ञजाड्यशमनं सर्व्वविद्याप्रवर्त्तकं ॥ १८० ॥
राज्यदं राज्यकामानां रोगिणां सर्व्वरोगनुत् ।
वन्ध्यानां सुतदञ्चाशु सर्व्वश्रेष्ठफलप्रदं ॥ १८१ ॥
अस्त्रग्रामविध्वंसी ग्रहपीडाविनाशनं ।
मङ्गल्यं पुण्यमायुष्यं श्रवणात् पठनाज्जपात् ॥ १८२ ॥
सकृदस्याखिला वेदाः साङ्गा मन्त्राश्च कोटिशः ।
पुराणशास्त्रं स्मृतयः पठिताः पाठितास्तथा ॥ १८३ ॥
जप्तास्य श्लोकं श्लोकार्द्धं पादं वा पठतः प्रिये ।
नित्यं सिद्ध्यति सर्व्वेषामचिरात् किमुतोऽखिलं ॥ १८४ ॥
प्राणेन सदृशं सद्यः प्रत्यहं सर्व्वकर्मसु ।
इदं भद्रे त्वया गोप्यं पाठ्यं स्वार्थैकसिद्धये ॥ १८५ ॥
नावैष्णवाय दातव्यं विकल्पोपहतात्मने ।
भक्तिश्रद्धाविहीनाय विष्णुसामान्यदर्शिने ॥ १८६ ॥
देयं पुत्राय शिष्याय शुद्धाय हितकाम्यया ।
मत्प्रसादादृते नेदं ग्रहिष्यन्त्यल्पमेधसः ॥ १८७ ॥
कलौ सद्यः फलं कल्पग्राममेष्यति नारदः ।
लोकानां भाग्यहीनानां येन दुःखं विनश्यति ॥ १८८ ॥

द्वेषेषु वैष्णवेष्वेतदाथ्यार्वर्त्तं भविष्यति ।
नास्ति विष्णोः परं सत्यं नास्ति विष्णोः परं पदं ॥ १८९ ॥
नास्ति विष्णोः परं ज्ञानं नास्ति मोक्षो ह्यवैष्णवः ।
नास्ति विष्णोः परो मन्त्रो नास्ति विष्णोः परं तपः ॥ १९० ॥
नास्ति विष्णोः परं ध्यानं नास्ति मन्त्रो ह्यवैष्णवः ।
किन्तस्य बहुभिर्मन्त्रैः किं जपैर्बहुविस्तरैः ॥ १९१ ॥
वाजपेयसहस्रैः किं भक्तिर्यस्य जनार्द्दने ।
सर्व्वतीर्थमयो विष्णुः सर्व्वशास्त्रमयः प्रभुः ॥ १९२ ॥
सर्व्वक्रतुमयो विष्णुः सत्यं सत्यं वदाम्यहं ।
आब्रह्मसारसर्व्वस्वं सर्व्वमेतन्मयोदितं ॥ १९३ ॥

श्रीपार्व्वत्युवाच ॥

धन्यास्म्यनुगृहीतास्मि कृतार्थास्मि जगद्गुरो ।
यन्मयेदं श्रुतं स्तोत्रं त्वद्रहस्यं सुदुर्लभं ॥ १९४ ॥
अहो बत महत्कष्टं समस्तं सुखदे हरौ ।
विद्यमानेऽपि सर्व्वेशे मूढाः क्लिश्यन्ति संसृतौ ॥ १९५ ॥
यमुद्दिश्य सदा नाथो महेशोऽपि दिगम्बरः ।
जटिलो भस्मलिप्ताङ्गस्तपस्वी वीक्षितो जनैः ॥ १९६ ॥
अतोऽधिको न देवोऽस्ति लक्ष्मीकान्तान्मधुद्विषः ।
यत्तत्त्वं चिन्त्यते नित्यं त्वया योगीश्वरेण हि ॥ १९७ ॥
अतःपरं किमधिकं पदं श्रीपुरुषोत्तमात् ।
तमविज्ञाय तान् मूढा यजन्ते ज्ञानमानिनः ॥ १९८ ॥
मूषितास्मि त्वया नाथ चिरं यदयमीश्वरः ।

प्रकाशितो न मे यस्य दत्ताद्या दिव्यशक्तयः ॥ १९९ ॥
अहो सर्व्वेश्वरो विष्णुः सर्व्वदेवोत्तमोत्तमः ।
भवदादिगुरुर्मूढैः सामान्य इव लक्ष्यते ॥ २०० ॥
महीयसां हि माहात्म्यं भजमानान् भजन्ति चेत् ।
द्विपतोऽपि तथा पापानुपेक्ष्यन्ते क्षमालयाः ॥ २०१ ॥
मयापि बाल्ये स्वपितुः प्रजा दृष्टा बुभुक्षिताः ।
दुःखादशक्ताः स्वं पोष्टुं श्रिया नाध्यासिताः पुरा ॥ २०२ ॥
त्वया संवर्द्धिताभिश्च प्रजाभिर्विबुधादयः ।
विलसद्भिः स्वशक्त्याद्याः ससुहृन्मित्रबान्धवाः ॥ २०३ ॥
त्वया विना क्व देवत्वं क्व धैर्य्यं क्व परिग्रहः ।
सर्व्वे भवन्ति जीवन्तो यातनाः शिरसि स्थिताः ॥ २०४ ॥
तामृते नैव धर्मार्थौ कामो मोक्षोऽपि दुर्लभः ।
क्षुधितानां दुर्गतानां कुतो योगसमाधयः ॥ २०५ ॥
सा च संसारसारैका सर्व्वलोकैकपालिका ।
वश्या सा कमला यस्य त्यक्ता त्वामपि शङ्कर ॥ २०६ ॥
श्रिया धर्म्मेण [7]शौर्य्येण रूपेणार्ज्जवसम्पदा ।
सर्व्वातिशयवीर्य्येण सम्पूर्णस्य महात्मनः ॥ २०७ ॥
कस्तेन तुल्यतामेति देवदेवेन विष्णुना ।
यस्यांशांशकभागेन विना सर्व्वं विलीयते ॥ २०८ ॥
जगदेतत्तथा प्राहुर्दोषायैतद्विमोहिताः ।

---

[7] शौचेन ॥

नास्य जन्म जरा मृत्युर्नाप्राप्यं वार्थमेव वा ॥ २०९ ॥
तथापि कुरुते धर्मान् पालनाय सतां कृते ।
विज्ञापय महादेवं प्रणम्यैकं महेश्वरं ॥ २१० ॥
अवधार्य्य तथा साहं कान्त कामद शाश्वत ।
कामाद्यासक्तचित्तत्वात् किन्तु सर्व्वेश्वर प्रभो ॥ २११ ॥
त्वन्मयत्वात्प्रसादाद्वा शक्नोमि पठितुं नचेत् ।
विष्णोः सहस्रनामैतत् प्रत्यहं वृषभध्वज ॥
नाम्नैकेन तु येन स्यात्तत्फलं ब्रूहि मे प्रभो ॥ २१२ ॥

श्रीमहादेव उवाच ।

राम रामेति रामेति रामरामो मनोरमे ।
सहस्रनामभिस्तुल्यं रामनाम वरानने ॥ २१३ ॥
अतः सर्व्वाणि तीर्थानि जलञ्चैव प्रयागजं ।
विष्णोर्नामसहस्रस्य कलां नार्हन्ति षोडशीं ॥ २१४ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे चतुर्थरात्रे पार्व्वतीशिवसम्वादे श्रीविष्णोर्नामसहस्र तृतीयोऽध्यायः ॥ ३ ॥

---

चतुर्थोऽध्यायः ।

श्रीमहादेव उवाच ।

शृणु देवि प्रवक्ष्यामि स्तोत्रं परमदुर्लभं ।
यज्ज्ञात्वा न पुनर्गच्छेन्नरो निरययातनां ॥ १ ॥

कवचञ्च महेशानि त्रैलोक्यमङ्गलादिकं ।
नारदाय च यत्प्रोक्तं ब्रह्मपुत्रेण धीमता ॥
सनत्कुमारेण पुरा योगीन्द्रगुरुवर्त्मना ॥ २ ॥

श्रीनारद उवाच ।

प्रसीद भगवन् मह्यमज्ञानात् कुण्ठितात्मने ।
तवाङ्घ्रिपङ्कजरजोरागिणीं भक्तिमुत्तमां ॥ ३ ॥
अज प्रसीद भगवन्नमितद्युतिपञ्जर ।
अप्रमेय प्रसीदास्मद्दुःखहन् पुरुषोत्तम ॥ ४ ॥
स्वसंवेद्य प्रसीदास्मदानन्दात्मन्ननामय ।
अचिन्त्यसार विश्वात्मन् प्रसीद परमेश्वर ॥ ५ ॥
प्रसीद तुङ्ग तुङ्गानां प्रसीद शिव शोभन ।
प्रसीद गुणगम्भीर गम्भीराणां महाद्युते ॥ ६ ॥
प्रसीद व्यक्त विस्तीर्ण विस्तीर्णानामगोचर ।
प्रसीदार्द्रार्द्रजातीनां प्रसीदान्तान्तदायिनां ॥ ७ ॥
गुरोर्गरीयः सर्व्वेश प्रसीदानन्त देहिनां ।
जय माधव मायात्मन् जय शाश्वत शङ्खभृत् ॥ ८ ॥
जय शङ्खधर श्रीमन् जय नन्दकनन्दन ।
जय चक्रगदापाणे जय देव जनार्द्दन ॥ ९ ॥
जय रत्नवराबद्धकिरीटाक्रान्तमस्तक ।
जय पक्षिपतिच्छायानिरुद्धार्ककरारुण ॥ १० ॥
नमस्ते नरकाराते नमस्ते मधुसूदन ।
नमस्ते ललितापाङ्ग नमस्ते नरकान्तक ॥ ११ ॥

नमः पापहरेशान नमः सर्व्वभयापह ।
नमः सम्भूतसर्व्वात्मन् नमः सम्भृतकौस्तुभ ॥ १२ ॥
नमस्ते नयनातीत नमस्ते भयहारक ।
नमो विभिन्नवेशाय नमः श्रुतिपथातिग ॥ १३ ॥
नमस्त्रिमूर्त्तिभेदेन स्वर्गस्थित्यन्तहेतवे ।
विष्णवे चिदशारातिजिष्णवे परमात्मने ॥ १४ ॥
चक्रभिन्नारिचक्राय चक्रिणे चक्रवल्लभे ।
विश्वाय विश्ववन्द्याय विश्वभूतानुवर्त्तिने ॥ १५ ॥
नमोऽस्तु योगिध्येयात्मन्नमोऽस्त्वध्यात्मरूपिणे ।
भक्तिप्रदाय भक्तानां नमस्ते भक्तिदायिने ॥ १६ ॥
पूजनं हवनं चेज्या ध्यानं पश्चान्नमस्क्रिया ।
देवेश कर्म सर्व्वं मे भवेदाराधनं तव ॥ १७ ॥
इति हवनजपार्च्चाभेदतो विष्णुपूजा
नियतहृदयकर्मा यस्तु मन्त्री चिराय ।
स खलु सकलकामान् प्राप्य कृष्णान्तरात्मा
जननमृतिविमुक्तामुत्तमां भक्तिमेति ॥ १८ ॥
गोगोपगोपिकावीत गोपाल गोपु गोप्रद ।
गोपैरीड्यं गोसहस्रैर्नौमि गोकुलनायकं ॥ १९ ॥
प्रीणयेदनया स्तुत्या जगन्नाथं जगन्मयं ।
धर्मार्थकाममोक्षाणामाप्तये पुरुषोत्तमं ॥ २० ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे चतुर्थरात्रे श्रीकृष्णस्तोत्रं चतुर्थोऽध्यायः ॥ ४ ॥

पञ्चमोऽध्यायः ।



श्रीनारद उवाच ।

भगवन् सर्व्वधर्मज्ञ कवचं यत्प्रकाशितं ।
त्रैलोक्यमङ्गलं नाम कृपया कथय प्रभो ॥ १ ॥

सनत्कुमार उवाच ।

शृणु वक्ष्यामि विप्रेन्द्र कवचं परमाद्भुतं ।
नारायणेन कथितं कृपया ब्रह्मणे पुरा ॥ २ ॥
ब्रह्मणा कथितं मह्यं परं स्नेहाद्वदामि ते ।
अतिगुह्यतरं तत्त्वं ब्रह्ममन्त्रौघविग्रहं ॥ ३ ॥
यद्धृत्वा पठनाद्ब्रह्मा सृष्टिं वितनुते ध्रुवं ।
यद्धृत्वा पठनात्पाति महालक्ष्मीर्जगत्त्रयं ॥ ४ ॥
पठनाद्धारणात् शम्भुः संहर्त्ता सर्व्वमन्त्रवित् ।
त्रैलोक्यजननी दुर्गा महिषादिमहासुरान् ॥ ५ ॥
वरदृप्तान् जघानैव पठनाद्धारणाद्यतः ।
एवमिन्द्रादयः सर्वे सर्वैश्वर्य्यमवाप्नुयुः ॥ ६ ॥
इदं कवचमत्यन्तगुप्तं कुत्रापि नो वदेत् ।
शिष्याय भक्तियुक्ताय साधकाय प्रकाशयेत् ॥ ७ ॥
शठाय परशिष्याय दत्त्वा मृत्युमवाप्नुयात् ।
त्रैलोक्यमङ्गलस्यास्य कवचस्य प्रजापतिः ॥ ८ ॥

ऋषिश्छन्दश्च गायत्री देवो नारायणः स्वयं ।
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः ॥ ९ ॥
प्रणवो मे शिरः पातु नमो नारायणाय च ।
भालं मे नेत्रयुगलमष्टार्णो भक्तिमुक्तिदः ॥ १० ॥
क्लीं पायाच्छ्रोत्रयुग्मञ्चैकाक्षरः सर्वमोहनः ।
क्लींकृष्णाय सदा घ्राणं गोविन्दायेति जिह्विकां ॥ ११ ॥
गोपीजनपदं वल्लभाय स्वाहाननं मम ।
अष्टादशाक्षरो मन्त्रः कण्ठं पातु दशाक्षरः ॥ १२ ॥
गोपीजनपदं वल्लभाय स्वाहा भुजद्वयं ।
क्लीं ग्लौं क्लीं श्यामलाङ्गाय नमः स्कन्धौ दशाक्षरः ॥१३॥
क्लीं कृष्ण क्लीं करौ पायात् क्लीं कृष्णायाङ्गतोऽवतु ।
हृदयं भुवनेशानी क्लींकृष्णाय क्लीं स्तनौ मम ॥ १४ ॥
गोपालायाग्निजायान्तं कुक्षियुग्मं सदावतु ।
क्लींकृष्णाय सदा पातु पार्श्वयुग्ममनुत्तमः ॥ १५ ॥
कृष्णगोविन्दकौ पातु स्मराद्यौ ङेयुतौ मनुः ।
अष्टाक्षरः पातु नाभिं कृष्णेति द्व्यक्षरोऽवतु ॥ १६ ॥
पृष्ठं क्लींकृष्ण कङ्कालं क्लींकृष्णाय द्विठान्तकः ।
शक्थिनी सततं पातु श्रीं ह्रीं क्लीं कृष्णठद्वयं ॥ १७ ॥
ऊरू सप्ताक्षरः पायात् त्रयोदशाक्षरोऽवतु ।
श्रीं ह्रीं क्लीं पदतो गोपीजनवल्लभदन्ततः ॥ १८ ॥
भाय स्वाहेति पायूं वै क्लीं ह्रीं श्रीं सदशार्णकः ।
जानुनी च सदा पातु ह्रीं श्रीं क्लींच दशाक्षरः ॥ १९ ॥

त्रयोदशाक्षरः पातु जङ्घे चक्रायुदायुधः ।
अष्टादशाक्षरो ह्रीं श्रीं पूर्व्वको विंशदर्णकः ॥ २० ॥
सर्व्वाङ्गं मे सदा पातु द्वारकानायको बली ।
नमो भगवते पश्चाद्वासुदेवाय तत्परं ॥ २१ ॥
ताराद्यो द्वादशार्णोऽयं प्राच्यां मां सर्व्वदावतु ।
श्रीं ह्रीं क्लीं च दशार्णस्तु क्लीं ह्रीं श्रीं षोडशार्णकः ॥ २२ ॥
गदाद्युदायुधो विष्णुर्मामग्नेर्दिशि रक्षतु ।
ह्रीं श्रीं दशाक्षरो मन्त्रो दक्षिणे मां सदावतु ॥ २३ ॥
तारो नमो भगवते रुक्मिणीवल्लभाय च ।
स्वाहेति षोडशार्णोऽयं नैरृत्यां दिशि रक्षतु ॥ २४ ॥
क्लीं हृषीकेशपदं शाय नमो मां वारुणेऽवतु ।
अष्टादशार्णः कामान्तो वायव्ये मां सदावतु ॥ २५ ॥
श्रीं माया काम कृष्णाय गोविन्दाय द्विठो मनुः ।
द्वादशार्णात्मको विष्णुरुत्तरे मां सदावतु ॥ २६ ॥
वाग्भवं काम कृष्णाय ह्रीं गोविन्दाय तत्परं ।
श्रीं गोपीजनवल्लभान्ते भाय स्वाहा [1]ह्सौस्ततः ॥ २७ ॥
द्वाविंशत्यक्षरो मन्त्रो मामैशान्ये सदावतु ।
कालीयस्य फणामध्ये दिव्यं नृत्यं करोति तं ॥ २८ ॥
नमामि देवकीपुत्रं नृत्यराजानमच्युतं ।
द्वात्रिंशदक्षरो मन्त्रोऽप्यधो मां सर्व्वदावतु ॥ २९ ॥

[1] चसौः इति नवमारः चेसौः इति P S

कामदेवाय विद्महे पुष्पवाणाय धीमहि ।
तन्नोऽनङ्गः प्रचोदयाद्दिषा मां पातु चोर्द्धतः ॥ ३० ॥
इति ते कथितं विप्र ब्रह्ममन्त्रौघविग्रहं ।
त्रैलोक्यमङ्गलं नाम कवचं ब्रह्मरूपकं ॥ ३१ ॥
ब्रह्मणा कथितं पूर्व्वं नारायणमुखाच्छ्रुतं ।
तव स्नेहान्मयाऽऽख्यातं प्रवक्तव्यं न कस्यचित् ॥ ३२ ॥
गुरुं प्रणम्य विधिवत् कवचं प्रपठेत्ततः ।
सकृद्द्विस्त्रिर्यथाज्ञानं सोऽपि सर्व्वतपोमयः ॥ ३३ ॥
मन्त्रेषु सकलेष्वेव देशिको नात्र संशयः ।
शतमष्टोत्तरञ्चास्य पुरश्चर्य्याविधिः स्मृतः ॥ ३४ ॥
हवनादीन्दशांशेन कृत्वा तत्साधयेत् ध्रुवं ।
यदि स्यात् सिद्धिकवचो विष्णुरेव भवेत् स्वयं ॥ ३५ ॥
मन्त्रसिद्धिर्भवेत् तस्य पुरश्चर्य्याविधानतः ।
स्पर्द्धामुद्धूय सततं लक्ष्मीर्वाणी वसेत्ततः ॥ ३६ ॥
पुष्पाञ्जल्यष्टकं दत्त्वा मूलेनैव पठेत्सकृत् ।
दशवर्षसहस्राणां पूजायाः फलमाप्नुयात् ॥ ३७ ॥
भूर्ज्जे विलिख्य गुलिकां स्वर्णस्थां धारयेद्यदि ।
कण्ठे वा दक्षिणे वाहौ सोऽपि विष्णुर्न संशयः ॥ ३८ ॥
अश्वमेधसहस्राणि वाजपेयशतानि च ।
महादानानि यान्येव प्रादक्षिण्यं भुवस्तथा ॥ ३९ ॥
कलां नार्हन्ति तान्येव सकृदुच्चारणात्ततः ।
कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः ॥ ४० ॥

त्रैलोक्यं क्षोभयत्येव त्रैलोक्यविजयी भवेत् ।
इदं कवचमज्ञात्वा यजेद्यः पुरुषोत्तमं ॥
शतलक्षप्रजप्तोऽपि न मन्त्रस्तस्य सिद्ध्यति ॥ ४१ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे चतुर्थरात्रे त्रैलोक्यमङ्गल नाम कवच पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

---

षष्ठोऽध्यायः ॥



श्रीनारद उवाच ।

नवीननीरदश्यामं नीलेन्दीवरलोचनं ।
वल्लवीनन्दनं वन्दे कृष्णं गोपालरूपिणं ॥ १ ॥
स्फुरद्बर्हदलोद्बद्धनीलकुञ्चितमूर्द्धजं ।
कदम्बकुसुमोद्बद्धवनमालाविभूषितं ॥ २ ॥
गण्डमण्डलसंसर्गिचलत्कुञ्चितकुन्तलं ।
स्थूलमुक्ताफलोदारहारोद्योतितवक्षसं ॥ ३ ॥
हेमाङ्गदतुलाकोटिकिरीटोज्ज्वलविग्रहं ।
मन्दमारुतसंक्षोभचलिताम्बरसञ्चयं ॥ ४ ॥
रुचिरौष्ठपुटन्यस्तवंशीमधुरनिस्वनैः ।
लसद्गोपालिकाचेतो मोहयन्तं पुनः पुनः ॥ ५ ॥
वल्लवीवदनाम्भोजमधुपानमधुव्रतं ।
क्षोभयन्तं मनस्तासां सस्मेरापाङ्गवीक्षणैः ॥ ६ ॥

यौवनोद्भिन्नदेहाभिः संसक्ताभिः परस्परं ।
विचित्राम्बरभूषाभिर्गोपनारीभिरावृतं ॥ ७ ॥
प्रभिन्नाञ्जनकालिन्दीजलकेलिकलोत्सुकं ।
योधयन्तं क्वचिद्गोपान् व्याहरन्तं गवाङ्गणं ॥ ८ ॥
कालिन्दीजलसंसर्गिशीतलानिलसेविते ।
कदम्बपादपच्छाये स्थितं वृन्दावने क्वचित् ॥ ९ ॥
रत्नभूधरसंलग्नरत्नासनपरिग्रहं ।
कल्पपादपमध्यस्थहेममण्डपिकागतं ॥ १० ॥
वसन्तकुसुमामोदसुरभीकृतदिङ्मुखे ।
गोवर्द्धनगिरौ रम्ये स्थितं रासरसोत्सुकं ॥ ११ ॥
सव्यहस्ततलन्यस्तगिरिवर्य्यातपत्रकं ।
खण्डिताखण्डलोन्मुक्तमुक्तासारघनाघनं ॥ १२ ॥
वेणुवाद्यमहोल्लासकृतहुङ्कारनिस्वनैः ।
सवत्सैरुन्मुखैः शश्वद्गोकुलैरभिवीक्षितं ॥ १३ ॥
कृष्णमेवानुगायद्भिस्तच्चेष्टावशवर्त्तिभिः ।
दण्डपाशोद्यतकरैर्गोपालैरुपशोभितं ॥ १४ ॥
नारदाद्यैर्मुनिश्रेष्ठैर्वेदवेदाङ्गपारगैः ।
प्रीतिसुस्निग्धया वाचा स्तूयमानं परात्परं ॥ १५ ॥
य एवं [1]चिन्तयेद्देवं भक्त्या संस्तौति मानवः ।
त्रिसन्ध्यं तस्य तुष्टोऽसौ ददाति वरमीप्सितं ॥ १६ ॥

---

[1] चिन्तयन्निति-समीचीनः पाठः ॥

राजवल्लभतामेति भवेत् सर्व्वजनप्रियः।
अचलां श्रियमाप्नोति स वाग्मी जायते ध्रुवं ॥ १७ ॥

इति गोपालस्तोत्रं समाप्तं। इति श्रीनारदपञ्चरात्रे ज्ञानामृतसा
चतुर्थरात्रे गोपालस्तोत्रं षष्ठोऽध्यायः॥

---

## सप्तमोऽध्यायः।

श्रीमहादेव उवाच।

अथ वक्ष्यामि कवचं गोपालस्य जगद्गुरोः।
यस्य स्मरणमात्रेण जीवन्मुक्तो भवेन्नरः ॥ १ ॥
शृणु देवि प्रवक्ष्यामि सावधानाऽवधारय।
नारदोऽस्य ऋषिर्देवि छन्दोऽनुष्टुबुदाहृतं ॥ २ ॥
देवता बालकृष्णश्च चतुर्व्वर्गप्रदायकः।
शिरो मे बालकृष्णश्च पातु नित्यं मम श्रुती ॥ ३ ॥
नारायणः पातु कण्ठं गोपीवन्द्यः कपोलकं।
नासिके मधुहा पातु चक्षुषी नन्दनन्दनः ॥ ४ ॥
जनार्द्दनः पातु दन्तानधरं माधवस्तथा।
ऊर्द्ध्वौष्ठं पातु वाराहश्चिबुकं केशिसूदनः ॥ ५ ॥
हृदयं गोपिकानाथो नाभिं सेतुप्रदः सदा।
हस्तौ गोवर्द्धनधरः पादौ पीताम्बरोऽवतु ॥ ६ ॥
कराङ्गुलीन् श्रीधरो मे पादाङ्गुल्यः कृपामयः।
लिङ्गं पातु गदापाणिर्बालक्रीड़ामनोरमः ॥ ७ ॥

जगन्नाथः पातु पूर्व्वं श्रीरामोऽवतु पश्चिमं।
उत्तरं कैटभारिश्च दक्षिणं हनुमत्प्रभुः ॥ ८ ॥
आग्नेय्यां पातु गोविन्दो नैर्ऋतिं पातु केशवः।
वायव्यां पातु दैत्यारिरैशान्यां गोपनन्दनः ॥ ९ ॥
ऊर्द्धं पातु प्रलम्बारिरधः कैटभमर्द्दनः।
शयानं पातु पूतात्मा गतौ पातु श्रियःपतिः ॥ १० ॥
शेषः पातु निरालम्बे जाग्रद्भावे ह्यपां पतिः।
भोजने केशिहा पातु कृष्णः सर्व्वाङ्गसन्धिषु ॥ ११ ॥
गणनासु निशानाथो दिवानाथो दिनक्षये।
इति ते कथितं दिव्यं कवचं परमाद्भुतं ॥ १२ ॥
यः पठेन्नित्यमेवेदं कवचं प्रयतो नरः।
तस्याशु विपदो देवि नश्यन्ति रिपुसङ्कुलः ॥ १३ ॥
अन्ते गोपालचरणं प्राप्नोति परमेश्वरि।
त्रिसन्ध्यमेकसन्ध्यं वा यः पठेत् शृणुयादपि ॥ १४ ॥
तत्सर्व्वदा रमानाथः परिपाति चतुर्भुजः।
अज्ञात्वा कवचं देवि गोपालं पूजयेद्यदि ॥ १५ ॥
सर्व्वं तस्य वृथा देवि जपहोमार्च्चनादिकं।
स शस्त्रघातं सम्प्राप्य मृत्युमेति न संशयः ॥ १६ ॥

इति श्रीगोपालकवचं समाप्तं।

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे चतुर्थरात्रे सप्तमोऽध्यायः। ७।

अष्टमोध्याय ॥



श्रीपार्व्वत्युवाच ॥

भगवन् सर्व्वदेवेश देवदेव जगद्गुरो ।
कथितं कवचं दिव्यं बालगोपालरूपिणः ॥ १ ॥
श्रुतं मया तव मुखात् परं कौतूहलं मम ।
इदानीं श्रोतुमिच्छामि गोपालस्य परात्मनः ॥ २ ॥
सहस्रं नाम दिव्यानामशेषेणानुकीर्त्तय ।
तमेव शरणं नाथ त्राहि मां भक्तवत्सल ॥ ३ ॥
यदि स्नेहोऽस्ति देवेश मां प्रति प्राणवल्लभ ।
येन प्रकाशितं पूर्व्वं कुत्र किंवा कदा ननु ॥
पिबतोऽच्युतपीयूषं नमेऽद्यास्ति विरामता ॥ ४ ॥

श्रीमहादेव उवाच ।

श्रीबालकृष्णस्य सहस्रनाम्नः
स्तोत्रस्य कल्पाख्यसुरद्रुमस्य ।
व्यासो वदत्यखिलशास्त्रनिदेशकर्त्ता
शृण्वन् शुक मुनिगणेषु सर्षिवर्य्यः ॥ ५ ॥
पुरा महर्षयः सर्व्वे नारदं दण्डके वने ।
[1]जिज्ञासन्ति स्म भक्त्या च गोपालस्य परात्मनः ॥ ६ ॥

---

[1] जिज्ञासित सुभक्त्येति ५. P

नाम्नः सहस्रं परमं शृणु देवि समासतः ।
श्रुत्वा श्रीबालकृष्णस्य नाम्नः साहस्रकं प्रिये ॥ ७ ॥
व्यपैति सर्व्वपापानि ब्रह्महत्यादिकानि च ।
कलौ बालेश्वरो देवः कलौ वृन्दावनं वनं ॥ ८ ॥
कलौ गङ्गा मुक्तिदात्री कलौ गीता परागतिः ।
नास्ति यज्ञादिकार्य्याणि हरेर्नामैव केवलं ॥
कलौ विमुक्तये नृणां नास्त्येव गतिरन्यथा ॥ ९ ॥

अस्य श्रीबालकृष्णस्य सहस्रनामस्तोत्रस्य नारद ऋषिः श्रीबालकृष्णो देवता पुरुषार्थसिद्धये विनियोगः ॥

बालकृष्णः सुराधीशो भूतावासो व्रजेश्वरः ।
व्रजेन्द्रनन्दनो नन्दी व्रजाङ्गनविहारणः ॥ १० ॥
गोगोपगोपिकानन्दकारको भक्तिवर्द्धनः ।
गोवत्सपुच्छसंकर्षजातानन्दभरोऽजयः ॥ ११ ॥
रिङ्गमाणगतिः श्रीमानतिभक्तिप्रकाशनः ।
धूलिधूपरसर्व्वाङ्गो घटीपीतपरिच्छदः ॥ १२ ॥
पुरटाभरणः श्रीशो गतिर्गतिमतां सदा ।
योगीशो योगवन्द्यश्च योगाधीशो यशःप्रदः ॥ १३ ॥
यशोदानन्दनः कृष्णो गोवत्सपरिचारकः ।
गवेन्द्रश्च गवाशश्च [1]गवाध्यक्षो गवां पतिः ॥ १४ ॥

---

[1] परेति ग

गवेशश्च गवीशश्च गोचारणपरायणः ।
गोधूलिधामप्रियको गोधूलिच्छतभूषणः ॥ १५ ॥
गोरास्यो गोरसाशोगो गोरसाञ्चितधामकः ।
गोरसास्वादको वैद्यो वेदातीतो वसुप्रदः ॥ १६ ॥
विपुलांशो रिपुहरो विघ्नरो जयदो जयः ।
जगद्वन्द्यो जगन्नाथो जगदाराध्यपादकः ॥ १७ ॥
जगदीशो जगत्कर्त्ता जगत्पूज्यो [3]जयारिहा ।
जयतां जयशीलश्च जयातीतो जगद्बलः ॥ १८ ॥
जगद्धर्त्ता पालयिता पाता धाता महेश्वरः ।
राधिकानन्दनो राधाप्राणनाथो रसप्रदः ॥ १९ ॥
राधाभक्तिकरः शुद्धो राधाराध्यो रमाप्रियः ।
गोकुलानन्ददाता च गोकुलानन्दरूपधृक् ॥ २० ॥
गोकुलेश्वरकल्याणो गोकुलेश्वरनन्दनः ।
गोलोकाभिरतिः स्रग्वी गोलोकेश्वरनायकः ॥ २१
नित्यं गोलोकवसतिर्नित्यं गोगोपनन्दनः ।
गणेश्वरो गणाध्यक्षो गणानां परिपूरकः ॥ २२ ॥
गुणी गुणोत्करो गण्यो गुणातीतो गुणाकरः ।
गुणप्रियो गुणाधारो गुणाराध्यो गणाग्रणीः ॥ २३ ॥
गणनायको विघ्नहरो हेरम्बः पार्व्वतीसुतः ।
पर्व्वताधिनिवासी च गोवर्द्धनधरो गुरुः ॥ २४ ॥

---

[3] जयारिहेति P. S. R.

गोवर्द्धनपतिः शान्तो गोवर्द्धनविहारकः ।
गोवर्द्धनो गीतगतिर्गवाक्षो गोष्टपेक्षणः ॥ २५ ॥
गभस्तिर्नेमिर्गीतात्मा गीतगम्यो गतिप्रदः ।
गवामयो यज्ञनेमिर्यज्ञाङ्गो यज्ञरूपधृक् ॥ २६ ॥
यज्ञप्रियो यज्ञहर्त्ता यज्ञगम्यो यजुर्गतिः ।
यज्ञाङ्गो यज्ञगम्यश्च यज्ञप्राप्यो विमत्सरः ॥ २७ ॥
यज्ञान्तकृत् यज्ञगुह्यो यज्ञातीतो यजुःप्रियः ।
मनुर्मन्वादिरूपी च मन्वन्तरविहारकः ॥ २८ ॥
मनुप्रियो मनोर्वंशधारी *माधवमापतिः ।
मायाप्रियो महामायो मायातीतो मयात्मकः ॥ २९ ॥
मायाभिगामी मायाख्यो महामायावरप्रदः ।
महामायाप्रदो मायानन्दो मायेश्वरः कविः ॥ ३० ॥
कारणं कारणं कर्त्ता कार्य्यं कर्म क्रिया मतिः ।
कार्य्यातीतो गवां नाथो जगन्नाथो गुणाकरः ॥ ३१ ॥
विश्वरूपो विरूपाक्षो विद्यानन्दो वसुप्रदः ।
वासुदेवो वशिश्रेष्ठो वाणीशो वाक्पतिर्महः ॥ ३२ ॥
वसुदेवो वसुश्रेष्ठो देवकीनन्दनोऽरिहा ।
वसुपाता वसुपतिर्वसुधापरिपालकः ॥ ३३ ॥
कंसारिः कंसहन्ता च कंसाराध्यो गतिर्गवां ।
गोविन्दो गोमतां पालो गोपनारीजनाधिपः ॥ ३४ ॥

---

* मायारमापतिरिति समीचीनः पाठः ।

गोपीरतो रत्नखधारी हारी जगद्गुरुः ।
जानुजङ्घान्तरालश्च पीताम्बरधरो हरिः ॥ ३५ ॥
हैयङ्गवीनसम्भोक्ता पायसाशो गवां गुरुः ।
ब्रह्मण्यो ब्रह्मणाऽऽराध्यो नित्यं गोविप्रपालकः ॥ ३६ ॥
भक्तप्रियो भक्तलभ्यो [a]भक्त्यातीतो भुवाङ्गतिः ।
भूर्लोकपाता हर्त्ता च भूगोलपरिचिन्तकः ॥ ३७ ॥
नित्यं भूर्लोकवासी च जनलोकनिवासकः ।
तपोलोकनिवासी च वैकुण्ठो विष्टरश्रवाः ॥ ३८ ॥
विकुण्ठवासी वैकुण्ठवासी हासी रसप्रदः ।
रसिकागोपिकानन्ददायको बालधृग्वपुः ॥ ३९ ॥
यशस्वी यमुनातीरपुलिनेऽतीवमोहनः ।
वस्त्रहर्त्ता गोपिकानां मनोहारी वरप्रदः ॥ ४० ॥
दधिभक्षो दयाधारो दाता पाता हुताहुतः ।
मण्डपो मण्डलाधीशो राजराजेश्वरो विभुः ॥ ४१ ॥
विश्वधृक् विश्वभुक् विश्वपालको विश्वमोहनः ।
विहत्प्रियो वीतहव्यो हव्यगव्यकृताशनः ॥ ४२ ॥
कव्यभुक् पितृवर्त्ती च कव्यात्मा कव्यभोजनः ।
रामो विरामो रतिदो रतिभर्त्ता रतिप्रियः ॥ ४३ ॥
प्रद्युम्नोऽक्रूरदम्यश्च क्रूरात्मा क्रूरमर्द्दनः ।
कृपालुश्च दयालुश्च शयालुः सरितां पतिः ॥ ४४ ॥

---

[a] भक्त्या गीत इति समीचीनः पाठः ॥

नदीनदविधाता च नदीनदविहारकः ।
सिन्धुः सिन्धुप्रियो दान्तः शान्तः कान्तः कलानिधिः ॥४५॥
संन्यासक्तसतां भर्त्ता साधूच्छिष्टकृताशनः ।
साधुप्रियः साधुगम्यो साध्वाचारनिषेवकः ॥ ४६ ॥
जन्मकर्मफलत्यागी योगी भोगी खगीपतिः ।
मार्गातीतो योगमार्गो मार्गमाणो महोरविः ॥ ४७ ॥
रविलोचनो रवेरंशभागी द्वादशरूपधृक् ।
गोपालो बालगोपालो बालकानन्ददायकः ॥ ४८ ॥
बालकानां पतिः श्रीशो विरतिः सर्व्वपापिनां ।
श्रीलः श्रीमान् श्रीयुतश्च श्रीनिवासः श्रियः पतिः ॥४९॥
श्रीदः श्रीशः श्रियःकान्तो रमाकान्तो रमेश्वरः ।
श्रीकान्तो धरणीकान्त उमाकान्तप्रियः प्रभुः ॥ ५० ॥
दृष्टोऽभिलाषी वरदो वेदगम्यो दुराशयः ।
दुःखहर्त्ता दुःखनाशो भवदुःखनिवारकः ॥ ५१ ॥
यथेच्छाचारनिरतो यथेच्छाचारसुप्रियः ।
यथेच्छालाभसन्तुष्टो यथेच्छस्य मनोऽन्तरः ॥ ५२ ॥
नवीननीरदाभासो नीलाञ्जनचयप्रभः ।
नवदुर्द्दिममेघाभो नवमेघच्छविः क्वचित् ॥ ५३ ॥
स्वर्णवर्णो न्यासधारी द्विभुजो बहुबाहुकः ।
किरीटधारी मुकुटी मूर्त्तिपञ्जरसुन्दरः ॥ ५४ ॥
मनोरथपथातीतकारको भक्तवत्सलः ।
कन्यान्नभोक्ता कपिलो कपिशो गरुडात्मकः ॥ ५५ ॥

सुवर्णपर्णो हेमाभः पूतनान्तक इत्यपि ।
पूतनास्तनपाता च प्राणान्तकरणो रिपोः ॥ ५६ ॥
वत्सनाथो वत्सपालो वत्सेश्वरवसूत्तमः ।
हेमाभो हेमकण्ठश्च श्रीवत्सः श्रीमतां पतिः ॥ ५७ ॥
सनन्दनपथाराध्यो धातुर्धातुमतां पतिः ।
सनत्कुमारयोगात्मा सनकेश्वररूपधृक् ॥ ५८ ॥
सनातनपदो दाता नित्यञ्चैव सनातनः ।
भाण्डीरवनवासी च श्रीवृन्दावननायकः ॥ ५९ ॥
वृन्दावनेश्वरीपूज्यो वृन्दारण्यविहारकः ।
यमुनातीरगोधेनुपालको मेघमन्मथः ॥ ६० ॥
कन्दर्पदर्पहरणो मनोनयननन्दनः ।
बालकेलिप्रियः कान्तो बालक्रीडापरिच्छदः ॥ ६१ ॥
बालानां रक्षको बालः क्रीडाकौतुककारकः ।
बाल्यरूपधरो धन्वी धानुष्की शूलधृक् विभुः ॥ ६२ ॥
अमृतांशोऽमृतवपुः पीयूषपरिपालकः ।
पीयूषपायी पीरव्यानन्दनो नन्दिवर्द्धनः ॥ ६३ ॥
श्रीदामांशुकपाता च श्रीदामपरिभूषणः ।
वृन्दारण्यप्रियः कृष्णः किशोरः कान्तरूपधृक् ॥ ६४ ॥
कामराजः कलातीतो योगिनां परिचिन्तकः ।
हयेश्वरः कृपापालो गायत्रीगतिवल्लभः ॥ ६५ ॥
निर्वाणदायको मोक्षदायी वेदविभागकः ।
वेदव्यासप्रियो वैद्यो वैद्यानन्दप्रियः शुभः ॥ ६६ ॥

शुकदेवो गयानाथो गयासुरगतिप्रदः ।
विष्णुर्जिष्णुर्गरिष्ठश्च स्थविष्ठश्च स्थवीयसां ॥ ६७ ॥
वरिष्ठश्च यविष्ठश्च भूयिष्ठश्च भुवः पतिः ।
दुर्गतेर्नाशको दुर्गपालको दुष्टनाशकः ॥ ६८ ॥
कालीयसर्पदमनो यमुनानिर्मलोदकः ।
यमुनापुलिने रम्ये निर्मले पावनोदके ॥ ६९ ॥
वसन्तं बालगोपालरूपधारी गिरां पतिः ।
वाग्दाता वाक्प्रदो वाणीनाथो ब्राह्मणरक्षकः ॥ ७० ॥
ब्रह्मण्यो ब्रह्मकृद्ब्रह्म ब्रह्मकर्मप्रदायकः ।
ब्रह्मण्यदेवो ब्रह्मण्यदायको ब्राह्मणप्रियः ॥ ७१ ॥
स्वस्तिप्रियोऽस्वस्थधरोऽस्वस्थनाशो धियां पतिः ।
क्वणन्नूपुरधृग्विश्वरूपी विश्वेश्वरः शिवः ॥ ७२ ॥
शिवात्मको बाल्यवपुः शिवात्मा शिवरूपधृक् ।
सदाशिवप्रियो देवः शिववन्द्यो जगच्छिवः ॥ ७३ ॥
गोमध्यवासी गोवासी गोपगोपीमनोऽन्तरः ।
धर्मो धर्मधुरीणश्च धर्मरूपो धराधरः ॥ ७४ ॥
स्वोपार्जितयशाः कीर्त्तिवर्द्धनो नन्दिरूपकः ।
देवहूतिज्ञानदाता योगसाङ्ख्यनिवर्त्तकः ॥ ७५ ॥
तृणावर्त्तप्राणहारी शकटासुरभञ्जनः ।
प्रलम्बहारी रिपुहा तथा धेनुकमर्द्दनः ॥ ७६ ॥
अरिष्टनाशनोऽचिन्त्यः केशिहा केशिनाशनः ।
कद्रुहा कंसहा कंसनाशनो रिपुनाशनः ॥ ७७ ॥

यमुनाजलकल्लोलदर्शी हर्षी प्रियंवदः ।
स्वच्छन्दहारी यमुनाजलहारी सुरप्रियः ॥ ७८ ॥
लीलाधृतवपुः केलिकारको धरणीधरः ।
गोप्ता गरिष्ठो गतिदो गतिकारी गयेश्वरः ॥ ७९ ॥
शोभाप्रियः शुभकरो विपुलश्रीप्रतापनः ।
केशिदैत्यहरो दानी दाता धर्मार्थसाधनः ॥ ८० ॥
त्रिसामा त्रिककृत्सामः सर्व्वात्मा सर्व्वदीपनः ।
सर्व्वज्ञः सुगतो बुद्धो बौद्धरूपी जनार्द्दनः ॥ ८१ ॥
दैत्यारिः पुण्डरीकाक्षः पद्मनाभोऽच्युतोऽसितः ।
पद्माक्षः पद्मजाकान्तो गरुडासनविग्रहः ॥ ८२ ॥
गारुत्मतधरो धेनुपालकः सुप्तविग्रहः ।
आर्त्तिहा पापहानेहा भूतिहा भूतिवर्द्धनः ॥ ८३ ॥
वाञ्छाकल्पद्रुमः साक्षान्मेधावी गरुडध्वजः ।
नीलःश्वेतः सितः कृष्णो गौरः पीताम्बरच्छदः ॥ ८४ ॥
भक्तार्त्तिनाशनो गीर्णः शीर्णो जीर्णतनुच्छदः ।
वलिप्रियो वलिहरो वलिवन्धनतत्परः ॥ ८५ ॥
वामनो वामदेवश्च दैत्यारिः कञ्जलोचनः ।
उदीर्णः सर्व्वतो गोप्ता योगगम्यः पुरातनः ॥ ८६ ॥
नारायणो नरवपुः कृष्णार्जुनवपुर्धरः ।
त्रिनाभिस्त्रिवृतां सेव्यो युगातीतो युगात्मकः ॥ ८७ ॥
हंसो हंसी हंसवपुर्हंसरूपी कृपामयः ।
हरात्मको हरवपुर्हरभावनतत्परः ॥ ८८ ॥

धर्म्मरागो यमवपुस्त्रिपुरान्तकविग्रहः ।
युधिष्ठिरप्रियो राज्यदाता राजेन्द्रविग्रहः ॥ ८९ ॥
इन्द्रयज्ञहरो गोवर्द्धनधारी गिरां पतिः ।
यज्ञभुग्यज्ञकारी च हितकारी हितान्तकः ॥ ९० ॥
अक्रूरवन्द्यो विश्वभुगश्वहारी हयास्यकः ।
हयग्रीवः स्मितमुखो गोपीकान्तोऽरुणध्वजः ॥ ९१ ॥
निरस्तसाम्यातिशयः सर्व्वात्मा सर्व्वखण्डनः ।
गोपीप्रीतिकरो गोपीमनोहारी हरिर्हरिः ॥ ९२ ॥
लक्ष्मणो भरतो रामः शत्रुघ्नो नीलरूपकः ।
हनूमज्ज्ञानदाता च जानकीवल्लभो गिरिः ॥ ९३ ॥
गिरिरूपी गिरिमखो गिरियज्ञप्रवर्त्तकः ।
गिरेरङ्गधरो गोपगोपीगोतापनाशनः ॥ ९४ ॥
भवाब्धिपोतः शुभकृच्छुभभुक् शुभवर्द्धनः ।
वरारोहो हरिमुखो मण्डूकगतिलालसः ॥ ९५ ॥
नैचवद्धक्रियो गोपबालको बालको गुणः ।
गुणार्णवप्रियो भूतनाथो भूतात्मकश्च सः ॥ ९६ ॥
इन्द्रजिद्भयदाता च यजूषां पतिरप्पतिः ।
गीर्व्वाणवन्द्यो गीर्व्वाणगतिरिष्टोगुरुर्गतिः ॥ ९७ ॥
चतुर्मुखस्तुतिमुखो ब्रह्मनारदसेवितः ।
उमाकान्तधियाऽऽराध्यो गगनागुणसोमकः ॥ ९८ ॥
सीमान्तमार्गो गणिकागणमण्डलसेवितः ।
गोपीहृत्पद्ममधुपो गोपीहृन्मण्डलेश्वरः ॥ ९९ ॥

गोप्यालिङ्गनकृष्टापीहृदयानन्दकारकः ।
मयूरपुच्छशिखरः कङ्कणाङ्गदभूषणः ॥ १०० ॥
स्वर्णचम्पकसन्दोलः स्वर्णनूपुरभूषणः ।
स्वर्णताटङ्ककर्णश्च स्वर्णचम्पकभूषितः ॥ १०१ ॥
चूडाग्रार्पितरत्नेन्द्रसारः स्वर्णाम्बरच्छदः ।
आजानुबाहुः सुमुखो जगज्जननतत्परः ॥ १०२ ॥
बालक्रीडाऽतिचपलो भाण्डीरवननन्दनः ।
महाशालः श्रुतिमुखो गङ्गाचरणसेवनः ॥ १०३ ॥
गङ्गाम्बुपादः करजाकरतोयाजलेश्वरः ।
गण्डकीतीरसम्भूतो गण्डकीजलमर्द्दनः ॥ १०४ ॥
शालग्रामः शालरूपी शशिभूषणभूषणः ।
शशिपादः शशिनखो वरार्हो युवतीप्रियः ॥ १०५ ॥
प्रेमप्रदः प्रेमलभ्यो भक्त्यातीतो भवप्रदः ।
अनन्तशायी शवलच्छयनो योगिनीश्वरः ॥ १०६ ॥
पूतनाशकुनिप्राणहारको भवपालकः ।
सर्व्वलक्षणलक्षण्यो लक्ष्मीमान् लक्ष्मणाग्रजः ॥ १०७ ॥
सर्व्वान्तकृत् सर्व्वगुह्यः सर्व्वातीतोऽसुरान्तकः ।
प्रातराशनसम्पूर्णो धरणीरेणुगुण्ठितः ॥ १०८ ॥
इज्यो महेज्यः सर्व्वेज्य इज्यरूपीज्यभोजनः ।
ब्रह्मार्पणपरो नित्यं ब्रह्माग्निप्रीतिलालसः ॥ १०९ ॥
मदनो मदनाराध्यो मनोमथनरूपकः ।
नीलाञ्चिताकुञ्चितको बालवृन्दविभूषितः ॥ ११० ॥

स्तोकक्रीडापरो नित्यं स्तोकभोजनतत्परः।
ललिताविशाखाश्यामलतावन्दितपादकः॥ १११॥
श्रीमतीप्रियकारी च श्रीमत्या पादपूजितः।
श्रीसंसेवितपादाब्जो वेणुवाद्यविशारदः॥ ११२॥
शृङ्गवेचकरो नित्यं शृङ्गवाद्यप्रियः सदा।
बलरामानुजः श्रीमान् गजेन्द्रस्तुतपादकः॥ ११३॥
हलायुधः पीतवासा नीलाम्बरपरिच्छदः।
गजेन्द्रवक्त्रो हेरम्बो ललनाकुलपालकः॥ ११४॥
रासक्रीडाविनोदश्च गोपीनयनहारकः।
वलप्रदो वीतभयो भक्तार्त्तिपरिनाशनः॥ ११५॥
भक्तप्रियो भक्तिदाता दामोदर *इभस्पतिः।
इन्द्रदर्पहरोऽनन्तो नित्यानन्दश्चिदात्मकः॥ ११६॥
चैतन्यरूपश्चैतन्यश्चेतनागुणवर्ज्जितः।
अद्वैताचारनिपुणोऽद्वैतः परमनायकः॥ ११७॥
शिवभक्तिप्रदो भक्तो भक्तानामन्तराशयः।
विद्वत्तमो दुर्गतिहा पुण्यात्मा पुण्यपालकः॥ ११८॥
ज्येष्ठः श्रेष्ठः कनिष्ठश्च निष्ठोऽतिष्ठ उमापतिः।
सुरेन्द्रवन्द्यचरणो गोचहा गोचवर्ज्जितः॥ ११९॥
नारायणप्रियो नारशायी नारदसेवितः।
गोपालवालसंसेव्यः सदानिर्मलमानसः॥ १२०॥

---

* इडस्पतिरिति पा॰।

# BIBLIOTHECA INDICA;

## A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 75.



# THE NÁRADA PANCHARÁTRA.

EDITED

BY

REV. K. M BANERJEA.

Fasciculus IV.

---

CALCUTTA:

PRINTED AT BISHOP'S COLLEGE PRESS.

1865.

# BIBLIOTHECA INDICA;

COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL

# THE NÁRADA PANCHA RÁTRA

IN THE ORIGINAL SANSCRIT

EDITED

BY REV K M BANERJEA,

SECOND PROFESSOR OF BISHOP'S COLLEGE
MEMBER OF THE BOARD OF EXAMINERS FORT WILLIAM
HONORARY MEMBER OF THE ROYAL ASIATIC SOCIETY LONDON

---

श्रीनारद पञ्चरात्रं ॥

---

Calcutta:
BISHOP'S COLLEGE PRESS
1865

# INTRODUCTION

TO THE

## Narada Pancha Ratra.

---

THE *Nárada pancha rátra* is one of the oldest, if not the very first, specimen of Vaishnava literature in Sanscrit. The only work which can contest the palm of seniority with it is the Bhagavata Purana, commonly known by the name of the *Sri Bhágavata* Without stopping to decide this *contest*, we may safely declare that each has in its own way done much to recommend the Vaishnava doctrine to the Brahmins and give a turn, till then unknown, to the worship of Vishnu as the supreme ruler of the universe

Vishnu is a name not unknown to the Vedas His divinity is recognized in those ancient writings and he is even styled a great god But he was not considered supreme The word *parama* stands in some places as his predicate, but, as shown by Professor Max Muller, not in the sense of supreme

अग्नि वैं देवानामवमो विष्णु परमस्तदन्तरेण सर्वा अन्या देवता ।

" Agni is the *first* among the gods, Vishnu the *last*, between them stand the other divinities

The last, however, became in process of time, *not the least* in the devotional conceptions of the Hindus Three of the gods had from a remote period been selected as

leading divinities They represented the three *gunas*, or principles, which Hindu philosophers had at an early period hypothesized in order to explain the various phenomena of the universe The first of the three selected gods, Brahma, had the principle of *Rajas*, or passion, allotted to him His peculiar office was that of creation and required the exercise of *effort*, corresponding to the active principle of *Rajas* The second, Vishnu, was the preserver of the universe, and had the conservative principle of *Sattwa* as his distinguishing attribute The third, or Siva, was the destroyer, and fitly represented the principle of darkness, or *tamas*

Of the three select divinities, the first, however, had never become an object of especial adoration, having been guilty of an incestuous attempt on his own daughter The incident is thus accounted for in the work now presented to the public

"Hearing his father's (Brahmá's) words the Muni Nárada became angry He immediately cursed his father saying, Thou shalt be unadored in the world Thou shalt have no votaries Thou shalt be a prey to unlawful lusts"

Brahmá being thus incapacitated for receiving worship, the other two, Vishnu and Siva, have shared among themselves the adoration of the Hindus It would appear from certain legends recorded in the Itihásas and Puránas that Siva was the god of the aboriginal inhabitants of the country He was worshipped by Daityas and Rákshases who are represented as mortal enemies of the Aryas, or Brahmins and all their institutions It is not said that the Brahmins bore any hostility to Siva, but their enemies, the Daityas, whom I take to have been the aborigines of the country, were decidedly opposed to the

worship of Vishnu, held in reverence by the Brahmins Kansa, Hiranya Kasipu, Ravana, and other enemies of the Aryas were devout worshippers of Siva, but hostile to Vishnu And the description given of Siva as the Lord of the mountains the captain of goblins and spirits infesting woods and cemeteries, inclines us to the opinion that he was the god of the original inhabitants whom the Aryan invasion had driven to inaccessible forests and mountain cliffs We find it expressly said in the Vasistha smriti, cited by Prof Max Muller, that Vishnu was the god of the Brahmins—Soma, Surya and others those of Kshetriyas and Vaisyas—while Rudra or Siva was the god of the Sudras and others

नारायण पर ब्रह्म ब्राह्मणाना हि दैवत।
सोम सूर्यादयो देवा क्षत्रियाणा विशामपि॥
शूद्रादीना तु रुद्राद्या अर्चनीया प्रयत्नत ॥

Vishnu is represented as a god of civilization He did not like Siva soil his person with dust and ashes, he did not take vulgar delight in carrying about and exhibiting human bones and skulls he did not indulge in drinking solutions of intoxicating and deleterious drugs, he did not dance franticly at the head of impure goblins, bedecking himself with snakes and other emblems of savage life Vishnu on the contray clad himself in decent apparel and was the patron of the fine arts He was distinguished by a suavity of manners which betokened an improved state of society His conversation was polite His very vices were those of polished life Such is his character in Sastras of an age post Vedic indeed but preceding the still later times of the Nárada Pancha rátra and the Srí Bhagavata

The subsequent elevation of Vishṇu as supreme among gods was at the same time both a cause and an effect of the work now published. The work was itself called into existence by the craving felt by the Brahmins for some specific object of devotion, and it contributed largely in its turn to swell the number of Vishṇu's votaries among the Brahmins, whom the prevalence of Buddhism had taught a lesson not to be despised.

The age of the Nárada-pancha-rátra, produced a great change in the opinions of the Brahmins with reference to the worship of Vishnu. He was then held up as the supreme divinity in the form of Krishṇa. The worship of that divinity was considered sufficient in itself for the attainment of eternal felicity. It required no complement, and it admitted no supplement. This was a doctrine unknown to former ages A voice from heaven revealed it to Nárada:

आराधितो यदि हरिस्तपसा ततः किं
नाराधितो यदि हरिस्तपसा ततः किं।
अन्तर्वहिर्यदि हरिस्तपसा ततः किं
नान्तर्वहिर्यदि हरिस्तपसा ततः किं॥
विरम विरम ब्रह्मन् किं तपस्यासु वत्स
व्रज व्रज द्विज शीघ्रं शङ्करं ज्ञानसिन्धुं।
लभ लभ हरिभक्तिं वैष्णवोक्तां सुपक्वां
भवनिगडनिबन्धच्छेदनीं कर्त्तनीञ्च॥

"If Hari (that is to say Krishṇa) is propitiated what is the use of austerities? If Hari is not propitiated what is the use of austerities? If Hari is within and without, what is the use of austerities? If Hari is *not* within and without, what is the use of austerities? Desist, desist, O Brahmin,—what has thou O child to do with austere

devotions? Haste, haste, thou Brahmin to Sankara the ocean of knowledge Obtain perfect faith in Hari, as set forth by Vaishnava the same which divides and cuts asunder the chains of the world

It is remarkable that S'ankara, or Siva, should be impressed to inculcate the supremacy of his rival Vishnu, or Krishna, and thereby sign, seal, and sanction his own degradation The Brahmins knew that there could not be a more effectual method of enforcing the claims of their favourite god, than by the confession of the very divinity under whose banner their old enemies, the Rakshas and Daityas, had marshalled their powers against Vishnu and the rites and ceremonies of the Vedas The Brahminical stratagem has completely succeeded This assignment of divine supremacy to the principal incarnate forms of Vishnu has been respected all over India—and Siva has over since remained a sort of *pensioned* divinity, in full enjoyment of his former titles, acknowledged and worshipped by the Brahmins themselves, but unable to direct or stimulate the sanctimonious devotion of aspirants after transcendental excellencies

The Mahábharata relates a curious fact about the same Nárada, here represented as receiving a voice from heaven The divine sage had seen from the top of Mount Meru the Sweta dwipa,* or white continent, on the north side of the ocean of milk Nárada repaired to that fair land, and obtained a vision of Vishnu such as was never vouchsafed elsewhere—or to any but *ekántins*, or worshippers of one exclusive God, which the inhabitants of that white land were, and which was a peculiar characteristic of Nárada himself

* Mahabharat. XII. sections 337 341

would not allow the right of religious exercises to the S'údras, whose *caste-duty* was servility to the higher orders. The Vaishnavas, however, not only received them as brethren in the faith, but promoted them also to the dignity of spiritual guides and tutors, when any were found worthy of such dignity by reason of learning and zeal. That such spiritual enfranchisement of S'údras was a great innovation on the old system, will appear from a fact related in the Rámáyana. I give it in my own words from another work.

"After Ráma had returned home from his expedition to Lánka, and commenced a happy and prosperous reign in Oudh, a Brahmin came to his door, bitterly complaining of the untimely death of a child, only five years old, and attributing the tragical event to some curse under which the kingdom lay, owing to the king's want of watchfulness. Ráma, listened to the Brahmin's invectives with self reproach, and could not, with such a humiliating fact before him, gainsay the Brahmin's conclusion Advised by ministers and Rishis, he proceeded, sword in hand, to search out the unknown cause of the national sin. By the side of a tank he discovered a man absorbed in deep and austere devotion Challenged by the king, the devotee gave his name (Sambuca), and confessed his race (S'údra) For a servile man to seek admission to the society of gods by such religious exercises, was an iniquity, which sufficiently accounted for the national calamity With one stroke of his sword, the king severed the S'údra's head from his body Indra and the other gods fell into ecstacies of delight at the promptness with which the son of Dasaratha exterminated such a crying evil, and immediately sent down a perfumed shower of celestial flowers, acknowledging at the same time that the stop, so effectually put to the aspiring S'údra's attempt to obtain a [illegible] heaven, was a service done to themselves. And Ráma was then [illegible] from his neck,

It is for the reader to judge for himself whether the South Indians when they introduced such innovations in doctrine and practice had received no suggestion from their Christian neighbours on the Coromandel and Malabar coasts

मनुमन्त्रो मन्त्रपतिर्धाता धामविवर्ज्जितः ।
धराप्रदो धृतिगुणो योमीन्द्रः कल्पपादपः ॥ १२१ ॥
अचिन्त्यातिशयानन्दरूपी पाण्डवपूजितः ।
शिशुपालप्राणहारी दन्तवक्रनिसूदनः ॥ १२२ ॥
अनादिरादिपुरुषो गोत्री गोत्रविवर्ज्जितः ।
सर्व्वापत्तारकोदुर्गो दुष्टदैत्यकुलान्तकः ॥ १२३ ॥
निरन्तरःशुचिमुखो निकुम्भकुलदीपनः ।
[5]भानुर्धनूर्धनुःस्थाणुः कृशानुः कृतनुर्धनुः ॥ १२४ ॥
जनुर्जन्मादिरहितो जातिगोत्रविवर्जितः ।
दावानलनिहन्ता च दनुजारिर्वकापहा ॥ १२५ ॥
प्रह्लादभक्तो भक्तेष्टदाता दानवगोत्रहा ।
सुरभिर्दुग्धपो दुग्धहारी शौरिः शुचां हरिः ॥ १२६ ॥
यथेष्टदोऽतिसुलभः सर्व्वज्ञः सर्व्वतोमुखः ।
दैत्यारिः कैटभारिश्च कंसारिः सर्व्वतापनः ॥ १२७ ॥
द्विभुजः षड्भुजो द्व्यन्तर्भुजो मातलिसारथिः ।
शेषः शेषाधिनाथश्च शेषी शेपान्तविग्रहः ॥ १२८ ॥
केतुर्धरित्रीचारित्रश्चतुर्मूर्त्तिश्चतुर्गतिः ।
चतुर्द्धा चतुरात्मा च चतुर्व्वर्गप्रदायकः ॥ १२९ ॥
कन्दर्पदर्पहारी च नित्यः सर्व्वाङ्गसुन्दरः ।
शचीपतिपतिर्नेता दाता मोक्षगुरुर्द्विजः ॥ १३० ॥

---

[5] चयरिस्फुटमेतदुत्तरार्धं ।

हृतस्वनाथोऽनाथस्य नाथः श्रीगरुडासनः ।
श्रीधरः श्रीकरः श्रेयःपतिर्गतिरपां पतिः ॥ १३१ ॥
अशेषवन्द्यो गीतात्मा गीतागानपरायणः ।
गायत्रीधामशुभदो वेलामोदपरायणः ॥ १३२ ॥
धनाधिपः कुलपतिर्वसुदेवात्मजोऽरिहा ।
अजैकपात् सहस्राक्षो नित्यात्मा नित्यविग्रहः ॥ १३३ ॥
नित्यः सर्व्वगतः स्थाणुरजोऽग्निर्गिरिनायकः ।
गोनायकः शोकहन्ता कामारिः कामदीपनः ॥ १३४ ॥
विजितात्मा विधेयात्मा सोमात्मा सोमविग्रहः ।
ग्रहरूपी ग्रहाध्यक्षो ग्रहमर्द्दनकारकः ॥ १३५ ॥
वखानसः पुण्यजनो जगदादिर्जगत्पतिः ।
नीलेन्दीवरभो नीलवपुः कामाङ्गनाशनः ॥ १३६ ॥
कामबीजान्वितः स्थूलः कृशः कृशतनुर्निजः ।
नैगमेयोऽग्निपुत्रश्च षाण्मातुर उमापतिः ॥ १३७ ॥
मण्डूकवेशाध्यक्षश्च तथा नकुलनाशनः ।
सिंहो हरीन्द्रः केशीन्द्रहन्ता तापनिवारणः ॥ १३८ ॥
गिरीन्द्रजापादसेव्यः सदा निर्मलमानसः ।
सदाशिवप्रियो देवः शिवः सर्व्व उमापतिः ॥ १३९ ॥
शिवभक्तो गिरामादिः शिवाराध्यो जगद्गुरुः ।
शिवप्रियो नीलकण्ठः शितिकण्ठ उमापतिः ॥ १४० ॥
प्रद्युम्नपुत्रो निशठः शठः शठधनापहा ।
धूपप्रियो धूपदाता गुग्गुलवगुरुधूपितः ॥ १४१ ॥

नीलाम्बरः पीतवासा रक्तश्वेतपरिच्छदः ।
निशापतिर्दिवानाथो देवब्राह्मणपालकः ॥ १४२ ॥
उमाप्रियो योगिमनोहारी हारविभूषितः ।
खगेन्द्रवन्द्यपादाब्जः सेवातपपराङ्मुखः ॥ १४३ ॥
परार्थदोऽपरपतिः परात्परतरो गुरुः ।
सेवाप्रियो निर्गुणश्च सगुणः श्रुतिसुन्दरः ॥ १४४ ॥
देवाधिदेवो देवेशो देवपूज्यो दिवापतिः ।
दिवः पतिर्वृहद्भानुः सेवितेप्सितदायकः ॥ १४५ ॥
गौतमाश्रमवासी च गौतमस्त्रीनिषेवितः ।
रक्ताम्बरधरो दिव्यो देवीपादाब्जपूजितः ॥ १४६ ॥
सेवितार्थप्रदाता च सेवासेव्यगिरीन्द्रजः ।
धातुर्मनोविहारी च विधाता धातुरुत्तमः ॥ १४७ ॥
अज्ञानहन्ता ज्ञानेन्द्रवन्द्यो वन्द्यधनाधिपः ।
अपां पतिर्जलनिधिर्धरापतिरशेषकः ॥ १४८ ॥
देवेन्द्रवन्द्यो लोकात्मा त्रिलोकात्मा त्रिलोकपात् ।
गोपालदायको गन्धप्रदो गुह्यकसेवितः ॥ १४९ ॥
निर्गुणः पुरुषातीतः प्रकृतेः पर उज्ज्वलः ।
कार्त्तिकेयोऽमृताहर्त्ता नागारिर्नागहारकः ॥ १५० ॥
नागेन्द्रशायी धरणीपतिरादित्यरूपकः ।
यशस्वी विगताशी च कुरुक्षेत्राधिपः शशी ॥ १५१ ॥
शशकारिःशुभाचारो गीर्वाणगणसेवितः ।
गतिप्रदो नरसखःशीतलात्मा यशःपतिः ॥ १५२ ॥

विजितारिर्गणाध्यक्षो योगात्मा योगपालकः ।
देवेन्द्रसेव्यो देवेन्द्रपापहारी यशोधनः ॥ १५३ ॥
अकिञ्चनधनः श्रीमानमेयात्मा महाद्रिधृक् ।
महाप्रलयकारी च शचीसुतजयप्रदः ॥ १५४ ॥
जनेश्वरः सर्व्वविधिरूपी ब्राह्मणपालकः ।
सिंहासननिवासी च चेतनारहितः शिवः ॥ १५५ ॥
शिवप्रदो दक्षयज्ञहन्ता भृगुनिवारकः ।
वीरभद्रभयावर्त्तः कालः परमनिर्व्रणः ॥ १५६ ॥
उदूखलनिवद्धश्च शोकात्मा शोकनाशनः ।
आत्मयोनिः स्वयंजातो वैखानःपापहारकः ॥ १५७ ॥
कीर्त्तिप्रदः कीर्त्तिदाता गजेन्द्रभुजपूजितः ।
सर्व्वान्तरात्मा सर्व्वात्मा मोक्षरूपी निरायुधः ॥ १५८ ॥
उद्धवज्ञानदाता च यमलार्ज्जुनभञ्जनः ।
इत्येतत् कथितं देवि सहस्रं नाम चोत्तमं ॥ १५९ ॥
आदिदेवस्य वै विष्णोर्बालकत्वमुपेयुषः ।
यः पठेत् पाठयेद्वापि शृणुयात् श्रावयीत वा ॥ १६० ॥
किम्फलं लभते देवि वक्तुं नास्ति मम प्रिये ।
शक्तिर्गोपालनाम्नश्च सहस्रस्य महेश्वरि ॥ १६१ ॥
ब्रह्महत्यादिकानीह पापानि च महान्ति च ।
विलयं यान्ति देवेशि गोपालस्य प्रसादतः ॥ १६२ ॥
द्वादश्यां पौर्णमास्यां वा सप्तम्यां रविवासरे ।
पक्षद्वये च सम्प्राप्य हरिवासरमेव च ॥ १६३ ॥

यः पठेच्छृणुयाद्वापि न जनुस्तस्य विद्यते ।
सत्यं सत्यं महेशानि सत्यं सत्यं न संशयः ॥ १६४ ॥
एकादश्यां शुचिर्भूत्वा सेव्या भक्तिर्हरेः शुभा ।
श्रुत्वा नामसहस्राणि नरो मुच्येत पातकात् ॥ १६५ ॥
न शठाय प्रदातव्यं न धर्मध्वजिने पुनः ।
निन्दकाय च विप्राणां देवानां वैष्णवस्य च ॥ १६६ ॥
गुरुभक्तिविहीनाय शिवद्वेषरताय च ।
राधादुर्गाभेदमतौ सत्यं सत्यं न संशयः ॥ १६७ ॥
यदि निन्देन्महेशानि गुरुहा स भवेद्ध्रुवं ।
वैष्णवेषु च शान्तेषु नित्यं वैराग्यरागिषु ॥ १६८ ॥
ब्राह्मणाय विशुद्धाय सन्ध्यार्चनरताय च ।
अद्वैताचारनिरते शिवभक्तिरताय च ॥ १६९ ॥
गुरुवाक्यरतायैव नित्यं देयं महेश्वरि ।
गोपितं सर्व्वतन्त्रेषु तव स्नेहात् प्रकीर्त्तितं ॥ १७० ॥
नातःपरतरं स्तोत्रं नातःपरतरो मनुः ।
नातःपरतरो देवो युगेष्वपि चतुर्ष्वपि ॥ १७१ ॥
हरिभक्तेःपरा नास्ति मोक्षश्रेणी नगेन्द्रजे ।
वैष्णवेभ्यः परं नास्ति प्राणेभ्योऽपि प्रिया मम ॥ १७२ ॥
वैष्णवेषु च सङ्गो मे सदा भवतु सुन्दरि ।
यस्य वंशे क्वचिद्दैवात् वैष्णवो रागवर्ज्जितः ॥ १७३ ॥
भवेत्तद्वंशके ये ये पूर्व्वे स्युः पितरस्तथा ।
भवन्ति निर्मलास्ते हि यान्ति निर्व्वाणतां हरेः ॥ १७४ ॥

बहुना किमिहोक्तेन वैष्णवानान्तु दर्शनात् ।
निर्मलाः पापरहिताः पापिनः स्युर्न संशयः ॥ १७५ ॥
कलौ बालेश्वरो देवः कलौ गङ्गैव केवला ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥ १७६ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे चतुर्थरात्रे श्रीपालसहस्रनामस्तोत्र-मष्टमोऽध्यायः ॥ ८ ॥

---

नवमोऽध्यायः ॥

श्रीमहादेव उवाच ।

परिभाषामथो वक्ष्ये उपचारविधौ हरेः ।
द्रव्याणां यावती संख्या पात्राणां द्रव्यसङ्गतिः ॥ १ ॥
हाटकं राजतं ताम्रं मारकूटमृगादिना ।
उपचारविधावेतत् द्रव्यमाहुर्मनीषिणः ॥ २ ॥
आसने पञ्च पुष्पाणि स्वागते षट् चतुष्पलं ।
जलं श्यामाकदूर्व्वाब्जविष्णुक्रान्ताभिरीरितं ॥ ३ ॥
पाद्ये चार्घ्ये जलं तावद्गन्धपुष्पाक्षतान्वितं ।
दूर्व्वास्तिलाक्षतञ्चैव कुशाग्रश्वेतसर्षपाः ॥ ४ ॥
जातीफलं लवङ्गञ्च कक्कोलं तोयषट्पलं ।
प्रोक्तमाचमनं कांस्ये मधुपर्कं घृतं मधु ॥ ५ ॥
दध्ना सह पलैकन्तु शुद्धं वारि तथाचमे ।
परिमाणन्तु पञ्चाशत् पलं वा शुद्धमम्भसः ॥ ६ ॥

निर्म्मलेनोदकेनाथ सर्व्वंच परिपूर्णता ।
सलिलं गर्हितं सर्व्वं त्यजेत् पूजाविधौ हरेः ॥ ७ ॥
वितस्तिमात्रादधिकं मूलं[1] ।
स्वर्णाद्याभरणान्येव मुक्तारत्नयुतानि च ॥ ८ ॥
चन्दनागुरुकर्पूरपङ्कगन्धपलावधि ।
नानाविधानि पुष्पाणि पञ्चाशदधिकानि च ॥ ९ ॥
कांस्यादिनिर्मिते पात्रे धूपगुग्गुलुकर्मभाक् ।
यावद्गन्धं भवेत् पुंसस्तावद्दद्याज्जनार्द्दने ॥ १० ॥
नैवेद्यं यत्तु भक्ष्यञ्च तद्रादिकचतुर्विधं ।
कर्पूरादियुतार्त्तिः सा च कार्पासनिर्मिता ॥ ११ ॥
सप्तायच्छ्या सुसंजाता दीपः स्यात्त्रितरङ्गुलः ।
शिलापिष्टं चन्दनाद्यां सप्तधा वर्णयेन्नरः ॥ १२ ॥
कार्य्या ताम्रादिपात्रे तत् प्रीतये हरिमेधसः ।
दूर्व्वाचतप्रमाणन्तु विज्ञेयन्तु शताधिकं ॥ १३ ॥
तत्त्वतोऽयं विधिः प्रोक्तो विभवे सति सर्व्वदा ।
एषामभावे सर्व्वेषां यथा शक्त्याभिपूजयेत् ॥
सर्व्वभोगान्वितो भूत्वा व्रजेदन्ते हरेः पुरं ॥ १४ ॥

इति श्रीनारदपञ्चरात्रे चतुर्थरात्रे पूजात्रयविधान नवमोऽध्यायः । ९ ॥

---

[1] सर्व्वत्रैव पाठः प्रमादपरम्परापतितः परन्तु मूलमर्घ्यस्य चचकमिति भवितुमर्हति ।

दशमोऽध्यायः ॥



श्रीमहादेव उवाच ॥

यस्य दर्शनमिच्छन्ति देवा ब्रह्महरादयः ।
कृपया देवदेवेश मदग्रे सन्निधीभव ॥ १ ॥
तस्य ते परमेशान स्वागतं स्वागतं प्रभो ।
कृतार्थोऽनुगृहीतोऽस्मि सफलं जीवितं मम ॥ २ ॥
यदागतोऽसि देवेश चिदानन्दमयाव्यय ।
अज्ञानाद्वा प्रमादाद्वा वैकल्यात् साधनस्य च ॥
यदपूर्णं भवेत् कृत्यं तथाप्यभिमुखो भव ॥ ३ ॥

इत्यावाहनं ।

यद्भक्तिलेशसम्पर्कात् परमानन्दसम्भव ।
तस्मै ते परमेशाय पाद्यं शुद्धाय कल्पये ॥ ४ ॥

इति पाद्यं ।

देवानामपि देवाय देवानां देवतात्मने ।
आचामं कल्पयामीश चात्मनां शुद्धिहेतवे ॥ ५ ॥

इत्याचमनीयं ।

तापत्रयहरं दिव्यं परमानन्दसम्भवं ।
तापत्रयविमोचाय तवार्घ्यं कल्पयाम्यहं ॥ ६ ॥

इत्यर्घ्यं ।

सर्व्वकल्मषहीनाय परिपूर्णसुखात्मने ।
मधुपर्कमिदं देव कल्पयामि प्रसीद मे ॥ ७ ॥

इति मधुपर्कः ।

उच्छिष्टोऽप्यशुचिर्वापि यस्य स्मरणमात्रतः ।
शुद्धिमाप्नोति तस्मै ते पुनराचमनीयकं ॥ ८ ॥

इति पुनराचमनीयं

परमानन्दबोधाय निमग्ननिजमूर्त्तये ।
साङ्गोपाङ्गमिदं स्नानं कल्पयाम्यहमीश ते ॥ ९

इति स्नानीय ।

मायाचित्रपटाच्छन्ननिजगुह्योरुतेजसे ।
निरावरणविज्ञाय वासस्ते कल्पयाम्यहं ॥ १० ॥

इति वस्त्र ।

यमाश्रित्य महामाया जगत्संमोहनी सदा ।
तस्मै ते परमेशाय कल्पयाम्युत्तरीयकं ॥ ११ ॥

इत्युत्तरीय ।

यस्य शक्तित्रयेणेदं सम्प्रोतमखिलं जगत् ।
यज्ञसूत्राय तस्मै ते यज्ञसूत्रं प्रकल्पये ॥ १२ ॥

इति यज्ञोपवीत ।

स्वभावसुन्दराङ्गाय नानाशक्त्याश्रयाय ते ।
भूषणानि विचित्राणि कल्पयामि सुरार्च्चित ॥ १३ ॥

इति भूषणानि ।

समस्तदेवदेवेश सर्व्वतृप्तिकरं परं।
अखण्डानन्दसम्पूर्णं गृहाण जलमुत्तमं ॥ १४ ॥

इति जल।

परमानन्दसौरभ्यपरिपूर्णदिगन्तरं।
गृहाण परमं गन्धं कृपया परमेश्वर ॥ १५ ॥

इति गन्ध।

तुरीयवनसम्भूत नानागुणमनोहरं।
सुमन्दसौरभं पुष्पं गृह्यतामिदमुत्तमं ॥ १६ ॥

इति पुष्प।

वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः।
आघ्रेयः सर्व्वदेवानां धूपोऽयं प्रतिगृह्यतां ॥ १७ ॥

इति धूप ॥

सुप्रकाशो महादीपः सर्व्वतस्तिमिरापहः।
सवाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यतां ॥ १८ ॥

इति दीपः।

सत्पात्रसिद्धं सुभगं विविधानेकभक्षणं।
निवेदयामि देवेश सानुगाय गृहाण तत् ॥ १९ ॥

इति नैवेद्य।

ततो अर्घ 'समस्तदेवदेवेश' इत्यादिना।

पूजा च पञ्चधा प्रोक्ता तासां भेदान् शृणुष्व मे।
अभिगमनमुपादानं योगः स्वाध्याय एव च।
इज्या पञ्चप्रकारार्चा क्रमेण कथयामि ते ॥ २० ॥

ततोऽभिगमनं नाम देवतास्थानमार्जनं ।
उपलेपननिर्म्माल्यदूरीकरणमेव च ॥ २१ ॥
उपादानं नाम गन्धपुष्पादिचयनन्तथा ।
योगो नाम स्वदेवस्य स्वात्मत्वेनैव भावना ॥ २२ ॥
स्वाध्यायो नाम मन्त्रार्थसन्धानपूर्व्वको जपः ।
सूक्तस्तोत्रादिपाठस्तु हरिसंकीर्त्तनन्तथा ॥ २३ ॥
तत्त्वादिशास्त्राद्यभ्यासः स्वाध्यायःपरिकीर्त्तितः ।
इज्या नाम स्वदेवस्य पूजनन्तु यथार्थतः ॥ २४ ॥
इति पञ्चप्रकारार्च्चा कथिता तव सुव्रते ।
सार्ष्टिसामीप्यसालोक्यसायुज्यसारूप्यदा क्रमात् ॥ २५ ॥

इति श्रीनारदपञ्चरात्रे चतुर्थरात्रे पञ्चप्रकारार्चाविधिर्दशमोऽध्यायः ॥१०॥

---

एकादशोऽध्यायः ।

श्रीशिव उवाच ।

अथ द्वादशसंशुद्धिर्वैष्णवानामिहोच्यते ।
गृहोपसर्पणञ्चैव तथानुगमनं हरेः ॥ १ ॥
भक्तिप्रदक्षिणञ्चैव पादयोः शोधनं पुनः ।
पूजार्थं पत्रपुष्पाणां भक्त्यैवोत्तोलनं हरेः ॥ २ ॥
करयोःसर्व्वशुद्धीनामियं शुद्धिर्विशिष्यते ।
तन्नामकीर्त्तनञ्चैव गुणानामपि कीर्त्तनं ॥ ३ ॥

भक्त्या श्रीकृष्णदेवस्य वचसः शुद्धिरिष्यते ।
तत्कथाश्रवणञ्चैव तस्योत्सवनिरीक्षणं ॥ ४ ॥
श्रोत्रयोर्नेत्रयोश्चैव शुद्धिः सम्यगिहोच्यते ।
पादोदकस्य निर्म्माल्यमालानामपि धारणं ॥ ५ ॥
उच्यते शिरसः शुद्धिः प्रणतस्य हरेः पुनः ।
आघ्राणं गन्धपुष्पादेर्निर्म्माल्यस्य तपोधन ॥ ६ ॥
विशुद्धिः स्यादनन्तस्य घ्राणस्यापि विधीयते ।
पत्रं पुष्पादिकं यच्च कृष्णपादयुगार्पितं ॥ ७ ॥
तदेकं पावनं लोके तद्धि सर्व्वं विशोधयेत् ।
ललाटे च गदा कार्य्या मूर्ध्नि चापं शरांस्तथा ॥ ८ ॥
नन्दकञ्चैव हृन्मध्ये शङ्खं चक्रं भुजद्वये ।
शङ्खचक्रान्वितो विप्रः श्मशाने म्रियते यदि ॥ ९ ॥
प्रयागे या गतिः प्रोक्ता सा गतिस्तस्य गोतम ।
यानैर्व्वा पादुकाभिर्व्वा यानं भगवतो गृहे ॥ १० ॥
देवोत्सवेष्वासवी च अप्रणामो मदग्रतः ।
उच्छिष्टे चैव वाऽशौचे भगवद्वन्दनादिकं ॥ ११ ॥
एकहस्तप्रणामश्च तत्पुरस्तात् प्रदक्षिणं ।
पादप्रसारणञ्चैव तथा पर्य्यङ्कबन्धनं ॥ १२ ॥
शयनं भक्षणञ्चापि मिथ्याभाषणमेव च ।
उच्चैर्भाषो मिथो वैरं रोदनानि च विग्रहः ॥ १३ ॥
निग्रहानुग्रहश्चैव स्त्रीषु च क्रूरभाषणं ।
कम्बलावरणञ्चैव परनिन्दा परस्तुतिः ॥ १४ ॥

अश्लीलभाषणञ्चैव अधोवायुविमोक्षणं ।
शक्तौ गौणोपचारश्च अनिवेदितभक्षणं ॥ १५ ॥
तत्तत्कालभवानाञ्च फलादीनामनर्पणं ।
विनियुक्तावशिष्टस्य प्रदानं व्यञ्जनस्य च ॥ १६ ॥
पृष्ठीकृत्वासनञ्चैव परनिन्दा परस्तुतिः ।
गुरौ मौनं निजस्तोत्रं देवतानिन्दनन्तथा ॥
अपराधास्तथा विष्णोर्द्वात्रिंशत् परिकीर्त्तिताः ॥ १७ ॥
सालग्रामशिलातोयं न पीत्वा यस्तु मस्तके ।
प्रक्षेपणं प्रकुर्व्वीत ब्रह्महा स निगद्यते ॥ १८ ॥
विष्णोः पादोदकं पीतं कोटिजन्माघनाशनं ।
तदेवाष्टगुणं पापं भूमौ विन्दुनिपातनात् ॥ १९ ॥

धारणमप्युक्तं ।

अकालमृत्युहरणं सर्व्वव्याधिविनाशनं ।
विष्णोः पादोदकं पुण्यं शिरसा धारयाम्यहं ॥ २०॥
हत्यां हन्ति तदङ्घ्रिजापि तुलसी स्तेयञ्च तोयं पदे ।
नैवेद्यं बहु अन्नपानजनितं गुर्व्वङ्गनासङ्गजं ॥ २१ ॥
श्रीशाधीनमतिःस्थितिर्हरिजनैस्तत्सङ्गजं किल्बिषं ।
सालग्रामशिलार्चनस्य महिमा कोऽप्येष लोकोत्तरः॥२२॥
केशवाग्रे नृत्यगीतं यःकरोति कलौ नरः ।
पदे पदेऽश्वमेधस्य फलमाप्नोति नित्यशः ॥ २३ ॥

वाशिष्ठे ।

केशवाग्रे नृत्यगीतं न करोति हरेर्दिने।
वह्निना किं न दग्धोऽसौ गतः किं न रसातलं ॥ २४

नारदीये।

स्मरणं कीर्त्तनं विष्णोःकलौ मन्त्रजपादिषु।
दानन्तु प्रीतये तस्य नान्यथा गतिरिष्यते॥ २५ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे चतुर्थरात्रे द्वादशमहिरेखा-
दशोऽध्यायः समाप्तश्चाय चतुर्थरात्रः ॥ ११ ॥

५ रात्रं ॥

---

प्रथमोऽध्यायः ॥

---

श्रीमहादेव उवाच ।

अथोच्यन्ते पुनर्मन्त्राः शृणुष्वैकमनाः प्रिये ।
येषां विज्ञानमात्रेण नरो भक्तत्वमाव्रजेत् ॥ १ ॥
येषां तन्त्रादिशास्त्राणां विचारो नैव हि क्वचित् ।
करोत्यशेषतो देवि भक्तिमुक्तिप्रदो नृणां ॥ २ ॥
उपदेशविधिं वक्ष्ये श्रीकृष्णस्य कलौ यथा ।
दद्यान्मन्त्रं गुरुः स्वच्छः शिष्यं भक्तिसमन्वितं ॥ ३ ॥
उपोष्यैकदिनं पूर्वं यद्वा भुक्त्वा हविष्यकं ।
स्नात्वा तु निर्मले तोये पूर्वास्यः सुस्थमानसः ॥ ४ ॥
शिष्यश्चोदङ्मुखस्थश्च हरेर्नामस्तु षोडश ।
स श्राव्यैव ततो दद्यान्मन्त्रं त्रैलोक्यमङ्गलं ॥ ५ ॥
ततो गुरुः स्वयं देवं सम्पूज्य विधिवद्धुनेत् ।
वैष्णवोक्तविधानेन स्थण्डिले संस्कृतेऽपि च ॥ ६ ॥
ततस्तु दक्षिणा देया शिष्येण गुरवे यथा ।
सामर्थ्येन स्वशक्त्या तु वित्तशाठ्यविवर्जितः ॥ ७ ॥

अथोच्यन्ते महामन्त्राः कृष्णस्य बालरूपिणः ।
नाम्नः सहस्रं शतकं कवचञ्च सुरेश्वरि ॥ ८ ॥

श्रीकृष्णाय नमः ॥

अष्टादशार्णो मारान्तो मनुः सुतधनप्रदः ।
कृष्णाद्यष्टादशार्णोक्तं मारूढस्वरैः क्रमात् ।
अङ्गान्यस्य मनोरङ्गदिक्पालास्त्रैः समर्चना ॥ ९ ॥
पाणौ पायसपक्कमाहितरसं बिभ्रन्मुदा दक्षिणे ।
सव्ये शारदचन्द्रमण्डलनिभं हैयङ्गवीनं दधत् ॥ १० ॥
कण्ठे कल्पितपुण्डरीकनखवद्दाम प्रदीप्तं वहन् ।
देवो दिव्यदिगम्बरो दिशतु नः सौख्यं यशोदासुतः॥ ११ ॥
दिनशोऽभ्यर्च्य गोविन्दं द्वात्रिंशल्लक्षमानतः ।
जप्त्वा दशांशं जुहुयात् सिताक्तेन पयोन्धसा[1] ॥ १२ ॥
पद्मस्थं देवमभ्यर्च्य तर्पयेत्तन्मुखाम्बुजे।
क्षीरेण कदलीपक्कैर्दध्ना हैयङ्गवेन च ॥ १३ ॥
सुतार्थी तर्पयेद्देवं वत्सराल्लभते सुतं ।
यद्यदिच्छति तत्सर्वं तर्पणादेव सिद्ध्यति ॥ १४ ॥
तारं हृद्भगवान् ङेऽन्तो नन्दपुत्रपदं तथा ।
नन्दान्ते वपुषे हस्ताग्निमयोऽन्ते दशार्णकः ॥ १५ ॥
अष्टाविंशत्यक्षरोऽयं ब्रवेद्द्वात्रिंशदक्षरं ।
नन्दपुत्रपदं ङेऽन्तं श्यामलाङ्गपदन्तथा ॥ १६ ॥

---

[1] सिताक्तेन पयोऽम्बुभिरिति पुस्तकान्तरे पाठः ॥

तथा बालवपुः कृष्णो गोविन्दो दशवर्णकः ।
अनयोर्नारद ऋषिश्छन्दस्तूष्णीगनुष्टुभौ ॥ १७ ॥
आचक्राद्यैरङ्गसंस्थैर्दिक्पालास्त्रैः प्रपूजन ।
दक्षिणे रत्नचषकं वामे सौवर्णवेचक ॥ १८ ॥
करे दधानं देवीभ्यामाश्लिष्टं चिन्तयेद्धरिं ।
अपेक्षचं मनुवरो पायसैरयुतं हुनेत् ॥ १९ ॥
एवं सिद्धमनुर्मन्त्री त्रैलोक्यैश्वर्य्यभाग्भवेत् ।
ताराद्रिर्भगवान् ङेऽन्तो रुक्मिणीवल्लभस्तथा ॥ २० ॥
शिरोऽन्तः षोडशार्णोऽयं रुक्मिणीवल्लभाह्वयः ।
सर्व्वसाक्षात्प्रदो मन्त्रो नारदोऽस्य मुनिः स्मृतः ॥ २१ ॥
छन्दोऽनुष्टुब्देवता च रुक्मिणीवल्लभो हरिः ।
एकदृग्वेदमुनिदृग्वर्णैरस्याङ्गकल्पना ॥ २२ ॥
तापिञ्छच्छविरङ्कगां प्रियतमां स्वर्णप्रभामम्बुज-
प्रोद्यद्वामभुजां स्ववाहुलतयाऽऽश्लिष्यन्स चिन्ताश्मयः ।
श्लिष्यन्तीं स्मयमानहस्तविलसत्सौवर्णवेचश्चिरं
पायाद्वः प्रणसूनपीतवसनो नानाविभूषो हरिः ॥२३॥
ध्यात्वैवं रुक्मिणीनाथं जप्याल्लक्षमिमं मनुं ।
अयुतं जुहुयात् पद्मैररुणैर्मधुराप्लुतैः ॥ २४ ॥
अर्चयेन्नित्यमङ्गैस्तं नारदाद्यैर्हरिशोऽधिपैः ।
वज्राद्यैरपि धर्मार्थकाममोक्षाप्तये नरः ॥ २५ ॥
लीलादण्डधरो गोपीजनसंसक्तदोःपदं ।
दण्डान्ते बालरूपेति मेघश्यामपदन्ततः ॥ २६ ॥

भगवन् विष्णुरित्युक्तो वह्निजायान्तको मनुः ।
एकोनविंशदर्णोऽस्य मुनिर्नारद ईरितः ॥ २७ ॥
छन्दोऽनुष्टुब्देवता च लीलादण्डहरिर्मतः ।
मुन्यब्धिकरणाङ्गाब्धिवर्णैरङ्गक्रिया मता ॥ २८ ॥

सम्मोहयन्निजकरा मकरस्थलीला
दण्डेन गोपयुवतीः सुरसुन्दरीश्च ।
दिश्यान्निजप्रियतमासगदक्षहस्तो
देवः श्रियं निहतकंस उरुक्रमो वः ॥ २९ ॥

ध्यात्वैवं प्रजपेल्लक्षं अयुत सिततण्डुलैः ।
त्रिमध्वक्तैर्हुनेदङ्ग दिक्पालास्त्रैः समर्चयेत् ॥ ३० ॥
लीलादण्डहरिं यो वै भजते नित्यमादरात् ।
स पूज्यते सर्वलोकैस्तं भजेदिन्दिरा सदा ॥ ३१ ॥
पयोदशस्वरयुतः शार्ङ्गी मोदः स केशवः ।
तथा मां सयुगस्तारः शिवः ससाद्यरोऽपरः ॥ ३२ ॥
आर्चकाद्यैरङ्गकॢप्तिर्नारदोऽस्य मुनिः स्मृतः ।
छन्द उष्णिग्देवता च गोवल्लभ उदाहृतः ॥ ३३ ॥

ध्येयोऽच्युतः स कपिलागणमध्यसंस्थो
य आह्वयन् दधि दक्षिणदोष्णि वेणुं ।
पाशं सयष्टि सघनपयोदनीलः ।
पीताम्बरोऽहिरिपुपिच्छकृतावतंसः ॥ ३४ ॥

मनुं लक्षं जपेदेतं हुनेत् सप्तसहस्रकं ।
गोक्षीरेरङ्गदिक्पालमध्येऽर्च्यं गोगणान्तकं ॥ ३५ ॥

अष्टोत्तरसहस्रं यः पयोभिर्द्दिनशो हुनेत् ।
पतङ्गयोगवैराख्यो दशार्णेनैव वा विधिः ॥ ३६ ॥
स नरो वासुदेवो हि न भेदस्तस्य भगवता ।
श्रीगोविन्दपदं तद्वद्दशार्णोऽयमीरितः ॥ ३७ ॥
मनुर्नारदगायत्रीकृष्णाद्यादिरथाङ्गकं ।
एकादिवेदभूतार्णैः समस्तैरपि कल्पयेत् ॥ ३८ ॥
वन्दे कल्पद्रुममूलाश्रितमणिमयसिंहासने सन्निविष्टं
नीलाभं पीतवस्त्रं करकमलतसच्छङ्खवेणुं मुरारिं ।
गोभिः सप्रस्रवाभिर्वृतममरपतिप्रौढहस्तस्थकुम्भ-
प्रश्च्योतत्सौधधारास्नपितमभिनवाम्भोजपत्राभनेत्र ॥३९॥
ध्यात्वैवमच्युतं जप्त्वा रविलक्षं हुनेत्ततः ।
दुग्धैर्दादशसाहस्रं दिनशोऽमुं समर्च्चयेत् ॥ ४० ॥
गोष्ठे प्रतिष्ठितं वापि गेहे वा प्रतिमादिषु ।
समस्तपरिवाराश्चान्ताः पुनर्व्विष्णुपार्षदाः ॥ ४१ ॥
द्वाराग्रेऽवनिपीठेऽर्च्याः पक्षीन्द्रश्च तदग्रतः ।
चण्डप्रचण्डौ प्राग्धोडविधातारौ च दक्षिणे ॥ ४२ ॥
जयः सविजयः पश्चाद्बलप्रबल उत्तरे ।
ऊर्द्धं द्वारि श्रियं श्रेष्ठान् द्वार्य्यतान् युग्मशोऽर्चयेत् ॥ ४३ ॥
पूज्यो वास्तुपुमांस्तत्र तत्र द्वाःपीठमध्यतः ।
द्वारान्तपार्श्वयोरर्च्यां गङ्गा च यमुना नदी ॥ ४४ ॥
कोणेषु विघ्नं दुर्गाञ्च वाणीं क्षेत्रेशमर्चयेत् ।
अर्च्चयेद्वास्तुपुरुषं वेश्ममध्ये समाहितः ॥ ४५ ॥

तारं शार्ङ्गपद ङेऽन्तं सपर्व्वञ्च शरासनं ।
हूं फट् नम उक्त्वाऽस्त्रमुद्रयाऽग्रे स्थितो हरेः ॥ ४६ ॥
पुष्पाचत क्षिपेद्दिक्षु समासीतासने ततः ।
विधेयमेतत्सर्व्वञ्च स्थापिते तु विशेषतः ॥ ४७ ॥
आत्मार्च्चनान्तं कृत्वाथ गुरुपङ्क्तिं पुरोक्तवत् ।
श्रीगुरुं परमाद्यांश्च महाक्षत्सर्व्वपूर्व्वकान् ॥ ४८ ॥
तत्पादुकान्नारदादीन् पूर्व्वसिद्धाननन्तर ।
ततो भगवतश्चेष्टा विप्रग्रान् दक्षिणेऽर्चयेत् ॥ ४९ ॥
पूर्व्ववत् पीठमभ्यर्च्य श्रीगोविन्दमथार्चयेत् ।
रुक्मिणीं सत्यभामाञ्च पार्श्वयोरिन्द्रमग्रतः ॥ ५० ॥
पृष्ठत सुरभिश्चेष्टा केशरेष्वङ्गदेवताः ।
अर्च्या हृदादिवर्मान्त दिक्ष्वस्त्र कोणकेषु च ॥ ५१ ॥
कालिन्दी रोहिणी नाग्नजित्याद्या. षट्कमन्त्रयः ।
दलेषु पीठकोणेषु बभ्रुराशर्व्वाथ किङ्किणी ॥ ५२ ॥
दामाञ्च यष्टयो वेश्म पुर श्रीवत्सकौस्तुभौ ।
अग्रतो वनमालाञ्च दिक्ष्वष्टासु ततोऽर्चयेत् ॥ ५३ ॥
पाञ्चजन्यं गदाञ्चक्र वसुदेवञ्च देवकीं ।
नन्दगोप यशोदाञ्च सगोगोपालगोपिकाः ॥ ५४ ॥
इन्द्राद्या देवता सर्व्वा विश्वक्सेनन्तथोत्तरे ।
कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामन ॥ ५५ ॥
शङ्कुकर्णः सर्व्वनेत्रः सुमुखः सुप्रतिष्ठितः ।
एककाल द्विकाल वा त्रिकालं वेति गोविन्दं ॥ ५६ ॥

श्रीगोविन्दं यजेन्नित्यं गोधनं यवसः प्रदं ।
दीर्घजीवी निरातङ्को धेनुधान्यधनादिभिः ॥ ५७ ॥
पुत्रैर्मित्रैर्धनाढ्योऽन्ते प्रयाति परमां गतिं ।
उद्धृदन्तयुतः शार्ङ्गी चक्री दक्षिणकर्णयुक् ॥ ५८ ॥
मां सनायाय नत्यन्तो मूलमन्त्रोऽष्टवर्णकः ।
ऋषिर्ब्रह्मास्य गायत्री छन्दः कृष्णस्तु देवता ॥
वर्णयुग्मैः समस्तेन प्रोक्तं स्यादङ्गपञ्चकं ॥ ५९ ॥

पञ्चवर्षमतिदृप्तमङ्गने
धावमानमतिचञ्चलेक्षणं ।
किङ्किणीवलयहारनूपुरै-
रञ्जितं नमत गोपबालकं ॥ ६० ॥

ध्यात्वैवं प्रजपेदष्टलक्षं तावत् सहस्रकं ।
जुहुयाद्ब्रह्मवृक्षोत्थसमिद्भिः पायसेन वा ॥ ६१ ॥
प्रासादस्थापितं कृष्णममुना नित्यमर्चयेत् ।
द्वारपूजादि पीठान्तं कुर्य्यात् पूर्व्वोक्तमार्गतः ॥ ६२ ॥
मध्येऽर्चयेद्धरिं दिक्षु विदिक्ष्वङ्गानि च क्रमात् ।
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ॥ ६३ ॥
रुक्मिणी सत्यभामा च लक्ष्मणा जाम्बवत्यपि ।
दिग्विदिक्ष्वर्चयेदेता इन्द्रवज्रादिकान् बहिः ॥ ६४ ॥
योऽमुं मनुं जपेन्नित्य विधिनाभ्यर्चयन् हरिं ।
सर्व्वसम्पत्समायुक्तो नित्यं शुद्धं पदं व्रजेत् ॥ ६५ ॥
तारश्रीशक्तिमारान्ते श्रीकृष्णाय पदं वदेत् ।

श्रीगोविन्दाय तस्योर्द्धं श्रीगोपीजन इत्यपि ॥ ६६ ॥
वल्लभाय ततस्त्रिः श्रीःसिद्धगोपालको मनुः ।
माधवीमण्डपासीनो गरुडेनातिपालितौ ॥ ६७ ॥
दिव्यक्रीडासु निरतौ रामकृष्णौ स्मरन् जपेत् ।
चक्री वस्वक्षरयुतः स ह्येकार्णो मनुर्मतः ॥ ६८ ॥
कृष्णेति द्व्यक्षरः कामपूर्व्वस्त्र्यक्षरः स एव तु ।
स एव चतुरर्णः स्यात् ङेऽन्तोऽन्यश्चतुरक्षरः ॥ ६९ ॥
रच्यते पञ्चवर्णः स्यात् कृष्णाय नम इत्यपि ।
कृष्णायेति स्मरद्वन्द्वमध्ये पञ्चाक्षरोऽपरः ॥ ७० ॥
गोपालायाग्निजायान्तः षडक्षर उदाहृतः ।
कृष्णाय वायुबीजाद्यो वह्निजायान्तकोऽपरः ॥ ७१ ॥
कृष्णाय स्मरबीजाद्यो वह्निजायान्तकोऽपरः ।
षडक्षरः प्रागुदितः कृष्णगोविन्दकौ पुनः ॥ ७२ ॥
श्रीशक्तिमारकृष्णाय मारः सप्ताक्षरोऽपरः ।
कृष्णगोविन्दकौ ङेऽन्तौ स्मराद्यौ वसुवर्णकः ॥ ७३
दधिभक्षण ङेवह्निजयाभिरपरोऽष्टकः ।
सुप्रसन्नात्मने प्रोच्य नम इत्यपरोऽष्टकः ॥ ७४ ॥
क्लीं ग्लौं क्लीं श्यामलाङ्गाय नमस्तु स्याद्दशार्णकः ।
शिरोऽन्तो बालवपुषे कृष्णायान्यो मनुर्मतः ॥ ७५ ॥
शिरोऽन्तो बालवपुषे क्लीं कृष्णाय स्मृतो बुधैः ।
एकादशाक्षरो मन्त्र एतेषां नारदो मुनिः ॥ ७६ ॥
उक्तं छन्दस्तु गायत्री देवस्तु [illegible] रितः ।

कलधरदीर्घकेरक्षमथामु चिन्तयेद्धरिं ॥ ७७ ॥
ध्यायाद्दाकोयनीलाम्बुजरुचिररुणाभोऽजनेत्रोऽम्बुजस्थो
बालो जङ्घाकटीरस्थलकलितरणत्किङ्किणीको मुकुन्दः ।
दोर्भ्यां हैयङ्गवीनं दधदतिविमलं पायसं विश्ववन्द्यो
गोगोपीगोपवीतो रुरुनखविलसत्कण्ठभूषश्चिरं वः ॥७८॥
ध्यात्वैवमेकमेतेषां लक्षं जप्यान्मनुं ततः ।
सर्पिःसितोपलोपेतैः पायसैरयुत जुहेत् ॥ ७९ ॥
तर्पयेत्तावदेतेषां मनूनां हुतसंख्यया ।
तर्पणं विहितं नित्यमर्चयेत सुसमाहितः ॥ ८० ॥
वह्न्यादीशान्तमङ्गानि हृदादिकवचान्तिका ।
अर्चयेत् पुरतो नेत्रमस्त्रं दिक्षु वह्निः क्रमात् ॥ ८१ ॥
इन्द्रवज्रादिकाः पूज्याः सपर्य्यैषा समीरिता ।
प्रत्येकमेषां मन्त्राणां यजेद्यो मनुजोत्तम. ॥ ८२ ॥
करप्रचेया सर्व्वार्थास्तस्यासौ पूज्यतेऽमरैः ।
सद्य. फलप्रदं मन्त्रं वक्ष्येऽन्य चतुरक्षर ॥ ८३ ॥
सम्प्रोक्तो मारयुग्मान्तरस्थकृष्णपदेन तु ।
ऋष्याद्यमङ्गपटकञ्च प्रागुक्तं प्रोक्तमस्य तु ॥ ८४ ॥
श्रीमत्कल्पद्रुमूलोद्यतकमलसत्कर्णिकासंस्थितोऽय
तच्छाखालम्बिपद्मोदरविपवदसंख्यातरत्नाभिषिक्त. ।
हेमाभः स्वप्रभाभिस्त्रिभुवनमखिलं भासयन् वासुदेवः
पायाद्व.पायसादो[2]ऽनवतनुवनिताम्र्गशिरसि सः ॥ ८५ ॥

[2]—ऽमरतनुर्वनिश मयमानो मुनीन्द्रे रित्येवाद्दृश्यः पाठः कश्चित्समनोय ।

ध्यात्वैवं प्रजपेल्लक्षचतुष्कं जुहुयात्ततः ।
त्रिमध्वक्तैर्बिल्वफलैश्चत्वारिंशत्सहस्रकं ॥ ८६ ॥
अङ्गैर्ऋषिभिरिन्द्राद्यैर्वज्राद्यैरर्चनोदिता ।
तर्पयेद्दिनशः कृष्णं स्वादुत्रयधिया जनैः ॥ ८७ ॥
मारयोरस्य मां साधो रक्तश्चेदपरो मनुः ।
षडङ्गान्यस्य कलवद्दीर्घैर्मन्त्रशिखा मनोः ॥ ८८ ॥
मारक्तोद्यानकल्पद्रुमशिखरलसत्स्वर्णदोलाधिरूढं
गोपीभ्यां प्रेङ्ख्यमानं विकसितनवबन्धूकसिन्दूरभासं ।
बालं नीलालकान्तं कटितटविलसत्क्षुद्रघण्टाघटाढ्यं
वन्दे शार्दूलकामाङ्कुशलसितगलाकल्पदीप्तं मुकुन्दं॥८९॥
ध्यात्वैवं पूर्ववत्क्लृप्तेन जप्त्वा रक्तोत्पलैर्नवैः ।
मधुत्रययुतैर्हुत्वाभ्यर्चयेत् पूर्ववद्धरिं ॥ ९० ॥
मधुरत्रयसंयुक्तामारक्तां शालिमञ्जरीं ।
जुहुयान्नित्यशोऽष्टोत्तरशतमेकेन मन्त्रयोः ॥ ९१ ॥
तस्य मण्डलतः पृथ्वी पृथ्वी शस्यकुलाकुला ।
स्याच्छालिपुञ्जपूर्णाश्च तद्देशाश्च प्रजायते ॥ ९२ ॥
यश्चैतयोर्नियतमन्यतरं भजेत
मन्त्रोर्जपार्च्चनहुतादिभिरात्मभक्तिः ।
श्रीमान् स मन्मथ इव प्रमदासु राज्ञी
भूयात्ततोऽपि विपदि तस्य महाच्युताख्यं ॥ ९३ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे चतुर्थरात्रे प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ॥

श्रीमहादेव उवाच ।

अथोच्यते वश्यविधिः पुरोक्त-
दशार्णतोऽष्टादशवर्णतश्च ।
स्मृत्यैतयोः सर्व्वजगत्प्रियत्वं
मनुर्मनुष्यस्य सदा विधत्ते ॥ १ ॥

फुल्लैर्वन्यप्रसूनैरमुमरुणतरैरर्च्चयित्वा दिनादौ
नित्यं नित्यक्रियायां रतमथ दिनमध्योक्तकृप्त्या मुकुन्दं।
अष्टोपेतं सहस्रं दशलिपिमनुवर्य्यं जपेद्यः स मन्त्री
कुर्य्याद्वश्यान्यवश्यं स्वसुखसुखभुवां मन्त्रवन्मण्डलानि ॥
२ ॥

जातिप्रसूनैर्वरगोपवेशं
क्रीडारतं रक्तहयारिपुष्पैः ।
नीलोत्पलैर्गीतरतं पुरोऽव-
दृष्ट्वा न्पपादान् वशयेत् क्रमेण ॥ ३ ॥

सितकुसुमसमेतैस्तण्डूलैराज्यसिक्तै-
र्दशशतमथ हुत्वा नित्यशः सप्तवारं ।
कचभुवि च ललाटे भस्म तद्धारयन्ना
वशयति युवतीं स्त्री तत्पतिं सा तदैव ॥ ४ ॥

ताम्बूलवस्त्रकुसुमाञ्जनचन्दनाद्यं
जप्ता सहस्रमथमन्यतरेण मन्त्रोः ।

यस्मै ददाति मनुवित् स जनोऽस्य साक्षात्
स्यात् किङ्करो न खलु तत्र विचारणीयं ॥ ५ ॥
राजद्वारे व्यवहारे सभायां
द्यूते वादे चाष्टयुक्तं शतञ्च ।
जप्त्वा वाचं प्रमथामीरयेद्यो
वर्त्ततासौ तत्र तत्रोपरिष्टात् ॥ ६ ॥
आसीनं सुरमथनं कदम्बमूले
गायन्तं मधुरतरं व्रजाङ्गनाभिः ।
स्मृत्वाज्यै मधुमिलितैर्मयूरकेध्मै-
र्हुत्वासौ वशयति मन्त्रवित् त्रिलोकीं ॥ ७ ॥
रासमध्यगतमच्युतं स्मरन्
यो जपेद्दशशतं दशाक्षरं ।
नित्यशो झटिति मासतो नरो
वाञ्छितामतिवहेत् स कन्यकां ॥ ८ ॥
तुङ्गकुञ्जमधिरूढमच्युतं
या विचिन्त्य दिनशः सहस्रकं ।
साष्टकं जपति सा हि मण्डलात्
वाञ्छितं वरमुपैति कन्यका ॥ ९ ॥
नृत्यन्तं व्रजसुन्दरीजनकराम्भोजालिसंग्राहितं
ध्यात्वाष्टादशवर्णकं मनुवरं लक्षं जपेन्मन्त्रवित् ।
लाजानामथवा मधुद्रुततरैर्हुत्वायुतं चूर्णकै-
रुद्वोढं प्रजपेच्च तावदचिर[illegible]ञ्छितां कन्यकां ॥ १० ॥

अष्टादशाक्षरेण द्विजतरुजैस्त्रिमध्वक्तैरयुतं ।
कुशैस्तिलैर्वा सिततण्डुलैरर्चयितुं द्विजान् जुहुयात् ।
जुहुयात् कनमानभरैर्वशयेन्नृपतीन् कुलैः कुरुण्टकजैः ।
विषईचुरसैरपि पाटलजैरितरानपि तद्वद्यो वशयेत् ॥
११ ॥

अभिनवैः कमलैरक्णोत्पलैः
समधुरैरपि चम्पकपाटलैः ।
प्रतिहुनेद्युत क्रमशोऽचिरा-
द्दशयितुं सुखजादिवराङ्गनाः ॥ १२ ॥

हयारिकुसुमैर्नवैस्त्रिमधुराप्लुतैर्नित्यशः
सहस्रमुषिरासवं प्रतिहुनेन्निशीथे बुधः ।
सुगर्व्वितधियं हठात् झटिति वारयोषामसौ
करोति निजकिङ्करीं स्मरशिलीमुखैरर्द्दितां ॥ १३ ॥

पटुसंयुतैस्त्रिमधुराद्र्भवै-
रपि सर्षपैर्द्द्शशतचितयं ।
निशि जुह्वतोऽस्य शची दयिता-
ऽप्यवशो वशीभवति किन्त्वपरे ॥ १४ ॥

अखण्डबिल्वजैः फलसमित्
प्रसवच्छदनैर्मधुद्रुततरैर्हवनात् ।
कमलैः सिताक्षतयुतैश्च पृथक्
कमलां चिराय वशयेदचिरात् ॥ १५ ॥

अपहृत्य गोपवनिताम्बरजातं
हृदयैः कदम्बमधिरूढमच्युतं ।
प्रजपन् महानिशि सहस्रमानयेत्
द्रुतमुर्व्वशीमपि हठात् दशाहतः ॥ १६ ॥
बहुना किमत्र कथितेन मन्त्रयो-
रनयोः सदृङ् न हि परो वशीकृतौ ।
अपि तृप्तिकर्मणि विदग्धयोषितां
कुसुमायधास्त्रमयवर्षिणोरिह ॥ १७ ॥
वन्दे कुन्देन्दुगौरं तरुणमरुणपाथोजपत्राभनेत्रं
शङ्खं चक्रं गदाब्जे निजभुजपरिघैरायतैरादधानं ।
दिव्यैर्भूषाङ्गरागैर्नवनलिनलसन्मालया च प्रदीप्तं
द्योतत्पीताम्बराढ्यं मुनिभिरभिष्टुतं पङ्कजस्थं मुकुन्दं ॥१८
एवं ध्यात्वा पुमांसं स्फुटहृदयसरोजासनासीनमाद्यं
सान्द्राम्भोजच्छविं वा द्रुतकनकनिभं वा यो जपेदर्कलक्षं
मन्त्रिरिकं हि सम्यग्वशमपि च हुनेदर्कसाहस्रमिध्मैः
क्षीरिद्रुत्थैः पयोभिः समधुघृतसितेनाथ वा पायसेन ॥१९
ततो लोकाध्यक्षं ध्रुवचितिसदानन्दवपुषं
हृदा पाथोजाविर्भवतिमिरसंहारमिहिरं ।
निजैक्येन ध्यायन्मनुममलचेताः प्रतिदिनं
त्रिसाहस्रं जप्येत् प्रयजतु च सायाह्नविधिना ॥ २० ॥
विधिं योऽमुं भक्त्या भजति नियतं सुस्थिरमति-
र्भवाम्भोधिं भीम

तरङ्गैस्तुङ्गैर्जनिमृतिसमाख्यैः प्रविततं
समुत्तीर्य्यानित्यं व्रजति परमं धाम स हरेः ॥ २१ ॥
यशांसस्य नामानि शृण्वंस्तदीयाः
कथाः संस्मरंस्तस्य रूपाणि नित्यं ।
समस्तं तत्पदाम्भोरुहं भक्तिनम्रः
स पूज्यो बुधैर्नित्ययुक्तः स एव ॥ २२ ॥
वक्ष्ये मनुद्वयमथातिरहस्यमन्यत्
संक्षेपतो भुवनमोहननामधेयं ।
ब्रह्मेन्द्रवामनयनेन्दुभिरादिमोऽन्य-
स्तत्पूर्वको विषह्वषीकयुतश्च ङेऽन्तः ॥ २३ ॥
नमोऽस्तु सम्मोहननारदो मुनि-
श्छन्दस्तु गायत्रमुदीरितं बुधैः ।
त्रैलोक्यसम्मोहनविष्णुरेतयोः
स्याद्देवता वच्म्यधुना षडङ्गं ॥ २४ ॥
श्रज्ञीवकलाद्दीर्घैः
सत्त्वैस्तदपि च कलासमारूढैः ।
उक्तां पूर्ववदासन-
विन्यासान्तं समाचरेदथ तु ॥ २५ ॥
करयोः शाखासु तले
विन्यस्य षडङ्गानि चाङ्गुलीषु शरान् ।
मनुपुटितमातृका-
वर्णैर्विन्यस्याङ्गानि विन्यसेच्च शरान् ॥ २६ ॥

विषहृषीकयुतेशान् उद्धृत-
करशाखाभिन्नमोऽन्तिकान्।
शोषण मोहन सन्दी-
पनतापनमादनकादिकान् क्रमशः॥ २७॥
पञ्चैते सम्प्रोक्ता ह्रां ह्रीं-
क्लीं सुसआदिकरणाः।
सम्मोहनमथ जगतां
ध्यायेत् पुरुषोत्तमं समाहितधीः॥ २८॥
दिव्यतरूद्यानोद्यद्-
रुचिरमहाकल्पपादपाधस्तात्।
मणिमयभूतलविलस-
द्गद्रपयोजन्मपीठनिष्ठस्य॥ २९॥
विश्वप्राणिप्रीयत्-
प्रद्योतेन सद्युतेः सुपर्णस्य।
आसीनमुन्नतांशे
विद्रुमभङ्गाङ्गमङ्गजोन्मथितं॥ ३०॥
चक्रगदाङ्कुशपाशान्
सुमनोवाणेक्षुचापकमलगदाः।
दधतं स्वदोर्भिररुणा-
यतविशालघूर्णिताक्षियुगललोलं॥ ३१॥
मणिमयकुण्डलकिरी-
टहाराङ्गदकङ्कणोर्मिरसमाद्यैः।

अरुणैर्माल्यविलेपै-
स्त्वोद्दीप्तं पीतवस्त्रपरिधानं ॥ ३२ ॥
निजवामोरुनिषण्णां
श्लिष्यन्तीं वामहस्तधृतनलिनीं ।
क्लिन्नयोनिं कमला-
मोदमदनव्याकुलाङ्गलतां ॥ ३३ ॥
सुरुचिरभूषणमाल्या-
ऽनुलेपनां सुसितवसनपरिवीतां ।
निजसुखकमलव्याप्त-
चटुलायितनयनमधुकरां तरुणीं ॥ ३४ ॥
श्लिष्यन्तं वामभुजा-
दण्डेन दृढं धृतेक्षुचापेन ।
तज्जनितपरमनिर्वृति-
निर्भरहृदयश्चराचरैकगुरुं ॥ ३५ ॥
सुरदितिजभुजगग-
ह्यकगन्धर्वाद्यङ्गनाजनसहस्रैः ।
मदमन्मथालसाङ्गै-
रभिवीतं दिव्यभूषोल्लसितैः ॥ ३६ ॥
आत्माभेदतयेत्थं
ध्यात्वैकाचरमथाष्टादशार्णं ।
प्रजपेद्दिनकरलक्षं
त्रिमधुरसिक्तैश्च किंशुकप्रसवैः ॥ ३७ ॥

जुहुयादर्कसहस्रं
विमलैः सलिलैश्च तर्पयेत्तावत् ।
विंशत्यर्णं प्रोक्तं
मन्त्रे दिनशोऽसुमर्चयेद्भक्त्या ॥ ३८ ॥
[1]पीठावन्दोवच्छान्तरा-
जय सिरोसुनाभिः पूजावपुं ।
हरिमावाह्य स्कन्धे
तस्यार्घाद्यैः समभ्यर्च्य भूपान्तैः ॥ ३९ ॥
अङ्गानि प्राणांश्च न्यसेत्
क्रमतः किरीटमपि शिरसि श्रवसोश्च ।
कुण्डले हरिप्रमुखानि
प्रहरणानि पाणिषु च ॥ ४० ॥
श्रीवत्सकौस्तुभौ च
स्तनयोर्मूर्ध्नि गले च वनमालां ।
पीतवसनं नितम्बे
वामांशे श्रियमपि स्वबीजेन ॥ ४१ ॥
द्रष्टाथकर्णिकाया-
मङ्गानि विदिशासु दिक्षु शरान् ।
कोणेषु पञ्चमं वै
पुनरष्टादिदलेषु शक्तयः पूज्याः ॥ ४२ ॥

---

[1] मिताक्षमस्फुटमध्यायपादस्थ ॥

लक्ष्मीः सरस्वती च
स्वर्णावदातनिभे अतिप्रीत्यै ।
कीर्त्तिः कान्तिश्च सिते
तुष्टिः पुष्टिर्मरकतप्रतिमे ॥ ४३ ॥
दिव्याङ्गरागभूषण-
माल्यदुकूलैरलङ्कृताङ्गलताः ।
स्मेराननाः स्मरार्त्ता
धृतचामरचारुकरतला एताः ॥ ४४ ॥
लोकेशा बहिरर्च्याः
कथितार्च्चा मनुद्वयोद्भूताः ।
प्रायः पुरुषोत्तमविधि-
[a]रयसैरसमोध्यते मधुमत्त्वात् ॥ ४५ ॥
त्रैलोक्यमोहनाय-
त्युक्त्वा विद्महे इति स्मरायेति ततः ।
धीमहि तन्नो चान्ते
विष्णुस्तदनु प्रचोदयाद्गायत्री ॥ ४६ ॥
जप्यैषा तु जपादौ
हरितहली श्रीकरी च जपहरणैः ।
प्रोक्षयितृशुद्धिविधये-
ऽर्घ्यान्यात्मयागभूद्रव्यानि ॥ ४७ ॥

---

[a] एतत्पादमस्फुटं ॥

मन्वोरेकेन शतं
प्रतर्पयेन्मोहनीप्रसूनद्युतेर्यः ।
तोयैर्दिनशः प्रातः
स तु लभते वाञ्छितान् पश्चात् कामान् ॥ ४८ ॥
हुत्वाऽयुतं हुतशेषं
पाताऽऽज्येन तावदतिजप्तेन ।
भोजयेत् स्वसभिकं
रमणीं मनोऽर्पितां स्ववशतां नेतुं ॥ ४९ ॥
अष्टादशार्णविहिता
विधयः कार्य्या वश्यकृतास्ताभ्यां ।
मन्वोरनयोः सदृशो
न हि जातस्त्रिलोकवश्यकर्मणि कश्चित् ॥ ५० ॥
अथैकस्तु जपादा-
वथवा ध्येयः सवेणुगीतिर्ध्येयः ।
अरुणनूपुराङ्गवेशः
कन्दर्पो वा प्रसूनचापेषुधारी च ॥ ५१ ॥
यस्त्वेकतरं मनुमेतयो-
र्विमलधीः सदा भजति मन्त्री ।
स द्राङ्मुद्रान्विततया
तथा सिद्धिं विप्राणामतितरामेति ॥ ५२ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे प्रथमरात्रे मुद्रानिरूपणे
द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ॥

श्रीमहादेव उवाच ॥

[*]अथ सत्यसौ द्वितृतीयतूर्य्यकाः
शिखिवामनेत्रशशिखण्डमण्डिताः ।
अथ कृष्ण युगनिरन्तरात्मभूमि-
शिखिशक्तितास्यहृतिशक्तिवर्णकाः ॥ १ ॥
प्रणि मध्यतो मुदितचेतसे ततोऽन्त्या-
ऽनुपरक्तहृङ्मत्तगुरुमारुताचराः ।
स चतुर्थकृष्णपदमिन्दुकार्मुको
दशवर्णकश्च मनुवर्य्यकस्त्वसौ ॥ २ ॥
सलवाधराचलसुतारमाद्यैः
पुटितः क्रमात् क्रमागतैः समुद्धरेत् ।
इति दन्तसूर्य्यवसुवर्णा उद्धृतः
कवितानुरञ्जनरमाकरोऽयमत् ॥ ३ ॥
मुखहृत्तनन्दयुतनारदो मुनि-
स्त्विह छन्द उक्तमम्हतो विराडपि ।
त्रिजगद्विमोहनसमाह्वयो हरिः
खलु देवतास्य मुनिभिः समीरिता ॥ ४ ॥

---

* अथेत्यादि श्लोकत्रयमपरिस्फुटम् ।

वसुमित्रभूधरगजात्मदिक्षयै-
मनुरर्णकैस्त्रिपुटीकृतः पृथक् ।
निजजातिमुङ्निगदितं षडङ्गकं
क्रिययैव तत् खलु जनानुरञ्जनं ॥ ५ ॥
अथ संविशोध्य तनुयुक्तमनिन्दितः
प्रचय्य पीठमपि चारुचर्मणा ।
करयोर्द्दृशाक्षरविधिं क्रमात् न्यसेत्
षडङ्गसायकमनङ्गपञ्चकं च ॥ ६ ॥
[१]मनुमीदृशं न्यसतु सर्व्वतस्तनौ
स्वरसम्पुटैस्तदनु मातृकाक्षरैः ।
दशतत्त्वादि दशार्णकीर्त्तितं
त्वथ मूर्त्तिपञ्जरविधानमाचरेत् ॥ ७ ॥
सृजतिस्थितिदशषडङ्गसायकान्
न्यसतात्ततोऽन्यदखिलं पुरोक्तवत् ।
प्रविधाय सकलभुवनैकसाक्षिणं
स्मरतात्मकुन्दमनवद्यधीरधीः ॥ ८ ॥
अथ भूधरोदधिपरिष्कृते महो-
न्नतशालगोपरविशालवीथिके ।
मृगलक्ष्मग्रसितसौधसङ्कुले
मणिहर्म्यविस्तृतकवाटवेदिके ॥ ९ ॥

---

[१] मनुना मिश्रो न्यसेदिति ख॰ पु॰ ।

द्विजभूपविट्चरणजन्मनां गृहै-
र्विविधैश्च शिल्पिजनवेश्मभिस्तथा ।
इभवाज्युष्ट्रखरधेनुसौरभ-
च्छगलालयैश्च लसिते सहस्रशः ॥ १० ॥
विविधापणाश्रितमहाजनाकुले
क्रयविक्रयद्रविणसञ्चयान्विते ।
जनमानसाहृतिविदग्धसुन्दरी-
जनमन्दिरैः सुरुचिरैश्च मण्डिते ॥ ११ ॥
पृथुदीर्घिकाविमलपाथसि स्फुर-
द्विकचारविन्दमकरन्दलम्पटैः ।
कलहंससारसरथाङ्गनामभि-
र्विहगैर्विघुष्टककुभैः स्वके पुरे ॥ १२ ॥
स्मरपादपैः सुरभिपुष्पलोलुप-
भ्रमराकुलैर्विविधकामदैर्नृणां ।
शिवमन्दमारुतचलच्छिखैर्वृते
मणिमण्डपे रविसहस्रसमप्रभे ॥ १३ ॥
मणिदीपितान्तरे तनुचित्रविस्तृतवितान-
शालिनि विलसिते विकस्वरविचित्रदामभिः ।
सुगन्धिगन्धसलिलोक्षितस्थले प्रमदाशतै-
र्मदनालसैः कवरिभारलोलचारुचामरैः ॥ १४ ॥
अभिसेविते स्खलितमञ्जुभाषिभिः
स्तनभारभङ्गुरकृशावलग्नकैः ।

*अधिवासधारमनिवार्य्यवर्षिणः
सुमहानदामृतरसस्रुतेरधः ॥ १५ ॥
सुरपादपस्य मणिभूतलोल्लसत्-
पृथुसिंहवक्त्रचरणाम्बुजासने ।
अभिचिन्तयेत् सुखनिविष्टमच्युतं
नवनीलनीररुहकोमलच्छविं ॥ १६ ॥
कुटिलाग्रकुन्तललसत्किरीटकं
स्मितरत्नपुष्परचितावतंसकं ।
सुललाटमुद्भ्रमितभ्रुवं मनोज्ञं
विपुलायतविलोलचारुलोचनं ॥ १७ ॥
मणिमण्डलोस्नपरिदीप्तगण्डकं
नवबन्धुजीवकुसुमारुणाधरं ।
स्मितचन्द्रिकोज्ज्वलितदिङ्मुखं स्फुरत्
पुलकश्रमाम्बुकणमण्डिताननं ॥ १८ ॥
स्फुरदंशुरत्नगणदीप्तभूषणो-
त्तमहारदामभिरुरस्थलीयकं ।
घनसारकुङ्कुमविलिप्तविग्रहं
पृथुदीप्तषड्द्वयभुजाविराजितं ॥
अरुणाञ्जनैघमङ्क्जोन्मथिताङ्ग-
मङ्गसुशोभनकराम्बुजद्वयं ॥ १९ ॥

* अधिवासधाममनिवार्यवर्षिणः [illegible] मध्ये॰ पु॰ ।

स्वाङ्कस्थभीष्मकसुतोरुयुगान्तरस्थं
तां तप्तहेमरुचिमात्मकराम्बुजाभ्यां ।
श्लिष्यन्तमार्द्रजघनामुपगूहमाना-
मात्मानमायतलसत्करपल्लवाभ्यां ॥ २० ॥

आनन्दोद्रेकनिघ्नां मुकुलितनयनेन्दीवरां चारुहासां
प्रोद्यद्रोमाञ्चलग्नश्रमजलकणिकामौक्तिकालंकृताङ्गीं ।
आत्मन्यालीनबाह्यान्तरकरणगणामङ्ककैर्निस्तरङ्गे
मज्जन्तं लीलनानामतिमतुलमहानन्दसन्दोहसिन्धौ ॥
२१ ॥

स द्वाभ्यां युवतीभ्यां
दिव्यदुकूलानुलेपननिर्मलाभ्यां ।
मन्मथशरणयुताभ्यां
मुखकमललोललोचनभ्रमराभ्यां ॥ २२ ॥

भुजयुगलाश्लिष्टाभ्यां
श्यामारुणललितकोमलाङ्गलताभ्यां ।
आश्लिष्टमात्मदक्षिण-
वामगताभ्यां करोल्लसत्कमलाभ्यां ॥ २३ ॥

पृष्ठगतया कलिन्दसुतया करकमलयुजा
सम्परिरब्धमञ्जनरुचा च मदनमथितया ।
पन्नगदारथाङ्गजलजध्वजयुगयुगलं
दोर्द्वयसंगतांसविलसन्मुखसरसीरुहं ॥ २४ ॥

दिक्षु बहिः सुरर्षियतिभिः भक्तिभारावनम्रतनुभिः ।

स्तुतिमुखरमुखैः सततं सेव्यमानं कमलयोषम् ॥
ज्ञानविषयमर्थचतुष्टयप्रदं त्रिभुवनजनकं ॥ २५ ॥
सान्द्रानन्दसुधाब्धिमग्नममले धाम्नि*स्वकेऽवस्थितं
ध्यात्वैवं परमं पुमांसमनघात् सम्प्राप्य दीक्षागुरोः ।
लब्ध्वामुं मनुमादरेण नियतधीर्लक्षं जपेद्योषितां
वार्त्ताकर्णनदर्शनादिरहितो मन्त्री गुरूणामपि ॥ २६ ॥
जुहुयात्तद्दशांशं, सशर्करातिलक्षौद्रघृतेन पायसेन ।
प्रथमोक्तपीठवर्य्यकेऽमुं प्रयजेदनित्यताविमुक्त्यै ॥ २७ ॥
आरभ्य विभूतिमथ न्यसेत् क्रमतः शरान्तमभ्यर्च्य ।
आद्येऽन्तरात्मानं विंशत्यर्णोदिते यन्त्रवरे ॥ २८ ॥
मध्ये बीजं परितो वह्निशयमेन्द्रदिक्षु संलिख्य ।
पूर्वं बीजचतुष्कं तदपि च चत्वारिंशद्भिरक्षरैरधिकैः ॥
२९ ॥
शिष्टैश्च प्रवेशे शिवहरिब्रह्माद्याश्रियुक्ताश्च विलिखेत् ।
वाक्श्रियाश्रीभन्द्रास्तद्द्वारोऽनुपालिता लिखिताः ॥ ३० ॥
शेषं पूर्वोदितवत् विधाय पीठमधस्तादभ्यर्च्य ।
संकल्प्य मूर्त्तिमाद्यमावाह्याभ्यर्च्य मध्यबीजे तत् ॥ ३१ ॥
सुखदक्षसव्यपृष्ठगवीजेष्वर्च्यास्तु शक्तयः क्रमशः ।
दक्षिणाद्याश्च षट्सु कोणेष्वङ्गानि केसरेषु शरान् ॥
३२ ॥

---

* प्रतीचेऽवेति पा० ॥

शङ्खाद्याश्च दलमध्येष्वग्न्यादिषु तद्वदिन्द्वंशप्रमुखान्।
अग्रे केतुं श्यामं पृष्ठे विप्रमहणममलरूक्तरुचं ॥ ३३ ॥
पार्श्वद्वये निधीशानन्तौ तद्वदभिपूजयेत् क्रमशः।
हेरम्बशास्तृदन्दविश्वक्सेनानधिदिक्षु वहनाद्यं ॥ ३४ ॥
विद्रुममरकतदूर्वास्वर्णाभान् वहिरथेन्द्रवज्राद्यान्।
यजनविधानमितीरितमावृत्तिसत्तयुतं मुकुन्दस्य॥ ३५ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे पञ्चमरात्रे तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥



श्रीमहादेव उवाच ॥

इत्यर्च्चयन्नच्युतमादरेण
योऽमुं जपेन्मन्त्रवरं यतात्मा।
सोऽभ्यर्च्यते दिव्यजनैर्जनानां
स्वस्येवपङ्क्तिरुत तिग्मभानुः ॥ १ ॥

सितशर्करोत्तरपयःप्रतिपत्त्या
वितर्पयेद्दिनमुखे दिनशस्तं।
सलिलैःशतं शतमखश्रियमेव
स्वविभूत्युदत्नति करोत्युदविन्दुं ॥ २ ॥

विदलद्दलैःसुमनसः
सुमनोभिर्घनद्रवमग्नैः।
मनुना ऽमुना हवनतोऽयुतसंख्यं
त्रिजगत्श्रियः स मन्त्रवित् कविराट् स्यात् ॥ ३ ॥

ध्यानादेवास्य सद्यस्त्रिदशपतिगदप्रो वश्यतां यान्त्यवश्यं
कन्दर्पोत्तीर्णं जपाद्यैः किमथ न सुलभं मन्त्रतोऽस्यान्तरस्थं।
स्पर्द्धामुद्धूय चित्तं महदिदमपि नैसर्गिकीं शश्वदेनं
सेवतेमं चिलक्ष्मं सरसिजनिलयाधीश्वरीं वापि ब्राह्मीं ॥
४ ॥

आधिव्याधिजरापमृत्युदुरितैर्भूतैः समस्तैर्विधि-
र्नो भाग्येन दरिद्रतादिभिरसौ दूरं विमुक्तैश्चिरं।
सत्पुत्रैः सहितैश्च मित्रनिवहैर्जुष्टोऽखिलाभिः सदा
सम्पद्भिः परिपुष्टभूरियशसा जीवेदनेकाः समाः ॥ ५ ॥

अखिलमनुषु मन्त्रा वैष्णवा वीर्यवन्तो
महिततरफलाढ्यास्तेषु गोपालमन्त्राः।
प्रबलतर इहैषोऽशिष्टसम्मोहनाख्यो
मनुरनुपमसम्यक्कल्पनाकल्पशाखी ॥ ६ ॥
मनुमिममतिहृद्यं यो भजेद्भक्तिनम्रो
जपहुतयजनाद्यैर्ध्यानवन्मान्त्रिमुख्यः।
त्रुटितसकलकर्मग्रन्थिरुद्बुद्धचेता
व्रजति स तु पदं तन्नित्ययुक्तं मुरारेः ॥ ७ ॥

अङ्गीकृत्यैकमेषां मनुमथ जपहोमार्चनाद्यैर्मनूना-
मष्टाङ्गोत्सारितारिः प्रमुदितपरिशुद्धोपसन्नान्तरात्मा।
योगी युञ्जीत योगान् समुचितविकृतिः सपुरोधाकृतिः सन्
आत्मन्याधाय चित्तं विषयसमसुखोन्मीलिताक्षो निविष्टः
॥ ८ ॥

विश्वस्थूतेन्द्रियान्तःकरणमयमिवेन्दुस्वरूपं समस्तं
यस्यांमैतत्प्रधाने कलनलयमये बीजरूपे प्रवेश ।
नीत्वा तत् पुंसि विश्वात्मनि तमपि परास्वन्ने कालतत्त्वे
तं वै शक्तौ चिदामून्यपि नयतु चन्द्रांशके सा निशान्ते
॥ ९ ॥

निर्द्वन्द्वे निर्विशेषे निरतिशयमहानन्दसान्द्रे वसानो
नापार्थे कृष्णपूर्वामलसहितपरे शाश्वतेऽभ्यासनीयं ।
सूक्ष्मं संकृष्य बीजोत्तममथ शनकैर्नीतनिश्वासचेताः
प्रक्षीणापुण्यपुण्यो निरुपमसुखसंवित्स्वरूपः स भूयात् ॥
१० ॥

मूलाधारे त्रिकोणे तरुणतरणिभे भास्वरे विश्वमन्तं
बालार्कालोकलोलं जरठतरकुरङ्गाङ्कनकोटिप्रभाभिः ।
विद्युन्मालासहस्रद्युतिरुचिरहसद्बन्धुजीवाभिरामं
त्रैगुण्याक्रान्तबिन्दुं जगदुदयलयावेकहेतुं विचिन्त्य ॥
"११॥

तस्योर्द्ध्वे विस्फुरन्तीं स्फुटरुचिरतडित्पुञ्जभां भास्वरन्त-
मुद्गच्छन्तीं सुषुम्णासरणिमनुशिखामाललाटेन्दुबिम्बं ।
चिन्मात्रां सूक्ष्मरूपां कलितसकलविश्वां कलानादगम्यां
मूलं या सर्व्वधाम्नां स्मरत निरुपमां कुण्डलीदाश्चिरं वः ॥
१२ ॥

नीत्वा तां शनकैरधोमुखसहस्राक्षाकणाम्भोदधे
र्यौतत्पूर्णशशाङ्कबिम्बमनुतः पीयूषधारासृतिं ।

वक्त्रा मन्त्रमयीं निपीय च सुधानिःस्यन्दरूपां विशे-
द्भूयोऽप्यात्मनिकेतनं पुनरपि व्युत्थाय पीत्वा विशेत् ॥
१३ ॥

योऽभ्यस्यत्यनुदिनमेवमात्मनासुं
वीजोत्थान्दुरितजरापमृत्युरोगान् ।
जित्वाऽसौ स्वयमिव मूर्त्तिमाननङ्गः
संजीवेच्चिरमलिनीलकेशजालः ॥ १४ ॥
स्फुटमधुरपदार्णश्रेणिरत्यद्भुतार्था
झटिति वदनपद्मान्निःसरत्यस्य वाणी ।
अपि च सकलमन्त्रास्तस्य सिद्धान्ति संशु-
अपरमघनसौख्यैकास्पदं वर्त्तते सः ॥ १५ ॥
भ्राम्यन्मूर्त्तिं मूलचक्रादनङ्गं
श्रीभिर्भीभीरक्तपीयूषयुक्तिः ।
विश्वाकाशं पूरयन्तं विचिन्त्य
मर्त्यावेश्यास्तत्र वश्यायसाध्याः ॥ १६ ॥
नार्य्यो नरा वा नगरी सभा वा
प्रवेशितास्तत्र निपक्कचेतसः ।
स्युः किङ्करास्तस्य झटित्यनारतं
चिराय तन्निश्चधियो न संशयः ॥ १७ ॥
तरणिदलसनाथे शक्रगोपारुणा यो
रविशशिशिखिविम्बप्रस्फुरद्वारमध्ये ।

हृदयसरसिजेऽमुं श्यामलाङ्गं सुवेशं
ससुखमुपनिषण्णं संस्मरेद्वासुदेवं ॥ १८ ॥
पादाम्भोजद्वयेऽङ्गुल्यमलकिशलये स्वावनौ सन्नखानां
सद्धर्मोदारकान्तौ प्रपदयुजि लसज्जङ्घिकादण्डयोश्च ।
आम्बोरुर्व्वोःप्रसङ्गे नववसनवरे मेखलादाम्नि नाभौ
रोमावल्यामुदारोदरभुवि विपुले वक्षसि प्रौढहारे ॥१९॥
श्रीवत्सकौस्तुभावस्फुटकमलसद्वन्द्वसद्दाम्नि बाह्वो
र्मूले केयूरदीप्ते जगदवनपटोर्दोर्द्वये कङ्कनाढ्ये ।
पाणिद्वन्द्वाङ्गुलिषु मधुरालीनविम्बे च वेणौ
कण्ठे सत्कुण्डलाग्रे स्फुटरुचिरमणौ दीप्तगण्डस्थले च
॥ २० ॥
किन्तु द्वन्द्वे च घ्राणे नयननलिनयोर्भ्रूविलासे ललाटे
केशेष्वालोलवर्हेष्वतिसुरभिमनोज्ञप्रसूनोत्पलेषु ।
श्रोत्रे विन्यस्तवेणावधरकिशलये दन्तपंक्त्यां स्मितास्य-
ज्योत्स्नामायादिपुंसःक्रमत इति शनैः स्वं मनः संनिधत्तां
॥ २१ ॥

यावन्मनो विलयमेति हरेरुदारे
मन्दस्मिते जपतु तावदनङ्गवीजं ।
अष्टादशार्णमथवापि दशार्णकं वा
मन्त्रं शनैरथ जपेत्समयेस्वनिष्ठः ॥ २२ ॥
आरोप्यारोप्य मनः
पदारविन्दादि मन्दहसितान्तं ।

तत्र विलाप्यं क्षीखे
चेत् सुखचित्सदात्मको भवति ॥ २३ ॥
न्यासजपहोमपूजा
तर्पणमन्त्राभिषेकविनियोगानां ।
दीपिकाकारमयो
ज्ञावित क्रमः कृष्णमन्त्रगणकथितानां ॥ २४ ॥
संशयतिमिरच्छिदुरा-
ऽशेषाऽक्रमदीपिका करेण महद्भिः ।
करदीपिकेव धार्य्या
सस्नेहमहर्निशं समस्तसुखाप्त्यै ॥ २५ ॥
यश्चक्रं निजकेलिसाधनमधिष्ठानस्थितोऽपि प्रभ-
र्हत्तं मन्मथशत्रुणाऽवनकृते व्याकुललोकोत्तरं ।
धत्ते दीप्तनवेन्दुभानुनयनोपेताङ्गमाद्यं भुवं
वन्दे कायविमर्द्दन वधकृतां भक्तिप्रदं यादवं ॥ २० ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे पञ्चमरात्रे चतुर्थोऽध्यायः ॥ ४ ॥

---

पञ्चमोऽध्यायः ॥

श्रीपार्वत्युवाच ।

देवदेव जगन्नाथ भक्तानुग्रहकारक ।
यद्यस्ति मयि कारुण्य मयि यद्यस्ति ते दया ॥ १ ॥

यद्यत् त्वया प्रगदितं तत् सर्वं मे श्रुतं प्रभो।
गुह्याद्गुह्यतरं यत्तु यत्ते मनसि काशते ॥ २ ॥
त्वया न गदितं यत्तु यस्मै कस्मै कदाचन।
तन्मां कथय देवेश सहस्रं नाम चोत्तमं ॥ ३ ॥
श्रीराधाया महादेव्या गोप्या भक्तिप्रसाधनं।
ब्रह्माण्डकर्त्री हर्त्री सा कथं गोपीत्वमागता ॥ ४ ॥

श्रीमहादेव उवाच ॥

शृणु देवि विचित्रार्थां कथां पापहरां शुभां।
नास्ति जन्मानि कर्माणि तस्या नूनं महेश्वरि ॥ ५ ॥
यदा हरिश्चरित्राणि कुरुते कार्य्यगौरवात्।
तदा विधात्ररूपाणि हरिसान्निध्यसाधिनी ॥ ६ ॥
तस्या गोपीत्वभावस्य कारणं गदितं पुरा।
इदानीं शृणु देवेशि नाम्नाञ्चैव सहस्रकं ॥ ७ ॥
यन्मया कथितं नैव तन्त्रेष्वपि कदापि न।
तव स्नेहात् प्रवक्ष्यामि भक्त्या धार्य्यं मुमुक्षुभिः ॥ ८ ॥
मम प्राणसमा विद्या भाव्यते मे त्वहर्निशं।
शृणुष्व गिरिजे नित्यं पठस्व च यथामति ॥ ९ ॥
यस्याः प्रसादात् कृष्णस्तु गोलोकेशः परःप्रभुः।
अस्या नामसहस्रस्य ऋषिर्नारद एव च ॥ १० ॥
देवी राधा परा प्रोक्ता चतुर्वर्गप्रसाधिनी।

ओं

श्रीराधा राधिका कृष्णवल्लभा कृष्णसंयुता ॥ ११ ॥

वृन्दावनेश्वरी कृष्णप्रिया मदनमोहिनी ।
श्रीमती कृष्णकान्ता च कृष्णानन्दप्रदायिनी ॥ १२ ॥
यशस्विनी यशोगम्या यशोदानन्दवल्लभा ।
दामोदरप्रिया गोपी गोपानन्दकरी तथा ॥ १३ ॥
कृष्णाङ्गवासिनी हृद्या हरिकान्ता हरिप्रिया ।
प्रधानगोपिका गोपकन्या त्रैलोक्यसुन्दरी ॥ १४ ॥
वृन्दावनविहारी च [1]विकाशितमुखाम्बुजा ।
गोकुलानन्दकर्त्री च गोकुलानन्ददायिनी ॥ १५ ॥
गतिप्रदा गीतगम्या गमनागमनप्रिया ।
विष्णुप्रिया विष्णुकान्ता विष्णोरङ्गनिवासिनी ॥ १६ ॥
यशोदानन्दपत्नी च यशोदानन्दगेहिनी ।
कामारिकान्ता कामेशी कामलालसविग्रहा ॥ १७ ॥
जयप्रदा जया जीवा जीवानन्दप्रदायिनी ।
नन्दनन्दनपत्नी च वृषभानुसुता शिवा ॥ १८ ॥
गणाध्यक्षा गवाध्यक्षा गवां गतिरनुत्तमा ।
काञ्चनाभा हेमगात्रा काञ्चनाङ्गदधारिणी ॥ १९ ॥
अशोका शोकरहिता विशोका शोकनाशिनी ।
गायत्री वेदमाता च वेदातीता विदुत्तमा ॥ २० ॥
नीतिशास्त्रप्रिया नीतिगतिर्मतिरभीष्टदा ।
वेदप्रिया वेदगर्भा वेदमार्गप्रवर्द्धिनी ॥ २१ ॥

---

[1] विस्फूर्जितेति व०ं ।

वेदगम्या वेदपरा विचित्रकनकोज्ज्वला ।
तथोज्ज्वलप्रदा नित्या तथैवोज्ज्वलगात्रिका ॥ २२ ॥
नन्दप्रिया नन्दसुताराध्याऽऽनन्दप्रदा शुभा ।
शुभाङ्गी विमलाङ्गी च विलासिन्यपराजिता ॥ २३ ॥
जननी जन्मशून्या च जन्ममृत्युजरापहा ।
गतिर्गतिमतां धात्री धात्रानन्दप्रदायिनी ॥ २४ ॥
जगन्नाथप्रिया शैलवासिनी हेमसुन्दरी ।
किशोरी कमला पद्मा पद्महस्ता पयोददा ॥ २५ ॥
पयस्विनी पयोदात्री पवित्रा सर्वमङ्गला ।
महाजीवप्रदा कृष्णकान्ता कमलसुन्दरी ॥ २६ ॥
विचित्रवासिनी चित्रवासिनी चित्ररूपिणी ।
निर्गुणा सुकुलीना च निष्कुलीना निराकुला ॥ २७ ॥
गोकुलान्तरगेहा च योगानन्दकरी तथा ।
वेणुवाद्या वेणुरतिर्वेणुवाद्यपरायणा ॥ २८ ॥
गोपालस्य प्रिया सौम्यरूपा सौम्यकुलोद्वहा ।
मोहाऽमोहा विमोहा च गतिनिष्ठा गतिप्रदा ॥ २९ ॥
गीर्व्वाणवन्द्या गीर्व्वाणा गीर्व्वाणगणसेविता ।
ललिता च विशोका च विशाखा चित्रमालिनी ॥ ३० ॥
जितेन्द्रिया शुद्धसत्त्वा कुलीना कुलदीपिका ।
दीपप्रिया दीपदात्री विमला विमलोदका ॥ ३१ ॥
कान्तारवासिनी कृष्णा कृष्णचन्द्रप्रिया मतिः ।
अनुत्तरा दुःखहन्त्री दुःखकर्त्री कुलोद्वहा ॥ ३२ ॥

मतिर्लक्ष्मीर्धृतिर्लज्जा कान्तिः पुष्टिः स्मृतिःक्षमा ।
क्षीरोदशायिनी देवी देवारिकुलमर्द्दिनी ॥ ३३ ॥
वैष्णवी च महालक्ष्मीः कुलपूज्या कुलप्रिया ।
संहर्त्री सर्व्वदैत्यानां सावित्री वेदगामिनी ॥ ३४ ॥
वेदातीता निरालम्बा निरालम्बगणप्रिया ।
निरालम्बजनैः पूज्या निरालोका निराश्रया ॥ ३५ ॥
एकाङ्गा सर्व्वगा सेव्या *ब्रह्मपत्नी सरस्वती ।
रासप्रिया रासगम्या रासाधिष्ठातृदेवता ॥ ३६ ॥
रसिका रसिकानन्दा स्वयं रासेश्वरी परा ।
रासमण्डलमध्यस्था रासमण्डलशोभिता ॥ ३७ ॥
रासमण्डलसेव्या च रासक्रीडामनोहरा ।
पुण्डरीकाक्षनिलया पुण्डरीकाक्षगेहिनी ॥ ३८ ॥
पुण्डरीकाक्षसेव्या च पुण्डरीकाक्षवल्लभा ।
सर्व्वजीवेश्वरी सर्व्वजीववन्द्या परात्परा ॥ ३९ ॥
प्रकृतिः शम्भुकान्ता च सदाशिवमनोहरा ।
क्षुत्पिपासा दया निद्रा भ्रान्तिः श्रान्तिः क्षमाकुला ॥ ४० ॥
वधूरूपा गोपपत्नी भारती सिद्धयोगिनी ।
सत्यरूपा नित्यरूपा नित्याङ्गी नित्यगेहिनी ॥ ४१ ॥
स्थानदात्री तथा धात्री महालक्ष्मीः स्वयंप्रभा ।
सिन्धुकन्या स्थानदात्री द्वारकावासिनी तथा ॥ ४२ ॥

---

* विश्वोपप्लोति ख॰ ।

बुद्धिः स्थितिः स्थानरूपा सर्व्वकारणकारणा ।
भक्तिप्रिया भक्तगम्या भक्तानन्दप्रदायिनी ॥ ४३ ॥
भक्तकल्पद्रुमातीता तथातीतगुणा तथा ।
मनोऽधिष्ठातृदेवी च कृष्णप्रेमपरायणा ॥ ४४ ॥
निरामया सौम्यदात्री तथा मदनमोहनी ।
एकाऽनंशा शिवा क्षेमा दुर्गा दुर्गतिनाशिनी ॥ ४५ ॥
ईश्वरी सर्व्ववन्द्या च गोपनीया शुभङ्करी ।
पालिनी सर्व्वभूतानां तथा कामाङ्गहारिणी ॥ ४६ ॥
सद्यो मुक्तिप्रदा देवी वेदसारा परात्परा ।
हिमालयसुता सर्व्वा पार्व्वती गिरिजा सती ॥ ४७ ॥
दक्षकन्या देवमाता मन्दलज्जा हरेस्तनुः ।
वृन्दारण्यप्रिया वृन्दा वृन्दावनविलासिनी ॥ ४८ ॥
विलासिनी वैष्णवी च ब्रह्मलोकप्रतिष्ठिता ।
रुक्मिणी रेवती सत्यभामा जाम्बवती तथा ॥ ४९ ॥
सुलक्षणा मित्रविन्दा कालिन्दी जह्नुकन्यका ।
परिपूर्णा पूर्णतरा तथा हैमवती गतिः ॥ ५० ॥
अपूर्व्वा ब्रह्मरूपा च ब्रह्माण्डपरिपालिनी ।
ब्रह्माण्डभाण्डमध्यस्था ब्रह्माण्डभाण्डरूपिणी ॥ ५१ ॥
अण्डरूपाऽण्डमध्यस्था तथाण्डपरिपालिनी ।
अण्डबाह्याऽण्डसंहर्त्री शिवब्रह्महरिप्रिया ॥ ५२ ॥
महाविष्णुप्रिया कल्पवृक्षरूपा निरन्तरा ।
सारभूता स्थिरा गौरी गौराङ्गी शशिशेखरा ॥ ५३ ॥

श्वेतचम्पकवर्णाभा शशिकोटिसमप्रभा ।
मालतीमाल्यभूषाढ्या मालतीमाल्यधारिणी ॥ ५४ ॥
कृष्णस्तुता कृष्णकान्ता वृन्दावनविलासिनी ।
तुलस्यधिष्ठातृदेवी संसारार्णवपारदा ॥ ५५ ॥
सारदाऽऽहारदाऽम्भोदा यशोदा गोपनन्दिनी ।
अतीतगमना गौरी परानुग्रहकारिणी ॥ ५६ ॥
करुणार्णवसम्पूर्णा करुणार्णवधारिणी ।
माधवी माधवमनोहारिणी श्यामवल्लभा ॥ ५७ ॥
अन्धकारभयध्वस्ता मङ्गल्या मङ्गलप्रदा ।
श्रीगर्भा श्रीप्रदा श्रीशा श्रीनिवासाऽच्युतप्रिया ॥ ५८ ॥
श्रीरूपा श्रीहरा श्रीदा श्रीकामा श्रीस्वरूपिणी ।
श्रीदामानन्ददात्री च श्रीदामेश्वरवल्लभा ॥ ५९ ॥
श्रीनितम्बा श्रीगणेशा श्रीस्वरूपाश्रिता श्रुतिः ।
श्रीक्रियारूपिणी श्रीला श्रीकृष्णभजनान्विता ॥ ६० ॥
श्रीराधा श्रीमती श्रेष्ठा श्रेष्ठरूपा श्रुतिप्रिया ।
योगेशा योगमाता च योगातीता युगप्रिया ॥ ६१ ॥
योगप्रिया योगगम्या योगिनीगणवन्दिता ।
जवाकुसुमसङ्काशा दाडिमीकुसुमोपमा ॥ ६२ ॥
नीलाम्बरधरा धीरा धैर्यरूपधरा धृतिः ।
रत्नसिंहासनस्था च रत्नकुण्डलभूषिता ॥ ६३ ॥
रत्नालङ्कारसंयुक्ता रत्नमाल्यधरा परा ।
रत्नेन्द्रसारहाराढ्या रत्नमालाविभूषिता ॥ ६४ ॥

इन्द्रनीलमणिन्यस्तपादपद्मशुभा शुचिः ।
कार्त्तिकी पौर्णमासी च अमावस्या भयापहा ॥ ६५ ॥
गोविन्दराजगृहिणी गोविन्दगणपूजिता ।
वैकुण्ठनाथगृहिणी वैकुण्ठपरमालया ॥ ६६ ॥
वैकुण्ठदेवदेवाढ्या तथा वैकुण्ठसुन्दरी ।
महालसा वेदवती सीता साध्वी पतिव्रता ॥ ६७ ॥
अन्नपूर्णा सदानन्दरूपा कैवल्यसुन्दरी ।
कैवल्यदायिनी श्रेष्ठा गोपीनाथमनोहरा ॥ ६८ ॥
गोपीनाथेश्वरी चण्डी नायिकानयनान्विता ।
नायिका नायकप्रीता नायकानन्दरूपिणी ॥ ६९ ॥
शेषा शेषवती शेषरूपिणी जगदम्बिका ।
गोपालपालिका माया जायाऽऽनन्दप्रदा तथा ॥ ७० ॥
कुमारी यौवनानन्दा युवती गोपसुन्दरी ।
गोपमाता जानकी च जनकानन्दकारिणी ॥ ७१ ॥
कैलासवासिनी रम्भा वैराग्यकुलदीपिका ।
कमलाकान्तगृहिणी कमला कमलालया ॥ ७२ ॥
त्रैलोक्यमाता जगतामधिष्ठात्री प्रियाऽम्बिका ।
हरकान्ता हररता हरानन्दप्रदायिनी ॥ ७३ ॥
हरपत्नी हरप्रीता हरतोषणतत्परा ।
हरेश्वरी रामरता रामा रामेश्वरी रमा ॥ ७४ ॥
श्यामला चित्रलेखा च तथा भुवनमोहिनी ।
सगोपी गोपवनिता गोपराज्यप्रदा शुभा ॥ ७५ ॥

अङ्गावपूर्णा माद्रेयी मत्स्यराजसुता सती।
कौमारी नारसिंही च वाराही नवदुर्गिका ॥ ७६ ।
चञ्चला चञ्चलामोदा नारी भुवनसुन्दरी।
दक्षयज्ञहरा दाक्षी दक्षकन्या सुलोचना ॥ ७७ ॥
रतिरूपा रतिप्रीता रतिश्रेष्ठा रतिप्रदा।
रतिर्लक्ष्मणगेहस्था विरजा भुवनेश्वरी ॥ ७८ ॥
शङ्कास्पदा हरेर्जाया जामातृकुलवन्दिता।
वकुला वकुलामोदधारिणी यमुना जया ॥ ७९ ॥
विजया जयपत्नी च जमलार्ज्जुनभञ्जिनी।
वक्रेश्वरी वक्ररूपा वक्रवीक्षणवीक्षिता ॥ ८० ॥
अपराजिता जगन्नाथा जगन्नाथेश्वरी यतिः।
खेचरी खेचरसुता खेचरत्वप्रदायिनी ॥ ८१ ॥
विष्णुवक्षःस्थलस्था च विष्णुभावनतत्परा।
चन्द्रकोटिसुगात्री च चन्द्राननमनोहरा ॥ ८२ ॥
सेवा सेव्या शिवा क्षेमा तथा क्षेमकरी वधूः।
यादवेन्द्रवधूः सेव्या शिवभक्ता शिवान्विता ॥ ८३ ॥
केवला निष्फला सूक्ष्मा महाभीमाऽभयप्रदा।
जीमूतरूपा जैमूती जितामित्रप्रमोदिनी ॥ ८४ ॥
गोपालवनिता नन्दा कुलजेन्द्रनिवासिनी।
जयन्ती यमुनाङ्गी च यमुनातोयकारिणी ॥ ८५ ॥
कलिकल्मषभङ्गा च कलिकल्मषनाशिनी।
कलिकल्मषरूपा च नित्यानन्दकरी कृपा ॥ ८६ ॥

कृपावती कुलवती कैलासाचलवासिनी ।
वामदेवी वामभागा गोविन्दप्रियकारिणी ॥ ८७ ॥
नरेन्द्रकन्या योगेशी योगिनी योगरूपिणी ।
योगसिद्धा सिद्धरूपा सिद्धिक्षेत्रनिवासिनी ॥ ८८ ॥
क्षेत्राधिष्ठातृरूपा च क्षेत्रातीता कुलप्रदा ।
केशवानन्ददात्री च केशवानन्ददायिनी ॥ ८९ ॥
केशवा केशवप्रीता केशवी केशवप्रिया ।
रासक्रीडाकरी रासवासिनी राससुन्दरी ॥ ९० ॥
गोकुलान्वितदेहा च गोकुलत्वप्रदायिनी ।
लवङ्गनाम्नी नारङ्गी नारङ्गकुलमण्डना ॥ ९१ ॥
एलालवङ्गकर्पूरमुखवासमुखान्विता ।
मुख्या मुख्यप्रदा मुख्यरूपा मुख्यनिवासिनी ॥ ९२ ॥
नारायणी कृपातीता करुणामयकारिणी ।
कारुण्या करुणा कर्णा गोकर्णा नागकर्णिका ॥ ९३ ॥
सर्पिणी कौलिनी क्षेत्रवासिनी जगदन्वया ।
जटिला कुटिला नीला नीलाम्बरधरा शुभा ॥ ९४ ॥
नीलाम्बरविधात्री च नीलकण्ठप्रिया तथा ।
भगिनी भागिनी भोग्या कृष्णभोग्या भगेश्वरी ॥ ९५ ॥
बलेश्वरी बलाराध्या कान्ता कान्तनितम्बिनी ।
नितम्बिनी रूपवती युवती कृष्णपीवरी ॥ ९६ ॥
विभावरी वेत्रवती सङ्कटा कुटिलालका ।
नारायणप्रिया शैला सृक्कणीपरिमोहिता ॥ ९७ ॥

हृक्‌पातमोहिता प्रातराशिनी नवनीतिका।
नवीना नवनारी च नारङ्गफलशोभिता ॥ ९८ ॥
हैमी हेममुखी चन्द्रमुखी शशिसुशोभना।
अर्द्धचन्द्रधरा चन्द्रवल्लभा रोहिणी तमिः ॥ ९९ ॥
तिमिङ्गिलकुलामोदमत्स्यरूपाऽङ्गहारिणी।
कारणी सर्व्वभूतानां कार्य्यातीता किशोरिणी ॥ १०० ॥
किशोरवल्लभा केशकारिका कामकारिका।
कामेश्वरी कामकला कालिन्दीकुलदीपिका ॥ १०१ ॥
कलिन्दतनयातीरवासिनी तीरगेहिनी।
कादम्बरीपानपरा कुसुमामोदधारिणी ॥ १०२ ॥
कुमुदा कुमुदानन्दा कृष्णेशी कामवल्लभा।
तर्कालीवैजयन्ती च निम्बदाडिम्बरूपिणी ॥ १०३ ॥
विल्लवृक्षप्रिया कृष्णाम्बरा विल्लोपमस्तनी।
विल्लात्मिका विल्लवपुर्विल्लवृक्षनिवासिनी ॥ १०४ ॥
तुलसीतोषिका तैतिलानन्दपरितोषिका।
गजमुक्ता महामुक्ता महामुक्तिफलप्रदा ॥ १०५ ॥
अनङ्गमोहिनी शक्तिरूपा शक्तिस्वरूपिणी।
पञ्चशक्तिस्वरूपा च शैशवानन्दकारिणी ॥ १०६ ॥
गजेन्द्रगामिनी श्यामलताऽनङ्गलता तथा।
योषित्‌शक्तिस्वरूपा च योषिदानन्दकारिणी ॥ १०७ ॥
प्रेमप्रिया प्रेमरूपा प्रेमानन्दतरङ्गिणी।
प्रेमहारा प्रेमदात्री प्रेमशक्तिमयी तथा ॥ १०८ ॥

कृष्णप्रेमवती धन्या कृष्णप्रेमतरङ्गिणी।
प्रेमभक्तिप्रदा प्रेमा प्रेमानन्दतरङ्गिणी ॥ १०९ ॥
प्रेमक्रीडापरीताङ्गी प्रेमभक्तितरङ्गिणी।
प्रेमार्थदायिनी सर्व्वश्वेता नित्यतरङ्गिणी ॥ ११० ॥
हावभावान्विता रौद्रा रुद्रानन्दप्रकाशिनी।
कपिला शृङ्खला केशपाशसम्बन्धिनी घटी ॥ १११ ॥
कुटीरवासिनी धूम्रा धूम्रकेशा जलोदरी।
ब्रह्माण्डगोचरा ब्रह्मरूपिणी भवभाविनी ॥ ११२ ॥
संसारनाशिनी शैवा शैवलानन्ददायिनी।
शिशिरा हेमरागाढ्या मेघरूपाऽतिसुन्दरी ॥ ११३ ॥
मनोरमा वेगवती वेगाढ्या वेदवादिनी।
दयान्विता दयाधारा दयारूपा सुसेविनी ॥ ११४ ॥
किशोरसङ्गसंसर्गा गौरचन्द्राननना कला।
कलाधिनाथवदना कलानाथाधिरोहिणी ॥ ११५ ॥
विरागकुशला हेमपिङ्गला हेममण्डना।
भाण्डीरतालवनगा कैवर्त्ती पीवरी-शुकी ॥ ११६ ॥
शुकदेवगुणातीता शुकदेवप्रिया सखी।
विकलोत्कर्षिणी कोषा कौषेयाम्बरधारिणी ॥ ११७ ॥
कौषावरी कोपरूपा जगदुत्पत्तिकारिका।
सृष्टिस्थितिकरी संहारिणी संहारकारिणी ॥ ११८ ॥
केशशैवलधात्री च चन्द्रगात्रा सुकोमला।
पद्माङ्गरागसंरागा विन्ध्याद्रिपरिवासिनी ॥ ११९ ॥

विन्ध्यालया श्यामसखी सखी संसाररागिणी ।
भूता भविष्या भव्या च भव्यगाचा भवातिगा ॥ १२० ॥
भवनाशान्तकारिण्याकाशरूपा सुवेशिनी ।
रतिरङ्गपरित्यागा रतिवेगा रतिप्रदा ॥ १२१ ॥
तेजस्विनी तेजरूपा कैवल्यपथदा शुभा ।
मुक्तिहेतुर्मुक्तिहेतुलङ्घिनी लङ्घनक्षमा ॥ १२२ ॥
विशालनेचा वैशाली विशालकुलसम्भवा ।
विशालगृहवासा च विशालवदरी रतिः ॥ १२३ ॥
भक्त्यतीता भक्तिगतिर्भक्तिका शिवभक्तिदा ।
शिवभक्तिस्वरूपा च शिवार्द्धाङ्गविहारिणी ॥ १२४ ॥
शिरीषकुसुमामोदा शिरीषकुसुमोज्ज्वला ।
शिरीषमृद्वी शैरीषी शिरीषकुसुमाकृतिः ॥ १२५ ॥
वामाङ्गहारिणी विष्णोः शिवभक्तिसुखान्विता ।
विजिता विजितामोदा गगणा गणतोषिता ॥ १२६ ॥
हयास्या हेरम्बसुता गणमाता सुखेश्वरी ।
दुःखहन्त्री दुःखहरा सेवितेप्सितसर्व्वदा ॥ १२७ ॥
सर्व्वज्ञत्वविधाची च कुलक्षेचनिवासिनी ।
लवङ्गा पाण्डवसखी सखीमध्यनिवासिनी ॥ १२८ ॥
ग्राम्या गीता गया गम्या गमनातीतनिर्भरा ।
सर्व्वाङ्गसुन्दरी गङ्गा गङ्गाजलमयी तथा ॥ १२९ ॥
गङ्गेरिता पूतगाचा पविचकुलदीपिका ।
पविचगुणशीलाढ्या पविचानन्ददायिनी ॥ १३० ॥

पवित्रगुणशीलाढ्या पवित्रकुलदीपनी।
कम्पमाना कंसहरा विन्ध्याचलनिवासिनी ॥ १३१ ॥
गोवर्द्धनेश्वरी गोवर्द्धनहास्या हयाकृतिः।
मीनावतारा मीनेशी गगनेशी हया गजी ॥ १३२ ॥
हरिणी हारिणी हारधारिणी कनकाकृतिः।
विद्युत्प्रभा विप्रमाता गोपमाता गयेश्वरी ॥ १३३ ॥
गवेश्वरी गवेशी च गवीशी गवि वासिनी।
गतिज्ञा गीतकुशला दनुजेन्द्रनिवारिणी ॥ १३४ ॥
निर्व्वाणधात्री नैर्व्वाणी हेतुयुक्ता गयोत्तरा।
पर्व्वताधिनिवासा च निवासकुशला तथा ॥ १३५ ॥
संन्यासधर्मकुशला संन्यासेशी शरन्मुखी।
शरच्चन्द्रमुखी श्यामहारा क्षेत्रनिवासिनी ॥ १३६ ॥
वसन्तरागसंरागा वसन्तवसनाकृतिः।
चतुर्भुजा षड्भुजा च द्विभुजा गौरविग्रहा ॥ १३७ ॥
सहस्रास्या विहास्या च मुद्रास्या मुददायिनी।
प्राणप्रिया प्राणरूपा प्राणरूपिण्यपावृता ॥ १३८ ॥
कृष्णप्रीता कृष्णरता कृष्णतोषणतत्परा।
कृष्णप्रेमरता कृष्णभक्ता भक्तफलप्रदा ॥ १३९ ॥
कृष्णप्रेमा प्रेमभक्ता हरिभक्तिप्रदायिनी।
चैतन्यरूपा चैतन्यप्रिया चैतन्यरूपिणी ॥ १४० ॥
उग्ररूपा शिवक्रोडा कृष्णक्रोडा जलोदरी।
महोदरी महादुर्गकान्तारसुस्थवासिनी ॥ १४१ ॥

चन्द्रावली चन्द्रकेशी चन्द्रप्रेमतरङ्गिणी।
समुद्रमथनोद्भूता समुद्रजलवासिनी ॥ १४२ ॥
समुद्रामृतरूपा च समुद्रजलवासिका।
केशपाशरता निद्रा क्षुधा प्रेमतरङ्गिका ॥ १४३ ॥
दूर्व्वादलश्यामतनुर्दूर्व्वादलतनुच्छविः।
नागरा नागरीरागा नागरानन्दकारिणी ॥ १४४ ॥
नागरालिङ्गनपरा नागराङ्गनमङ्गला।
उच्चनीचा हैमवतीप्रिया कृष्णतरङ्गदा ॥ १४५ ॥
प्रेमालिङ्गनसिद्धाङ्गी सिद्धसाध्यविलासिका।
मङ्गलामोदजननी मेखलामोदधारिणी ॥ १४६ ॥
रत्नमञ्जीरभूषाङ्गी रत्नभूषणभूषणा।
जम्बालमालिका कृष्णप्राणा प्राणविमोचना ॥ १४७ ॥
सत्यप्रदा सत्यवती सेवकानन्ददायिका।
जगद्योनिर्जगद्बीजा विचित्रमणिभूषणा ॥ १४८ ॥
राधारमणकान्ता च राध्या राधनरूपिणी।
कैलासवासिनी कृष्णप्राणसर्व्वस्वदायिनी ॥ १४९ ॥
कृष्णावतारनिरता कृष्णभक्तफलार्थिनी।
याचकायाचकानन्दकारिणी याचकोज्ज्वला ॥ १५० ॥
हरिभूषणभूषाढ्याऽऽनन्दयुक्ताऽऽर्द्रपादगा।
है है—तालधरा थै थै शब्दशक्तिप्रकाशिनी ॥ १५१ ॥
हेहे—शब्दस्वरूपा च हीही—वाक्यविशारदा।
जगदानन्दकर्त्री च सान्द्रानन्दविशारदा ॥ १५२ ॥

पण्डिता पण्डितगुणा पण्डितानन्दकारिणी ।
परिपालनकर्त्री च तथा स्थितिविनोदिनी ॥ १५३ ॥
तथा संहारशब्दाख्या विद्वज्जनमनोहरा ।
विदुषां प्रीतिजननी विद्वत्प्रेमविवर्द्धिनी ॥ १५४ ॥
नादेशी नादरूपा च नादबिन्दुविधारिणी ।
शून्यस्थानस्थिता शून्यरूपपादपवासिनी ॥ १५५ ॥
कार्त्तिकव्रतकर्त्री च वसनाहारिणी तथा ।
जलाशया जलतला शिलातलनिवासिनी ॥ १५६ ॥
क्षुद्रकीटाङ्गसंसर्गा सङ्गदोषविनाशिनी ।
कोटिकन्दर्पलावण्या कन्दर्पकोटिसुन्दरी ॥ १५७ ॥
कन्दर्पकोटिजननी कामबीजप्रदायिनी ।
कामशास्त्रविनोदा च कामशास्त्रप्रकाशिनी ॥ १५८ ॥
कामप्रकाशिका कामिन्यणिमाद्यष्टसिद्धिदा ।
यामिनी यामिनीनाथवदना यामिनीश्वरी ॥ १५९ ॥
यागयोगहरा भुक्तिमुक्तिदात्री हिरण्यदा ।
कपालमालिनी देवी धामरूपिण्यपूर्व्वदा ॥ १६० ॥
कृपान्विता गुणा गौण्या गुणातीतफलप्रदा ।
कुष्माण्डभूतवेतालनाशिनी शरदाऽन्विता ॥ १६१ ॥
शीतला शवला हेला लीला लावण्यमङ्गला ।
विद्यार्थिनी विद्यमाना विद्या विद्यास्वरूपिणी ॥ १६२ ॥
आन्वीक्षिकी शास्त्ररूपा शास्त्रसिद्धान्तकारिणी ।
नागेन्द्रा नागमाता च क्रीडाकौतुकरूपिणी ॥ १६३ ॥

हरिभावनशीला च हरितोषणतत्परा।
हरिप्राणा हरप्राणा शिवप्राणा शिवान्विता॥ १६४।
नरकार्णवसंहन्त्री नरकार्णवनाशिनी।
नरेश्वरी नरातीता नरसेव्या नराङ्गना॥ १६५॥
यशोदानन्दनप्राणवल्लभा हरिवल्लभा।
यशोदानन्दना रम्या यशोदानन्दनेश्वरी॥ १६६॥
यशोदानन्दना क्रीड़ा यशोदाक्रोड़वासिनी।
यशोदानन्दनप्राणा यशोदानन्दनार्थदा॥ १६७॥
वत्सला'कोशला काला करुणार्णवरूपिणी।
स्वर्गलक्ष्मीर्भूमिलक्ष्मीर्द्रौपदी पाण्डवप्रिया॥ १६८॥
तथार्जुनसखी भौमी भैमी भीमकुलोद्वहा।
भुवना मोहना क्षीणा पानासक्ततरा तथा॥ १६९॥
पानार्थिनी पानपात्रा पानपानन्ददायिनी।
दुग्धमन्थनकर्माढ्या दधिमन्थनतत्परा॥ १७०॥
दधिभाण्डार्थिनी कृष्णक्रोधिनी नन्दनाङ्गना।
घृतलिप्ता तक्रयुक्ता यमुनापारकौतुका॥ १७१॥
विचित्रकथका कृष्णहास्यभाषणतत्परा।
गोपाङ्गनावेष्टिता च कृष्णसङ्गार्थिनी तथा॥ १७२॥
रासासक्ता रासरतिरासवासक्तवासना।
हरिद्रा हरिता हारीण्यानन्दार्पितचेतना॥ १७३॥
निश्चैतन्या च निश्चेता तथा दारुहरिद्रिका।
सुबलस्य स्वसा कृष्णभार्या भाषातिवेगिनी॥ १७४॥

श्रीदामस्य सखी दाम दामिनी दामधारिणी ।
कैशोरिणी केशिनी च हरिदम्बरधारिणी ॥ १७५ ॥
हरिसान्निध्यदात्री च हरिकौतुकमङ्गला ।
हरिप्रदा हरिद्वारा यमुनाजलवासिनी ॥ १७६ ॥
जैत्रप्रदा जितार्थी च चतुरा चातुरी तमी ।
तमिस्राऽऽतपरूपा च रौद्ररूपा यशोऽर्थिनी ॥ १७७ ॥
कृष्णार्थिनी कृष्णकला कृष्णानन्दविधायिनी ।
कृष्णार्थवासना कृष्णरागिणी भवभाविनी ॥ १७८ ॥
कृष्णार्थरहिता भक्ता भक्तभक्तिशुभप्रदा ।
श्रीकृष्णरहिता दीना तथा विरहिणी हरेः ॥ १७९ ॥
मथुरा मथुराराजगेहभावनभावना ।
श्रीकृष्णभावनामोदा तथोन्मादविधायिनी ॥ १८० ॥
कृष्णार्थव्याकुला कृष्णसारचर्मधरा शुभा ।
अलकेश्वरपूज्या च कुबेरेश्वरवल्लभा ॥ १८१ ॥
धनधान्यविधात्री च जाया काया हया हयी ।
प्रणवा प्रणवेशी च प्रणवार्थस्वरूपिणी ॥ १८२ ॥
ब्रह्मविष्णुशिवार्धाङ्गहारिणी शैवशिंसपा ।
राक्षसीनाशिनी भूतप्रेतप्राणविनाशिनी ॥ १८३ ॥
सकलेप्सितदात्री च शची साध्वी अरुन्धती ।
पतिव्रता पतिप्राणा पतिवाक्यविनोदिनी ॥
अशेषसाधनी कल्पवासिनी कल्परूपिणी ॥ १८४ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे पञ्चमरात्रे श्रीराधिकानामसहस्र पञ्चमोऽध्यायः ॥ ५ ॥

षष्ठोऽध्यायः ॥

श्रीमहादेव उवाच ।

इत्येतत् कथितं देवि राधानामसहस्रकं ।
यः पठेत् पाठयेद्वापि तस्य तुष्यति माधवः ॥ १ ॥
किन्तस्य यमुनाभिर्व्वा नदीभिः सर्व्वतः प्रिये ।
कुरुक्षेत्रादितीर्थैश्च यस्य तुष्टो जनार्द्दनः ॥ २ ॥
स्तोत्रस्यास्य प्रसादेन किं न सिद्ध्यति भूतले ।
ब्राह्मणो ब्रह्मवर्च्चस्वी क्षत्रियो जगतीपतिः ॥ ३ ॥
वैश्यो निधिपतिर्भूयात् शूद्रो मुच्येत जन्मतः ।
ब्रह्महत्यासुरापानस्तेयादेरतिपातकात् ॥ ४ ॥
सद्यो मुच्येत देवेशि सत्यं सत्यं न संशयः ।
राधानामसहस्रस्य समानं नास्ति भूतले ॥ ५ ॥
स्वर्गे वाप्यथ पाताले गिरौ वा जलतोऽपि वा ।
नातःपरं शुभं स्तोत्रं तीर्थं नातःपरं परं ॥ ६ ॥
एकादश्यां शुचिर्भूत्वा यः पठेत् सुसमाहितः ।
तस्य सर्व्वार्थसिद्धिः स्याच्छृणुयाद्वा सुशोभने ॥ ७ ॥
द्वादश्यां पौर्णमास्यां वा तुलसीसन्निधौ शिवे ।
यः पठेत् शृणुयाद्वापि तस्य तत्तत् फलं शृणु ॥ ८ ॥
अश्वमेधं राजसूयं बार्हस्पत्यं तथा त्रिक ।
अतिरात्रं वाजपेयमग्निष्टोमं तथा शुभं ॥ ९ ॥

कृत्वा यत् फलमाप्नोति श्रुत्वा तत्फलमाप्नुयात् ।
कार्त्तिके चाष्टमीं प्राप्य पठेद्वा शृणुयादपि ॥ १० ॥
सहस्रयुगकल्पान्तं वैकुण्ठवसतिं लभेत् ।
ततश्च ब्रह्मभवने शिवस्य भवने पुनः ॥ ११ ॥
सुराधिनाथभवने पुनर्याति सलोकतां ।
गङ्गातीरं समासाद्य यः पठेत् शृणुयादपि ॥ १२ ॥
विष्णोः सारूप्यमायाति सत्यं सत्य सुरेश्वरि ।
मम वक्त्रगिरेर्जाता पार्व्वतीवदनाश्रिता ॥ १३ ॥
राधानामसहस्राख्या नदी त्रैलोक्यपावनी ।
पठ्यते हि मया नित्यं भक्त्या शक्त्या यथोचितं ॥ १४ ॥
मम प्राणसमं ह्येतत् तव प्रीत्या प्रकाशितं ।
नाभक्ताय प्रदातव्यं पापण्डाय कदाचन ॥
नास्तिकायाविरागाय रागयुक्ताय सुन्दरि ॥ १५ ॥
तथा देयं महास्तोत्रं हरिभक्ताय शङ्करि ।
वैष्णवेषु यथाशक्ति दात्रे पुण्यार्थशालिने ॥ १६ ॥
राधा नाम सुधावारि मम वक्त्रसुधाम्बुधेः ।
उद्धृताऽसौ त्वया यत्नात् यतः त्वं वैष्णवाग्रणीः ॥ १७ ॥
विशुद्धसत्त्वाय यथार्थवादिने
द्विजस्य सेवानिरताय मन्त्रिणे ।
दात्रे यथाशक्ति सुभक्तमानसे
राधापदध्यानपराय शोभने ॥ १८ ॥
हरिपादाब्जमधुपमनोभूताय मानसे ।

राधापादसुधास्वादशालिने वैष्णवाय च ॥ १९ ॥
दद्यात् स्तोत्रं महापुण्यं हरिभक्तिप्रसाधनं ।
जन्मान्तरं न तस्यास्ति राधाकृष्णपदार्थिनः ॥ २० ॥
मम प्राणा वैष्णवा हि तेषां रक्षार्थमेव हि ।
शूलं मया धार्य्यते हि नान्यथा मेचकारणं ॥ २१ ॥
हरिभक्तिद्विषामर्थे शूलं संधार्य्यते मया ।
शृणु देवि यथार्थं मे गदितं त्वयि सुव्रते ॥ २२ ॥
भक्तासि मे प्रियासि त्वमदः स्नेहात् प्रकाशितं ।
कदापि नोच्यते देवि मया नामसहस्रकं ॥ २३ ॥
किं परं त्वां प्रवक्ष्यामि प्राणतुल्य मम प्रिये ।
स्तोत्रं मन्त्रं राधिकाया यन्त्रं कवचमेव हि ॥ २४ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे पञ्चमरात्रे षष्ठोऽध्यायः ॥ ६ ॥

---

सप्तमोऽध्याय. ॥



श्रीपार्वत्युवाच ॥

कैलासवासिन् भगवन् भक्तानुग्रहकारक ।
राधिकाकवचं पुण्य कथयस्व मम प्रभो ॥ १ ॥
यद्यस्ति करुणा नाथ त्राहि मां दुःखतो भयात् ।
त्वमेव शरणं नाथ शूलपाणे पिनाकधृक् ॥ २ ॥

श्रीमहादेव उवाच ।

शृणुष्व गिरिजे तुभ्यं कवचं पूर्व्वसूचितं ।
सर्व्वरक्षाकरं पुण्यं सर्व्वहत्याहरं परं ॥ ३ ॥
हरिभक्तिप्रदं साक्षात् भक्तिमुक्तिप्रसाधनं ।
त्रैलोक्याकर्षणं देवि हरिसान्निध्यकारकं ॥ ४ ॥
सर्व्वत्र जयदं देवि सर्व्वशत्रुभयावहं ।
सर्व्वेषाञ्चैव भूतानां मनोहत्तिकरं परं ॥ ५ ॥
चतुर्व्वर्गमुक्तिजनकं सदानन्दकरं परं ।
राजसूयाश्वमेधानां यज्ञानां फलदायकं ॥ ६ ॥
इदं कवचमज्ञात्वा राधामन्त्रञ्च यो जपेत् ।
स नाप्नोति फलन्तस्य विघ्नस्तस्य पदे पदे ॥ ७ ॥
ऋषिरस्य महादेवोऽनुष्टुप्छन्दश्च कीर्त्तितः ।
राधाऽस्य देवता प्रोक्ता रां—वीजं कीलकं स्मृतं ॥ ८ ॥
धर्म्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः ।
श्रीराधा मे शिरः पातु ललाटं राधिका तथा ॥ ९ ॥
श्रीमती नेत्रयुगलं कर्णौ गोपेन्द्रनन्दिनी ।
हरिप्रिया नासिकाञ्च भ्रूयुगं शशिशोभना ॥ १० ॥
ओष्ठं पातु कृपा देवी अधरं गोपिका तथा ।
वृषभानुसुता दन्तान् चिवुकं गोपनन्दिनी ॥ ११ ॥
चन्द्रावली पातु गण्डं जिह्वां कृष्णप्रिया तथा ।
कण्ठं पातु हरिप्राणा हृदयं विजया तथा ॥ १२ ॥
बाहू द्वौ चन्द्रवदना उदरं सुवलस्वसा ।

कोटियोगान्विता पातु पादौ सौभद्रिका तथा ॥ १३
नखान् चन्द्रमुखी पातु गुल्फौ गोपालवल्लभा ।
नखान् विधुमुखी देवी गोपी पादतलं तथा ॥ १४ ॥
शुभप्रदा पातु पृष्ठं कक्षौ श्रीकान्तवल्लभा ।
जानुदेशं जया पातु हरिणी पातु सर्व्वतः ॥ १५ ॥
वाक्यं वाणी सदा पातु धनागारं धनेश्वरी ।
पूर्व्वान्दिशं कृष्णरता कृष्णप्राणा च पश्चिमां ॥ १६ ॥
उत्तरां हरिता पातु दक्षिणां वृषभानुजा ।
चन्द्रावली नैशमेव दिवा क्ष्वेडितमेखला ॥ १७ ॥
सौभाग्यदा मध्यदिने सायाह्ने कामरूपिणी ।
रौद्री प्रातः पातु मां हि गोपिनी रजनीक्षये ॥ १८ ॥
हेतुदा सङ्गवे पातु केतुमाला दिवार्द्धके ।
शेषाऽपराह्नसमये शमिता सर्व्वसन्धिषु ॥ १९ ॥
योगिनी भोगसमये रतौ रतिप्रदा सदा ।
कामेशी कौतुके नित्यं योगे रत्नावली मम ॥ २० ॥
सर्व्वदा सर्व्वकार्य्येषु राधिका कृष्णमानसा ।
इत्येतत् कथितं देवि कवचं परमाद्भुतं ॥ २१ ॥
सर्व्वरक्षाकरं नाम महारक्षाकरं परं ।
प्रातर्मध्याह्नसमये सायाह्ने प्रपठेद्यदि ॥ २२ ॥
सर्वार्थसिद्धिस्तस्य स्यात् यद्यन्मनसि वर्त्तते ।
राजद्वारे सभायाञ्च संग्रामे शत्रुसङ्कटे ॥ २३ ॥
प्राणार्थनाशसमये यः पठेत् प्रयतो नरः ।

तस्य सिद्धिर्भवेद्देवि न भयं विद्यते क्वचित् ॥ २५ ॥
आराधिता राधिका च तेन सत्यं न संशयः ।
गङ्गास्नानात् हरेर्नामग्रहणाद्यत् फलं लभेत् ॥ २६ ॥
तत् फलं तस्य भवति यः पठेत् प्रयतः शुचिः ।
हरिद्रारोचनाचन्द्रमण्डितं हरिचन्दनं ॥ २७ ॥
कृत्वा लिखित्वा भूर्ज्जे च धारयेत् मस्तके भुजे ।
कण्ठे वा देवदेवेशि स हरिर्नात्र संशयः ॥ २८ ॥
कवचस्य प्रसादेन ब्रह्मा सृष्टिं स्थितिं हरिः ।
संहारञ्चाहं नियतं करोमि कुरुते तथा ॥ २९ ॥
वैष्णवाय विशुद्धाय विरागगुणशालिने ।
दद्यात् कवचमव्यग्रमन्यथा नाशमाप्नुयात् ॥ ३० ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे पञ्चमरात्रे सर्व्वरक्षाकरं राधाकवचं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

अष्टमोऽध्यायः ॥



श्रीनारद उवाच ॥

महादेव महादेव देवदेव जगत्पते ।
मन्त्रार्थं कृष्णमन्त्राणां गूढं राधामनुं प्रभो ॥
वक्तुमर्हसि देवेश भक्तं मां भक्तिवत्सल ॥ १ ॥

श्रीमहादेव उवाच।

कृष्णमन्त्रार्थमेवाशु वक्ष्यामि शृणु नारद।
ककारात् सृष्टिरूपोऽसौ लकारात् स्थितिरेव च॥२॥
संहारात् ईं भवेन्नित्यं निर्व्वाणाद्बिन्दुरेव च।
ककाराद्भीतिमापन्ना यमदूता भवन्ति हि॥३॥
ऋकारात् पातकानि स्युः पलायनपराणि च।
षकारोच्चारणात् सर्व्वं भूता राक्षसपन्नगाः॥४॥
विद्रवन्ति भयार्त्ता वै णकाराद्रोगराशयः।
अकारात् सर्व्वतः शान्तिरेष कल्पद्रुमो मनुः॥५॥
ककारो मुखचन्द्रोऽस्य ऋकारो नेत्रमण्डलं।
षकारो बाहुयुगलं णकारः पादमेव च॥६॥
अकारः सर्व्वगात्राणि शृणुष्व द्विजसत्तम।
पुनरन्यत् प्रवक्ष्यामि शृणुष्व द्विजसत्तम॥७॥
ककाराद्ब्रह्मरूपत्वात् सृष्टिकर्त्ता जनार्द्दनः।
ऋकारात् सृष्टिकर्त्ताऽसौ वेदवेद्यो हरिः स्वयं॥८॥
षकारात् शिवरूपत्वात् सृष्टिस्थित्यन्तकारकः।
णकारात् श्वेतरूपत्वात् निर्व्वाणफलदायकः॥९॥
अगद्बीजसर्व्वमायाविसर्गः परिकीर्त्तितः।
कृष्णनामार्थ एवोक्तः परं शृणु महामते॥१०॥
मा लक्ष्मीः प्रोच्यते वेदे धवस्तस्याः पतिर्हरिः।
अतो माधवनामाऽसौ प्रोच्यते पुरुषोत्तमः॥११॥
मा शोभा तेजसो मूर्त्तिर्निराकारस्य तेजसः।

धवस्तस्य हरिः साक्षान्माधवोऽसौ प्रकीर्त्तितः ॥ १२ ॥
विष्णुर्विभवनत्वाच्च व्यापकत्वाच्च नारद ।
भावनत्वाच्च वर्णानां विष्णुरेव ततः स्मृतः ॥ १३ ॥
काशो दीप्तिमतो यस्मात् प्रकाशः सर्व्वजन्मनां ।
प्रभुः प्रभवनत्वाच्च ततः काशः प्रभुः स्मृतः ॥ १४ ॥
चैतन्यभूतो जीवानां यतश्चैतन्यवर्ज्जिताः ।
जडीभूता भवन्तीह चैतन्यस्तु ततः स्मृतः ॥ १५ ॥
सेवते एष वा भूत्वा यस्मिन् कृष्णशरीरतः ।
अतः केशवनामाऽसौ सेव्यते पुरुषः परः ॥ १६ ॥
हृषीकाणामिन्द्रियाणामीशः संप्रोच्यते यतः ।
अतो नारद लोकेऽस्मिन् हृषीकेश इति स्मृतः ॥ १७ ॥
जनानर्द्दयते यस्मात् प्रलये महति द्विज ।
अतः स प्रोच्यते वेदे जनार्द्दन इति प्रभुः ॥ १८ ॥
नारा जलमिति प्रोक्ता अयनं तस्य ता यतः ।
अतो नारायणो नाम गीयते पुरुषोत्तमः ॥ १९ ॥
नारं नरसमूहे च अयनं ते यतः प्रभो ।
अयनं स साक्षिभूतो यतो नारायणः परः ॥ २० ॥
गां पृथ्वीं स्वर्गमेवाथ वाचं वा पशवोऽपिवा ।
तेजसो वा पालकोऽसौ गोपालस्तु ततः स्मृतः ॥ २१ ॥
बालकत्वाच्च बालोऽसौ कृष्णवर्णगतो यतः ।
बालकृष्ण इति प्रोक्तो यतोऽसौ पुरुषस्तमः ॥ २२ ॥
वाशब्दबोधे वायुश्च स्वादान—ग्रहणेन च ।

ककारो ब्रह्मणो रूपमतो बालक उच्यते ॥ २३ ॥
कर्त्ता हर्त्ता पालयिता दाता भोक्ता कृपामयः।
नाथोऽयं जगतां यस्मात् जगन्नाथस्ततः स्मृतः ॥ २४ ॥
हरिर्हरणशीलत्वात् पापानां दुःखयोनिनां।
नरसिंहवपुर्यस्मादतो ब्रह्मन् हरिः स्मृतः ॥ २५ ॥
न च्यवन्ति यतो भक्ता महति प्रलये सति।
अतोऽच्युतः स विश्वात्मा गीयते पुरुषोत्तमः ॥ २६ ॥
च्युतिहीनोऽव्ययो यस्मादथवाच्युत इष्यते।
जगतामादिभूतश्च मध्यश्चान्तश्च यः स्मृतः ॥ २७ ॥
अतो वेदे पुराणे च अनादिः परिकीर्त्तितः।
गवामिन्द्रः स्मृतो यस्माद्वाचामिन्द्रस्ततःपरं ॥ २८ ॥
अतो गोविन्द इति च कीर्त्यते वेदवादिभिः।
इति नामरहस्यं ते गदितं परमाद्भुतं ॥ २९ ॥
नास्त्यन्तं नामतत्त्वस्य याथार्थ्यं मुनिपुङ्गव।
यदि पृथिव्या धूल्यादेर्गणनाकरणक्षमः ॥ ३० ॥
भविष्यति तथापीशो नाम्नां नैव तु शक्यते।
जन्मान्तरसहस्रेषु नैव नैव द्विजोत्तम ॥ ३१ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे पञ्चमरात्रे सप्तनामरहस्य

नवमोऽध्यायः ॥



नारद उवाच ।

अधुना श्रोतुमिच्छामि रहस्यं परमाद्भुतं ।
ये ये मन्त्राश्च श्रीमत्या राधिकायाः सुगोपिताः ।
तन्मे ब्रूहि महादेव यद्यनुग्राह्यतां मयि ॥ १ ॥

महादेव उवाच ।

शृणु नारद वक्ष्यामि पार्व्वत्यै यत् प्रकाशितं ।
नैव तत्त्वां प्रवच्यामि शृणुष्व गदतो मम ॥ २ ॥
वह्निवीजं श्रोत्रयुक्तं तथा विन्दुविभूषितं ।
एतद्वीजं मुनिश्रेष्ठ वीजं त्रैलोक्यपूजितं ॥ ३ ॥
एकाक्षरोऽयं विप्रेन्द्र मनुः सर्व्वफलप्रदः ।
पुरश्चरणकर्म्मी जपेल्लक्षद्वयं सुधीः ॥ ४ ॥
अथान्यं मन्त्रराजन्तु शृणु कल्पद्रुमं महत् ।
निजवीजं ततो माया कामवीजमतः परं ॥ ५ ॥
राधायै वह्निजायान्तो मन्त्रोऽयं कल्पपादपः ।
प्रातःकृत्यादिकं सर्व्वं पूर्व्ववत् परिकल्पयेत् ॥ ६ ॥
यागस्थानं ततो गत्वा स्थानासनपरिग्रहं ।
भूतशुद्ध्यादिकं कृत्वा प्राणायामन्तु मूलतः ॥ ७ ॥
ऋषिरस्य महादेवो गायत्री छन्द एव च ।
देवता राधिका प्रोक्ता सर्व्वशास्त्रेषु गोपिता ॥ ८ ॥

एवं न्यासादिकं कृत्वा रां—बीजेनाङ्गकल्पना ।
ततो ध्यायेत् परां देवीं काञ्चनाभां वरप्रदां ॥ ९ ॥
किशोरीं कृष्णसहितां नीलाम्बरधरां शुभां ।
दक्षिणे धृतताम्बूलां पाणौ वामे समुद्गकं ॥ १० ॥
धारयन्तीं स्वर्णभूषां सदा कृष्णानुरागिणीं ।
कृष्णास्यनयनासक्तां हारनूपुरभूषितां ॥ ११ ॥
एवं ध्यात्वा मानसैस्तामुपचारैः समर्चयेत् ।
ततो ध्यात्वा पुनर्देवीं संस्थाप्य स्वपुरःस्थले ॥ १२ ॥
प्राणप्रतिष्ठामन्त्रेण प्राणान् प्राणेषु योजयेत् ।
ततः पाद्यादिकं दत्त्वा मूलमन्त्रेण मन्त्रवित् ॥ १३ ॥
यथाविधि धूपदीपनैवेद्यैः परिपूजयेत् ।
पुष्पाञ्जलिं पञ्चधा च दत्त्वा मन्त्रेण वैष्णवः ॥ १४ ॥
शुक्लपुष्पैः सदा पूज्या तुलसीपत्रसंयुता ।
करवीरं तथा पद्मं वकं काञ्चनमेव च ॥ १५ ॥
शुक्लैरक्तैस्तथा पूज्या अन्यथा न समाचरेत् ।
वैष्णवे सङ्गतिः कार्य्या वैष्णवे च सदा रतिः ॥ १६ ॥
जन्माष्टमीं समासाद्य रोहिणीसंयुता यदि ।
लभ्यते चोपवासो हि कर्त्तव्यः सर्व्वथा तदा ॥ १७ ॥
नालाभे रोहिणीभे च सप्तमीं परिवर्जयेत् ।
एवम्प्रकारतो ब्रह्मन् तथा गोष्ठाष्टमीं तिथिं ॥ १८ ॥
उपवासः सदा कार्य्यो नान्यथा सिद्धिदानिकृत् ।
वैष्णवो यदि भक्षीत एकादश्यां प्रमादतः ॥ १९ ॥

विष्णुवर्त्मनं दृथा तस्य नरकं घोरमाप्नुयात् ।
वरं पितृवधं ब्रह्मन् मातृणां गमनं वरं ॥ २० ॥
एकादश्यां वैष्णवस्तु न भुञ्जीत कदाचन ।
इत्येतत् कथितं सर्व्वं यत्पृष्टोऽहमिह द्विज ॥
हरेराश्चर्य्यभूतस्य किमन्यत् श्रोतुमिच्छसि ॥ २१ ॥

इति नारदपञ्चरात्रे ज्ञानामृतसारे पञ्चमरात्रे राधामन्त्रकथनं नवमोऽध्यायः ॥ ९ ॥

---

दशमोऽध्यायः ॥

---

नारद उवाच ।

अधुना श्रोतुमिच्छामि शरीरस्थं यथाक्रमं ।
का नाड्यः कतिधास्तत्र गतयो वायुसम्भ्रमाः ॥ १ ॥
विशेषेण महादेव वक्तुमर्हसि साम्प्रति ।
त्वदन्यः संशयस्यास्योच्छेत्ता नैवोपलभ्यते ॥ २ ॥

महादेव उवाच ।

शृणु नारद वक्ष्यामि योगधारणमुत्तमं ।
तिस्रःकोट्यस्तदर्द्धेन शरीरे नाड्यो मताः ॥ ३ ॥
तासु मुख्या दश प्रोक्तास्तासु तिस्रोऽप्यवस्थिताः ।
प्रधाना मेरुदण्डोऽत्र चन्द्रसूर्य्याग्निरूपिणी ॥ ४ ॥
शक्तिरूपा च सा नाडी साक्षादमृतविग्रहा ।
दक्षिणे पिङ्गलाख्या तु पुंरूपा सूर्य्यविग्रहा ॥ ५ ॥

दाडिमीकुसुमप्रख्या विपाख्या मुनिभिः स्मृता ।
मेरुमध्ये स्थिता या तु मूलदा ब्रह्मविग्रहा ॥ ६ ॥
सर्व्वतेजोमयी सा तु सुषुम्ना बहुरूपिणी ।
तस्या मध्ये विचित्राख्या अमृतस्राविणी शुभा ॥ ७ ॥
सर्व्वदेवमयी सा तु योगिनां हृदयङ्गमा ।
विसर्गाद्बिन्दुपर्य्यन्तं व्याप्य तिष्ठति तत्त्वतः ॥ ८ ॥
मूलाधारे त्रिकोणाख्ये इच्छाज्ञानक्रियात्मके ।
मध्ये स्वयम्भुलिङ्गन्तु कोटिसूर्य्यसमप्रभं ॥ ९ ॥
तदूर्द्ध्वं कामवीजन्तु कलशान्तीन्दुनादकं ।
तदूर्द्ध्वं तु शिखाकारा कुण्डली ब्रह्मविग्रहा ॥ १० ॥
तद्वाह्ये हेमवर्णाभं रसवर्णं चतुर्द्दलं ।
द्रुतहेमसमप्रख्यं पद्मं तत्र विभावयेत् ॥ ११ ॥
तदूर्द्ध्वेऽग्निसमप्रख्यं षड्दलं हीरकप्रभं ।
कादिचान्तषड्वर्णेन युक्ताधिष्ठानसंज्ञकं ॥ १२ ॥
मूलमाधाय षट्कोणं मूलाधारं ततो विदुः ।
स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः ॥ १३ ॥
तदूर्द्ध्वं नाभिदेशे तु मणिपूरं महत्प्रभं ।
मेघाभं विद्युताभञ्च बहुतेजोमयं ततः ॥ १४ ॥
मणिवद्भिन्नतत्पद्मं मणिपूरं तथोच्यते ।
दशभिश्चन्दनैर्युक्तं डादिफान्ताक्षरान्वितं ॥ १५ ॥
शिखेनाधिष्ठितं पद्मं विश्वलोकैककारणं ।
तदूर्द्ध्वेन स्थितं पद्ममुद्यदादित्यसन्निभं ॥ १६ ॥

कादिठान्ताक्षरैरर्कपत्रैश्चाढ्यमधिष्ठितं ।
तन्मध्ये बाणलिङ्गन्तु सूर्य्यायुतसमप्रभं ॥ १७ ॥
शब्दब्रह्ममयं शब्देनाहतं तत्र दृश्यते ।
तेनाहताख्यं पद्मन्तु मुनिभिः परिकीर्त्त्यते ॥ १८ ॥
आनन्दसदनं तत्तु पुरुषावेष्टितं परं ।
तदूर्द्धन्तु विशुद्धाख्यं दलषोडशपङ्कजं ॥ १९ ॥
स्वरैः षोडशकैर्युक्तं धूम्रवर्णं महत्प्रभं ।
विशुद्धं तनुते यस्माज्जीवस्याहं सलोकनात् ॥ २० ॥
विशुद्धं पद्ममाख्यातं आकाशाख्यं महत् परं ।
आज्ञाचक्रं तदूर्द्धे तु आत्मनाधिष्ठितं परं ॥ २१ ॥
आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीर्त्तितं ।
कैलासाख्ये तदूर्द्धे तु बोधनी तु तदूर्द्धतः ॥ २२ ॥
एवञ्च सर्वचक्राणि प्रोक्तानि तव सुव्रत ।
सहस्राराम्बुजं विन्दुस्थानं तदूर्द्धमीरितं ॥ २३ ॥
इत्येतत् कथितं सर्वं योगमार्गमनुत्तमं ।
आदौ पूरकयोगेन आधारे योजयेन्मनः ॥ २४ ॥
गुदमेढ्रान्तरे शक्तिं तामक्रम्य प्रबोधयेत् ।
लिङ्गभेदक्रमेणैव विन्दुचक्रन्तु प्रापयेत् ॥ २५ ॥
शम्भुना तां परां शक्तिं एकीभावं विचिन्तयेत् ।
तत्रोत्थितामृतरसं द्रुतलाक्षारसोपमं ॥ २६ ॥
पाययित्वा च तां शक्तिं कृष्णाख्यां योगसिद्धिदां ।
षट्चक्रदेवतास्तत्र सन्तर्प्यामृतधारया ॥ २७ ॥

अनेन ध्यानमार्गेण मूलाधारं ततः सुधीः ।
एवमभ्यस्य चायम्य अहन्यहनि मारुत ॥ २८ ॥
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात् ।
पूर्व्वोक्तदूषिता मन्त्राः सर्व्वे सिद्ध्यन्ति नान्यथा ॥ २९ ॥
ये गुणाः सन्ति देवस्य पञ्चकल्पो विधायिनः ।
ते गुणाः साधकवरे भवन्त्येव न चान्यथा ॥ ३० ॥
इत्येतत् कथित सर्व्वं योगमार्गमनुत्तमं ।
इदन्तु धारणाध्यानं शृणुष्वावहितो मम ॥ ३१ ॥
दिक्कालाद्यनवच्छिन्ने कृष्णे चेतो विधाय च ।
तन्मयो भवति क्षिप्र जीवो ब्रह्मणि योजनात् ॥ ३२ ॥
अथवा समलं चित्तं यदा क्षिप्र न सिद्ध्यति ।
तदावयवसंयोगाद्योगी योगान् समभ्यसेत् ॥ ३३ ॥
पदाम्भोजे मनो दद्यात् नखकिञ्जल्कचिचिते ।
जङ्घायुग्मे तथा रामकदलीकाण्डशोभिते ॥ ३४ ॥
ऊरुद्वये मत्तहस्तिकरदण्डसमप्रभे ।
गङ्गावर्त्तगभीरे तु नाभौ सिद्धविले ततः ॥ ३५ ॥
उदरे वक्षसि तथा हरेः श्रीवत्सकौस्तुभे ।
पूर्णचन्द्रायुतप्रख्ये ललाटे चारुमण्डले ॥ ३६ ॥
शङ्खचक्रगदाम्भोजदोर्दण्डपरिमण्डिते ।
सहस्रादित्यसङ्काशे किरीटकुण्डलद्वये ॥ ३७ ॥

अथ हृत्पुण्डरीक ।

स्थाने स्थाने यजेन्मन्त्री विशुद्धमुद्धचेतसा ।

मनो निवेश्य कृष्णे वै तन्मयो भवति ध्रुवं ।
यावन्मनो लयं याति कृष्णे स्वात्मनि चिन्तयेत् ॥ ३८ ॥
तारादिष्टमनुं मन्त्री जपहोमं समभ्यसेत् ।
अतःपरं न किञ्चिच्च कृत्यमास्ते मनोहरे ॥ ३९ ॥
विदिते परतत्त्वे तु समस्तैर्नियमैरलं ।
तालवृन्तेन किं कार्य्यं लब्धे मलयमारुते ॥ ४० ॥
मन्त्राभ्यासेन योगेन ज्ञानं ज्ञानाय कल्पते ।
न योगेन विना मन्त्रो न मन्त्रेण विना हरिः ॥ ४१ ॥
द्वयोरभ्यासयोगो हि ब्रह्मसंसिद्धिकारणं ।
तमःपरिवृते गेहे घटो दीपेन दृश्यते ॥ ४२ ॥
एवं मायावृतो ह्यात्मा मनुना गोचरीकृतः ।
एवं ते कथितं ब्रह्मन्मन्त्रयोगमनुत्तमं ॥
दुर्लभं विषयासक्तैः सुलभं तादृशामपि ॥ ४३ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे पञ्चमरात्रे योगकथने दशमोऽध्यायः ॥ १० ॥

---

एकादशोऽध्यायः ॥

श्रीमहादेव उवाच ॥

अथ प्रकारान्तरं, तच्च शारदायां ॥

पश्चवत्यङ्गुलायाम शरीरमुभयात्मकं ।
गजध्वजान्तरे कन्दमुत्सेधादुव्यङ्गुलं विदुः ॥ १ ॥

तस्य द्विगुणविस्तारं वृत्तरूपेण शोभितं ।
नाड्यस्तत्र समुद्भूताः मुख्यास्तिस्रः प्रकीर्त्तिताः ॥ २ ॥
इडा वामे स्थिता नाडी पिङ्गला दक्षिणे मता ।
तयोर्मध्यगता नाडी सुषुम्ना तत्समाश्रिता ॥ ३ ॥
पादाङ्गुष्ठद्वयं याता शिवाख्या शिरसा पुनः ।
ब्रह्मस्थानं समापन्ना सोमसूर्य्याग्निरूपिणी ॥ ४ ॥
तस्य मध्यगता नाडी विचित्रा योगिदुर्लभा ।
ब्रह्मरन्ध्रं विदुस्तस्याः पद्मसूत्रनिभं परं ॥ ५ ॥
आधारांस्तु गतास्तत्र मतभेदादनेकधा ।
दिव्यमार्गमिम प्राहुरमृतानन्दकारकं ॥ ६ ॥
इडायां सञ्चलेच्चन्द्रः पिङ्गलायां दिवाकरः ।
जातौ तु योगनिद्रायां सुषुम्नायाञ्च तावुभौ ॥ ७ ॥
आधारकन्दमध्यस्थ त्रिकोणमतिसुन्दरं ।
ज्योतिषां निलयं दिव्यं प्राहुरागमवेदिनं ॥ ८ ॥
तत्र विद्युल्लताकारा कुण्डली परदेवता ।
परिस्फुरति सर्व्वात्मा सुप्ताहिसदृशाकृतिः ॥ ९ ॥
बिभर्त्ति कुण्डली शक्तिरात्मानं हंसमाश्रिता ।
हंसःप्राणाश्रयो नित्यं प्राणा नाडीपथाश्रयाः ॥ १० ॥
आधारादूर्द्ध्वतो वायुर्यथावत्सर्व्वदेहिनां ।
देहं प्राप्य स्वनाडीभिः प्रयाणं कुरुते वहिः ॥ ११ ॥
द्वादशाङ्गुलमानेन तस्मात् प्राण इति स्मृतः ।
रम्ये मृद्वासने शुद्धे पटाजिनकुशोत्तरे ॥ १२ ॥

यद्वैकमासनं योगी योगमार्गपरो भवेत्।
ज्ञात्वा भूतो यच देहे यथावत् प्राणवायुना ॥
तत्र भूतो यजेद्देहे दृढत्वावासये सुधीः ॥ १३ ॥

आसनभूतोदये प्रागुक्ते ॥

अङ्गुलीभिर्दृढं बध्वा करणानि समाहितः ।
अङ्गुष्ठाभ्यामुभे श्रोत्रे तर्जनीभ्यां विलोचने ॥ १४ ॥
नासारन्ध्रे च मध्याभ्यामन्याभिर्वदनं दृढं ।
बद्धाऽऽत्मप्राणमनसामेकत्वं समनुस्मरन् ॥ १५ ॥
धारयेन्मारुतं सम्यग्योगोऽयं योगिदुर्लभः ।
नादः सञ्जायते तस्य क्रमादभ्यस्यतः शनैः ॥ १६ ॥
स तु भृङ्गाङ्गनागीतसदृशःप्रथमो ध्वनिः ।
वंशिकांस्यानिलापूर्णं वंशभावानिलोपमं ॥ १७ ॥
घण्टारवसमं पश्चात् घनमेघस्तनोऽपरः ।
एवमभ्यस्यतः पुंसः संसारध्वान्तनाशनः ॥ १८ ॥
ज्ञानमुत्पद्यते सर्व्वं हंसक्षेपणमव्ययं ।
पुंप्रकृत्यात्मकौ प्रोक्तौ विन्दुसर्गौ मनीषिभिः ॥ १९ ॥
ताभ्यां क्रमात् समुद्भूतौ विन्दुसर्गावसानकौ ।
हंसौ हंसप्रकृत्याख्यौ हंसवान् प्रकृतिस्तु सः ॥ २० ॥
अजपा कथिता ताभ्यां जीवो यामुपतिष्ठते ।
पुरुषत्वाश्रयं मत्वा प्रकृतिर्न्नित्यमात्मनः ॥
यदा तद्भावमाप्नोति तदा सोऽहमिदं भवेत् ॥ २१ ॥
साकारार्णं लोपयित्वा प्रयत्नश्च ततः परं ।

सन्ध्यां कुर्य्यात् पूर्व्वरूपां तदासौ प्रणवो भवेत् ॥ २२ ॥
परानन्दमयं नित्यं चैतन्यैकगुणात्मकं ।
आत्माभेदस्थितं योगी प्रणवं भावयेत् सदा ॥ २३ ॥

आस्थाय वाचामतिदूरमाद्यं
वेद्यं स्वसंवेद्यगुणेन सन्तः ।
आत्मानमानन्दरसैकसिन्धुं
पश्यन्ति ते तारकमात्मनिष्ठाः ॥ २४ ॥

सत्यं हेतुविवर्ज्जितं श्रुतिगिरामाद्यं जगत्कारणं-
व्याप्तं स्थावरजङ्गमं निरुपमं चैतन्यमन्तर्गतं ।
आत्मानं रविचन्द्रवह्निवपुषं तारात्मकं सन्ततं
नित्यानन्दगुणालयं सुकृतिनः पश्यन्ति शुद्धेन्द्रियाः ॥ २५ ॥

अङ्गुष्ठमात्रं पुरुषं भजन्ते
चैतन्यमात्रं रविमण्डलस्थं ।
ध्यायन्ति दुग्धाब्धिभुजङ्गभोगे
शयानमाद्यं कमलासहायं ॥

प्रफुल्लनेत्रोत्पलमञ्जनाभं
चतुर्मुखेनाश्रितपादपद्मं ॥ २६ ॥

आम्नायगन्तृचरणं घननीलमुद्यत्-
श्रीवत्सकौस्तुभगदाम्बुजशङ्खचक्रं ।
हृत्पुण्डरीकनिलयं जगदेकमूल-
मालोकयन्ति कृतिनः पुरुषं पुराणं ॥ २७ ॥

नारद उवाच ।

इति मे योगशास्त्रस्य ज्ञातं माहात्म्यमुत्तमं ।
प्रकाशितञ्च यत्नेन ज्ञानामृतमिदं भुवि ॥ २८ ॥
बुधाः पिबत यत्नेन परं ब्रह्म रसायनं ।
पीत्वेदममृतं भूयो मृतं जन्म न विद्यते ॥ २९ ॥
येऽभ्यस्यन्ति त्विदं शास्त्रं पठन्ति पाठयन्ति वा ।
सिद्धयोऽष्टौ करे तस्य धनधान्यादिसम्पदः ॥ ३० ॥
आदृताः सर्व्वशास्त्रेषु भोगिनः क्षोभकारकाः ।
आप्नुवन्ति परं ब्रह्म सर्व्वशास्त्रविशारदाः ॥ ३१ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे पञ्चमरात्रे योगप्रकरणं नाम एकादशोऽध्यायः ॥ ११ ॥

समाप्तञ्चेदं पञ्चमरात्रं ॥